श्रीरस्तु ।

श्रीमते रामानुजाय नमः

विशिष्टाद्वैतसिद्धान्तनिर्धारणधुरन्धर भगवद्रामानुजविरचितैः नवनिधिकल्पैः नवरत्ननिर्विशेषैः वेदार्थसंग्रह —शारीरकमीमांसाभाष्य—वेदान्तदीप—वेदान्तसार—गीताभाष्य—शरणागतिगद्य—श्रीरङ्गगद्य—श्रीवैकुण्ठगद्य—नित्यग्रन्थसमाख्यैर्नवभिः अनघैरनर्घैश्च महाग्रन्थैस्समलंकृता

# ※ श्री भगवद्रामानुजग्रन्थमाला ※

— प्रकाशकः —

वेदवेदान्तवैजयन्तीविद्यालयाध्यक्षः

श्री जगदाचार्यसिंहासनाधीशः

※ श्रीकाञ्ची प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः

— परिष्कारकः —

न्यायवेदान्तविद्वान् M A उपाधिविभूषितः

※ अक्कारक्कनि - सम्पत्कुमाराचार्यः ।

एतन्मूल्यम्— पञ्चदशमुद्रामात्रम्

प्राप्तिस्थानम् :—

ग्रन्थमाला आफीस, काञ्चीपुरम् ।

16-4-1956·

SRI RAMANUJA'S
NINE VALUABLE WORKS

Vedartha Sangraha - Sariraka Mimamsa Bhashya
Vedantha Deepa - Vedanta Sara - Geetha
Bhashya - Saranagathi Gadya - Sri Ranga
Gadya - Sri Vaikunta Gadya - Nitya
Grantham are contained in

# SRI BHAGAVAD RAMANUJA GRANTHAMALA

*Editor :*

**Sri Kanchi P. B. ANNANGARACHARYA SWAMY**

PRICE Rs. 15 ONLY

*Apply to:* **Granthamala Office, Kancheepuram**

**1956.**

" तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणाम् अन्तर्ज्वरमशीशमत् ॥



" रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥ "

## — ग्रन्थमालाया अस्या अवतरणे महोपकारका अमी —

— :*: —

१. श्रीमत्परमहंसेत्यादि तिरुक्कुरुङ्गुडिमठाधीशाः-पेररुळाळरामानुजयतीन्द्रस्वामिपादाः ।

२. श्रीजगन्नाथपुरी - श्रीराजगोपालमठाधीश-महन्त. पं. गदाधररामानुजस्वामि महोदयाः

३. श्रीजगन्नाथपुरी - विद्वद्वर-श्रीकुमारवेङ्कटाचार्यमठाधीशस्वामिपादाः

४. श्रीजगन्नाथपुरी त्रिमालीमठाधीश श्रीयुत. पं. संकर्षणाचार्यजी महात्मा

५- मथुरा प्रयागघाट - वेणीमाधवमन्दिराधीश. श्रीयुत पं. परांकुशाचार्यजी

६. बृन्दावन. श्रीहरिदेवजी मन्दिराधीश श्रीयुत पं. कमलनयनाचार्यजी

७. श्रीयुत सेठजी. राजा गोवर्धनलालजी पीती मोतीलाल बन्सीलाल हैद्राबाद.

८. श्रीमन्तः M. V. R. N. आचार्याः श्रीरामवैद्यशाला कलिङ्गपट्टणम् ।

९. मुम्बई, बडामन्दिर. पं गोस्वामि दीक्षितजी.

१०. मुम्बई. रवीन्द्र भाई मगनलाल प्रभुदासजी.

११. सेठजी बच्चूलालजी गंगाप्रसाद जावरा.

१२. सेठजी वेंकटलाल घासीराम हैद्राबाद.

१३. श्रीमान् वेंकटलालपसारी जालना ( नैजाम् )

१४. सीतारामयतीन्द्रजी श्रीकृष्णाश्रमम् पेदमुत्तेवि.

१५. विद्वान्. ते. कं. गोपालाचार्यः श्रीविशिष्टाद्वैत प्रचारक संघ कार्यदर्शी नडिगड्डपालें.

१६. सेठजी लक्ष्मीनारायण राधावल्लभकाबरा पिपरिया.

17. Sri M. Ananthasayanam Iyengar, speaker, Lok sabha, Delhi
18. Srimath Sir S. Varadacharya, Rtd. Federal Court Judge, Mylapore.
19. P. B. Srinivasachariar, B.A., B.L., Rtd. Commissioner of Income tax.
20. Sri T. A. (Aravamudu) Thathacharya Advocate, Kallakkurichi.
21. Sri V. V. Iyengar, Bombay.
22. R. L. Narayanayyangar, Calcutta.
23. Dr. V. Ramayyangar, T. Nagar, Madras.
24. Sri M. Sudarsanam Iyengar & Sons, Timber Merchants, Madras.
25. Sriyuth Settji Sri Ramji Kabara Pipariya.
26. Dr. K. Rangacharyulu, Hyderabad.
27. Rao Bahadur V. Ranganadham Chetty, Dharmakartha, Triplicane.
28. Sri A. N. Parasuramayyar, Principal, Minerwa College, Madras.
29. Srimathi M. A. Krishnammal, Advocate, Madras-5.
30. Sri Ramanujakootam Elayalwarayya, Glass Merchant, Madras.
31. Sri T. A. C. Srinivasavaradan, Deputy Commissioner, Jagadalpur.
32. Dr. Sir Padmabhooshana K. S. Krishnan, F. R. S. New Delhi.
33. Srimath C. S. Parthasarathi Iyengar, B.A., B.L, New Delhi.
34. Sri S. R. S. Raghavan, New Delhi.
35. Sri Sathaloori Pedda Rangacharlu, Korukonda.
36. Sri Vedala Venkatacharya, Rajanagaram,

## ॥ प्रकाशकस्य प्रणतिभरितं विज्ञापनम् ॥

विशिष्टाद्वैतसिद्धान्तपद्धतिबद्धादरा भो भो महाभागाः !

महत्तरमिदं जन्मसाफल्यप्रदं कैङ्कर्यं निर्व्यूढम् यदुत श्रीभगवद्रामानुजग्रन्थमालाया अस्याः प्रकाशनमिति सत्यं धन्यधन्यमात्मानं मन्यते दास एषः । निरवग्रहभगवद्भागवतानुग्रहभूम्नैव तदिदं सुमहत्तरं कैङ्कर्यं निष्प्रत्यूहं निष्पन्नमिति सन्तोषसीम्नि वर्तामहे । यद्यपि श्रीभाष्यादीनि नवैतानि ग्रन्थरत्नानि तत्र तत्र पृथक्पृथङ्मुद्रितान्येव सन्ति, तथाऽपि भगवद्रामानुजग्रन्थमालासमाख्यैकसम्पुटात्मना मुद्रणमिदानीन्तनो विशेषः । षोडशसंवत्सरतः पूर्वमस्माभिरेव आन्ध्राक्षरैरियं ग्रन्थमाला मुद्रिता द्राविडान्ध्रमण्डलेषु प्रसृमरप्रचारा वर्तत एव । परंतु सर्वजनीनदेवनागराक्षरैस्संमुद्रणं भूयोभिरास्तिकप्रवरैः पण्डितप्रकाण्डैः प्रतीक्षितं प्रार्थितं चेदानीं सुमहतैव प्रयासेन निर्व्यूढमभूत् । आन्ध्राक्षरैर्मुद्रितपूर्वाऽपि सेयं ग्रन्थमाला पञ्चषैर्वत्सरैरत्यन्तं दुर्लभतां गतेत्यनेनापि कारणेन मुद्रणमिदमधुना आवश्यकमभूत् ।

श्रीभगवद्रामानुजदिव्यग्रन्था व्याख्यानसनाथास्सन्तोऽपि दुरवगमभावबन्धा इति स्थिते वस्तुतत्त्वे मूलमात्रप्रकाशनमिदं कस्मै फलाय कल्पेतेति केचन महान्तो मन्येरन् । सत्यमेतत् । अर्थावबोधमन्तरेणापि श्रीभगवद्रामानुजदिव्यसूक्तीनां नित्यशः पारायणं भूयसे श्रेयसे कल्पेतेति, तत्राप्यशक्तानां सतां भगवदाराधनपेटिकायां प्रतिष्ठाप्य नित्यार्चनं वा भूयादिति च वस्तुत एतावन्तमेवाभिसन्धिमभिराममुद्वहन्नयं जन एवं मूलमात्रप्रकाशने व्यवसित इति वेदितव्यम् । गीताभाष्यव्याख्यानभूता श्रीमन्निगमान्तदेशिकैर्विरचिता तात्पर्यचन्द्रिका, तैरेव प्रणीतं शरणागतिगद्यादिगद्यत्रयभाष्यं च प्रागेवास्माभिर्वेदान्तदेशिकग्रन्थमालायां संमुद्रय प्रकाशिते अद्यापि सुलभे स्तः । वेदान्तदीप - वेदान्तसार - नित्यग्रन्थानां तु व्याख्यानं नैवावतीर्णम् । वेदार्थसंग्रह - श्रीभाष्ययोरुभयोरेव व्याख्यानं मुद्रणीयमवशिष्यते । क्रमेण तात्पर्यदीपिकायाः श्रुतप्रकाशिकायाश्च मुद्रणे महती समुत्कण्ठा जागर्ति नः । मनोरथसमुत्पादकः परमकारुणिको भगवान् श्रीहस्तिशैलशिखरोज्ज्वलपारिजात एव तत्पूरयिताऽपीति निर्भरास्स्मः ।

अस्या ग्रन्थमालाया मुद्रणम् अतीतजयनामसंवत्सरीय - कार्तिकमासे समुपक्रान्तं पञ्चष्वेव मासेषु समापयितुमभिसंहितमासीत् ; तेनैवाभिसन्धिना सोलापुरे श्रीरङ्गक्षेत्रे चेति स्थलद्वये मुद्रणमस्यास्संपादितम् । अथापि कार्यस्य सुमहत्त्वात् शोधनिकाया गतागतप्रयुक्तविलम्बस्यावर्जनीयत्वाच्च सप्तदशे मासि समाप्तिस्समघटत । मुद्रणागारद्वयकृतमुद्रणबलादेव अक्षरसन्निवेशे मात्रया भेदोऽपरिहार्यस्संवृत्तः । तेनैव हेतुना पुटाङ्कानुस्यूतिरपि वर्जनीयाऽभवत् । वेदार्थसंग्रहः, श्रीभाष्यम् , वेदान्तसारः इत्येते त्रयः प्रबन्धाः सोलापुरस्थवर्धमानमुद्रणालये सममुद्रयन्त । वेदान्तदीपः, गीताभाष्यम् , गद्यत्रयम्, नित्यग्रन्थश्च श्रीरङ्गस्थश्रीविलासमुद्रणागारे मुद्रयन्तेस्म । सूत्रानुक्रमणिका, प्रमाणानुक्रमणिका, गीतायाः पादानुक्रमणिकेत्यादिकं चात्र संयोजितमस्त्यनुबन्धरूपेण ।

अस्या ग्रन्थमालायाः संशोधनादिसर्वकार्यनिर्वहणार्थमतिमात्रं परिश्रमं षोडशसु मासेषु परमभोग्यं मत्वा स्वयंप्रयोजनत्वेनानुभूतवत्सु, चिरादेवास्मदीयानामेवंविधानां महत्तराणां कार्यवर्गाणां निर्वहणे निपुणेषु जागरूकेषु चास्मत्प्रियजामातृपादेषु न्यायवेदान्तादिनानाविद्यानिधिषु M. A इत्युपाधिभूषितेषु च श्रीमत्सूभयवेदान्तप्रवर्तक श्रीशैलानन्तपूरुष ( अक्कारक्कनि ) सम्पत्कुमाराचार्येषु धन्यवादा उपह्रियन्ते । एतेषामेव जामातृपादानां सहयोगबलेनास्माकं मनोरथानामतटाः प्रवाहास्समेधन्ते सन्ततमिति विदन्तु विपश्चितः । निरतिशयया जाग्रत्तया निर्व्यूढेऽपि संशोधने केचिदक्षरदोषा अवशादत्र लब्धपदा अभूवन् ; ते प्राज्ञैः स्वयं समीकरणीया इति प्रार्थयामहे ।

श्रीकाञ्ची १ - ४ - ५६ इति श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यः

श्रीः

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः

श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजग्रन्थमालायाम्

# ॥ वेदार्थसंग्रहः ॥

अशेषचिदचिद्वस्तुशेषिणे शेषशायिने ।
निर्मलानन्तकल्याणनिधये विष्णवे नमः ॥

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत् परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।
श्रुतिन्यायापेतं जगति विततं मोहनमिदं तमो येनापास्तं स हि विजयते यामुनमुनिः ॥

अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः—जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः ॥

अस्य जीवात्मनोऽनाद्यविद्यासंचितपुण्यपापरूपकर्मप्रवाहहेतुकब्रह्मादिसुरनरतिर्यक्स्थावरात्मकचतुर्विधदेहप्रवेशकृततत्तदात्माभिमानजनितावर्जनीयभवभयविध्वंसनाय देहातिरिक्तात्मस्वरूप—तत्स्वभाव—तदन्तर्यामि-परमात्मस्वरूप-तत्स्वभाव-तदुपासन—तत्फलभूतात्मस्वरूपाविर्भावपूर्वकानवधिकातिशयानन्दब्रह्मानुभवज्ञापने प्रवृत्तं हि वेदान्तवाक्यजातम्- *तत्त्वमसि, *अयमात्मा ब्रह्म, *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः, *एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः, *तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन, *ब्रह्मविदाप्नोति परम्, *तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते* इत्यादिकम् ।

जीवात्मस्वरूपं देवमनुष्यादिप्रकृतिपरिणामविशेषरूपनानाविधभेदरहितं ज्ञानानन्दैकगुणम् । तस्यैतस्य कर्मकृतदेवादिभेदेऽपध्वस्ते स्वरूपभेदो वाचामगोचरः स्वसंवेद्यः, ज्ञानस्वरूपमित्येतावदेव निर्देश्यम् । तच्च सर्वेषामात्मनां समानम् ।

एवंविधचिदचिदात्मकप्रपञ्चस्योद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूतः समस्तहेयप्रत्यनीकतया [अनन्त] कल्याणैकतानतया च स्वेतरसमस्तवस्तुविलक्षणस्वरूपोऽनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वात्म—परब्रह्म-परज्योतिः-परतत्त्व—परमात्म -सदादिशब्दभेदैर्निखिलवेदान्तवेद्यो भगवान्नारायणः पुरुषोत्तमः इत्यन्तर्यामिस्वरूपम् ।

तस्य च वैभवप्रतिपादनपराः श्रुतयः स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्मतया निखिलनियमनं तच्छक्ति-तदंश-तद्विभूति-तद्रूप-तच्छरीर-तत्तनुप्रभृतिभिः शब्दैस्तत्सामानाधिकरण्येन च प्रतिपादयन्ति ।

तस्य वैभवप्रतिपादनपराणामेषां सामानाधिकरण्यादीनां विवरणे प्रवृत्ताः केचन निर्विशेषज्ञानमात्रमेव ब्रह्म, तच्च नित्यमुक्तस्वप्रकाशमपि तत्त्वमस्यादिसामानाधिकरण्यावगतजीवैक्यम्, ब्रह्मैवाज्ञं बध्यते मुच्यते च, निर्विशेषचिन्मात्रातिरेकीशेशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं जगन्मिथ्या, कश्चिद्बद्धः कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते, इतः पूर्वं केचन मुक्ता इत्ययमर्थो मिथ्या, एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि, तच्च शरीरं किमिति न व्यवस्थितम्, आचार्यो ज्ञानस्योपदेष्टा मिथ्या, प्रमाता च मिथ्या, शास्त्रं च मिथ्या, शास्त्रजन्यज्ञानं च मिथ्या, एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगम्यते-इति वर्णयन्ति ।

अपरे तु-अपहतपाप्मत्वादिसमस्तकल्याणगुणोपेतमपि ब्रह्म तेनैवैक्यावबोधेन केनचिदुपाधिविशेषेण संबद्धं बध्यते मुच्यते च ; नानाविधमलरूपपरिणामास्पदं च- इति व्यवस्थिताः ।

अन्ये पुनरैक्यावबोधयाथात्म्यं वर्णयन्तः स्वाभाविकापरिमितोदारगुणसागरं ब्रह्मैव सुरनरतिर्यक्स्थावरनारकिस्वर्ग्यपवर्गिचेतनैकस्वभावं स्वभावतो विलक्षणमविलक्षणं च वियदादिनानाविधमलरूपपरिणामास्पदं च- इति प्रत्यवतिष्ठन्ते ।

तत्र प्रथमपक्षे श्रुत्यर्थपर्यालोचनपरा दुष्परिहरान् दोषानुदाहरन्ति । तथा हि- प्रकृतपरामर्शितच्छब्दावगतस्य ब्रह्मणः स्वसङ्कल्पकृतजगदुदयविभवलयादयः * तदैक्षत बहु स्यां प्रजायेय* इत्यारभ्य *सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः* इत्यादिभिः पदैः प्रतिपादिताः, तत्संबन्धितया प्रकरणान्तरनिर्दिष्टाः सर्वज्ञता सर्वशक्तित्व-सर्वेश्वरत्व- सर्वप्रकारत्व- समाभ्यधिकनिवृत्ति- सत्यकामत्व- सत्यसङ्कल्पत्व - सर्वावभासकत्वाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणाः *अपहतपाप्मेत्याद्यनेकवाक्यावगतनिरस्तनिखिलदोषता च सर्वे तस्मिन् पक्षे विहन्यन्ते ।

अथ स्यात्-उपक्रमेऽप्येकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय तस्य कारणभूतस्यैव सत्यतां विकारजातस्य चासत्यतां मृदृष्टान्तेन दर्शयित्वा सत्यभूतस्यैव ब्रह्मणः *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, इति सजातीयविजातीयनिखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिता । एतच्छोधकानि प्रकरणान्तर [ गत ] वाक्यान्यपि *सत्यं ज्ञानमनन्तं ब्रह्म, *निष्कलम्, *निष्क्रियम्, *निर्गुणम्, *विज्ञानम्, * आनन्दमित्यादीनि सर्वविशेषप्रत्यनीकैकाकारतां बोधयन्ति । न च एकाकारतावबोधनेऽपि पदानां

पर्यायता; एकत्वेऽपि वस्तुनः सर्वविशेषप्रत्यनीकाकारत्वोपस्थापनेन सर्वपदानामर्थवत्त्वादिति।

नैतदेवम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति, सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वा। अपि त्वेकविज्ञानेन सर्ववि‌ज्ञा [नप्रतिज्ञा] नं सर्वस्य तदात्मकत्वेनैव सत्यत्वे सिध्यति।

अयमर्थः—श्वेतकेतुं प्रत्याह *स्तब्धोऽस्युत तमादेशमप्राक्ष्यः, इति, परिपूर्ण इव लक्ष्यसे तानाचार्यान्प्रति, तमप्यादेशं पृष्टवानसीति। आदिश्यतेऽनेनेत्यादेशः, आदेशः प्रशासनम्, *एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, इत्यादिभिरैकार्थ्यात्। तथा च मानवं वचः *प्रशासितारं सर्वेषाम्, इत्यादि। अत्राप्येकमेवेति जगदुपादानतां प्रतिपाद्य अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणादस्यैवाधिष्ठातृत्वमपि प्रतिपाद्यते। अतस्तं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि, येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवति? इत्युक्तं स्यात्। निखिलजगदुदयविभवविलयादिकारणभूतं सर्वज्ञत्व-सत्यकामत्व-सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरं किं ब्रह्मापि त्वया श्रुता मिति हार्दो भावः।

तस्य निखिलकारणतया कारणमेव नानासंस्थानविशेषसंस्थितं कार्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगद्विज्ञातं भवतीति हृदि निधाय *येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यादिति पुत्रं प्रति पृष्टवान् पिता। तदेतत् सकलस्य वस्तुजातस्यैककारणत्वं पितृहृदि निहितमजानन्पुत्रः परस्परविलक्षणेषु वस्तुष्वन्यस्य[ वि ]ज्ञानेन तदन्य[ वि ]ज्ञानस्याघटमानतां बुद्ध्वा परिचोदयति *कथं नु भगवस्स आदेशः इति। परिचोदितः पुनस्तदेव हृदि निहितं ज्ञानानन्दामलत्वैकस्वरूपमपरिच्छेद्यमाहात्म्यं सत्यसङ्कल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगुणगणैर्जुष्टमविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदाचिद्वस्तुशरीरं स्वलीलायै स्वसङ्कल्पेनानन्तविचित्रस्थिरत्रसरूपजगत्संस्थानं स्वांशेनावस्थितमिति तज्ज्ञानेनान्यस्य निखिलस्य ज्ञाततां ब्रुवन् लोकदृष्टं कार्यकारणयोरनन्यत्वं दर्शयितुं दृष्टान्तमाह— *यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् इति। एकमेव मृद्द्रव्यं स्वैकदेशेन नानाव्यवहारास्पदत्वाय घटशरावादिनानासंस्थानावस्थारूपविकारापन्नं नानानामधेयमपि मृत्तिकासंस्थानविशेषत्वात् मृद्द्रव्यमेवेत्थमवस्थितम्, न वस्त्वन्तरमिति, यथा मृत्पिण्डविज्ञानेन तत्संस्थानविशेषरूपं घटशरावादि सर्वं विज्ञातमेव भवतीत्यर्थः।

ततः कृत्स्नस्य जगतो ब्रह्मैककारणतामजानन्पुत्रः पृच्छति *भगवांस्त्वेव मे तद्ब्रवीतु, इति। ततः सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वकारणमित्युपदिशन् स होवाच *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, इति। अत्रेदमिति जगन्निर्दिष्टम्, अग्र इति च सृष्टेः पूर्वकालः। तस्मिन्काले जगतः सदात्मकतां सदेवेति प्रतिपाद्य तत्सृष्टिकालेऽप्यविशिष्टमिति

कृत्वा एकमेवेति सदापन्नस्य जगतस्तदानीमविभक्तनामरूपतां प्रतिपाद्य, तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति, स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन प्रतिषिद्ध-मिति, *तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवतीति, आदावेव प्रशासितैव जगदुपादानमिति हृदि निहितम् इदानीमभिव्यक्तम्। एतदेवोपपादयति—स्वयमेव जगदुपादानं जगन्निमित्तं च सत् *तदैक्षत बहु स्यां प्रजायेयेति*। तदेतत्सच्छब्दवाच्यं परं ब्रह्म सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पमवाप्तसमस्तकाममपि लीलार्थं विचित्रानन्तचिदचिन्मिश्रजगद्रूपेणाहमेव बहु स्यां तदर्थं प्रजायेयेति स्वयमेव संकल्प्य स्वांशैकदेशादेव वियदादिभूतानि सृष्ट्वा पुनरपि सैव सच्छब्दाभिहिता परा देवतैवमैक्षत *हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति, *अनेन जीवेनात्मनेति जीवस्य ब्रह्मात्मकत्वं प्रतिपाद्य ब्रह्मात्मक जीवानुप्रवेशादेव कृत्स्नस्याचिद्वस्तुनः पदार्थत्वम्; एवंभूतस्यैव [ अचिद्वस्तुनः ] सवस्य वस्तुनो नामरूपभाक्त्वमिति च दर्शयति।

एतदुक्तं भवति—जीवात्मा तु ब्रह्मणः शरीरतया प्रकारत्वात् ब्रह्मात्मकः *यस्यात्मा शरीरमिति श्रुत्यन्तरात्; एवंभूतस्य जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानि वस्तूनीति ब्रह्मात्मकानि तानि सर्वाणि। अतः देवो मनुष्यो यक्षो राक्षसः पशुर्मृगः पक्षी वृक्षो लता काष्ठं शिला तृण घटः पट इत्यादयः सर्वे प्रकृतिप्रत्यययोगेनाभिधायकतया प्रसिद्धाश्शब्दाः लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानिजीव-तदन्तर्यामिपरमात्मपर्यन्तस्य संघातस्यैव वाचका इति।

एवं समस्तस्य चिदचिदात्मकप्रपञ्चस्य सदुपादानता-सन्निमित्तता-सदाधारता-सन्नि-याम्यता-सच्छेषतादि सर्वं च *सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः* इत्या-दिना विस्तरेण प्रतिपाद्य कार्यकारणभावादिमुखेन *ऐतदात्म्यमिदं सर्वं तत्सत्यमिति कृत्स्नस्य जगतः ब्रह्मात्मकत्वमेव सत्यमिति प्रतिपाद्य, कृत्स्नस्य जगतः स एवात्मा कृत्स्नं च जगत्तस्य शरीरम्, तस्मात्त्वंशब्दवाच्यमपि जीवप्रकारं ब्रह्मैवेति सर्वस्य ब्रह्मात्मकत्वं प्रतिज्ञातं *तत्त्वमसीति जीवविशेषे उपसंहृतम्।

एतदुक्तं भवति—*ऐतदात्म्यमिदं सर्वमिति चेतनाचेतनप्रपञ्चम् इदं सर्वमिति निर्दिश्य तस्य प्रपञ्चस्यैष आत्मेति प्रतिपादितः। प्रपञ्चोद्देशेन ब्रह्मात्मकत्वं प्रतिपादित-मित्यर्थः। तदिदं ब्रह्मात्मकत्वं किमात्मशरीरभावेन, उत स्वरूपेणेति विवेचनीयम्। स्वरू-पेणेति चेत्, ब्रह्मणः सत्यसङ्कल्पत्वादयः *तदैक्षत बहु स्यामित्युपक्रमावगता बाधिता भवन्ति। शरीरात्मभावेन च तदात्मकत्वं श्रुत्यन्तराद्विशेषतोऽवगतम् *अन्तः प्रविष्टः शास्ता जनानां सर्वात्मेति। प्रशासितृत्वरूपात्मत्वेन सर्वेषां जनानामन्तः प्रविष्टः, अतः सर्वात्मा—सर्वेषां जनानामात्मा, सर्वं चास्य शरीरमिति विशेषतो ज्ञायते ब्रह्मात्मकत्वम्। *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त

आत्माऽन्तर्याम्यमृतः, इति च। अत्रापि* अनेन जीवेनात्मनेति इदमेव ज्ञायत इति पूर्वमेवोक्तम्। अतः सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वात्सर्वशरीरं सर्वप्रकारं सर्वैश्शब्दैर्ब्रह्मैवाभिधीयत इति *तत्त्वमिति सामानाधिकरण्येन जीवशरीरतया जीवप्रकारं ब्रह्मैवाभिहितम्।

एवमभिहिते सत्ययमर्थो ज्ञायते-त्वमिति यः पूर्वं देहस्याधिष्ठातृतया प्रतीतः स परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः; [redacted] अतस्त्वमितिशब्दः (त) त्वत्प्रकारविशिष्टं (त) त्वदन्तर्यामिणमेवाचष्ट इति, *अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ब्रह्मात्मकतयैव जीवस्य शरीरिणः स्वनामभाक्त्वात्, तत्त्वमिति समानाधिकरणवृत्तयोर्द्वयोरपि पदयोर्ब्रह्मैव वाच्यम्। तत्र तत्पदं जगत्कारणभूतं सकलकल्याणगुणगणाकरं निरवद्यं निर्विकारमाचष्टे। त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपं सशरीरजीवप्रकारविशिष्टमाचष्टे। तदेवं प्रवृत्तिनिमित्तभेदेनैकस्मिन् ब्रह्मण्येव तत्त्वमिति द्वयोः पदयोर्वृत्तिरुक्ता। ब्रह्मणो निरवद्यत्वं निर्विकारत्वं सर्वकल्याणगुणाकरत्वं जगत्कारणत्वं चाबाधितम्।

अश्रुतवेदान्ताः पुरुषाः सर्वे पदार्थास्सर्वे जीवात्मानश्च ब्रह्मात्मका इति न पश्यन्ति; सर्वशब्दानां च केवलेषु तत्तत्पदार्थेषु वाच्यैकदेशेषु वाच्यपर्यवसानं मन्यन्ते। इदानीं वेदान्तवाक्यश्रवणेन ब्रह्मकार्यतया तदन्तर्यामिकतया सर्वस्य ब्रह्मात्मकत्वं सर्वशब्दानां तत्तत्प्रकारसंस्थितब्रह्मवाचित्वं च जानन्ति। नन्वेवं गवादिशब्दानां तत्तत्पदार्थवाचितया व्युत्पत्तिर्बाधिता स्यात्। नैवम्, सर्वे शब्दा अचिज्जीवविशिष्टस्य परमात्मनो वाचका इत्युक्तं *नामरूपे व्याकरवाणीत्यत्र। तत्र लौकिकास्तु पुरुषाः शब्दं व्याहरन्तः शब्दवाच्ये प्रधानांशस्य परमात्मनः प्रत्यक्षाद्यपरिच्छेद्यत्वाद्वाच्यैकदेशभूते वाच्यसमाप्तिं मन्यन्ते। वेदान्तश्रवणेन च व्युत्पत्तिः पूर्यते। एवमेव वैदिकास्सर्वे शब्दाः परमात्मपर्यन्तान् स्वार्थान् बोधयन्ति। वैदिका एव सर्वे शब्दा वेदादेवोद्धृत्योद्धृत्य परेणैव ब्रह्मणा सर्वपदार्थान्पूर्ववत्सृष्ट्वा तेषु परमात्मपर्यन्तेषु पूर्ववन्नामतया प्रयुक्ताः। तदाह मनुः—

*सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥

इति। संस्थाः-संस्थानानि; रूपाणीति यावत्। आह च भगवान् पराशरः- *नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः॥

इति। श्रुतिश्च *सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति। सूर्यादीन् पूर्ववत्परिकल्प्य नामानि च पूर्ववच्चकारेत्यर्थः। एवं जगद्ब्रह्मणोरनन्यत्वं प्रपञ्चितम्। तेनैकेन ज्ञातेन सर्वस्य ज्ञाततोपपादिता भवति। सर्वस्य ब्रह्मकार्यत्वप्रतिपादनेन तदात्मकतयैव सत्यत्वं नान्यथेति *तत्सत्यमित्युक्तम्। यथा दृष्टान्ते सर्वस्य मृद्विकारस्य मृदात्मनैव सत्यत्वम्।

शोधकवाक्यान्यपि निरवद्यं सर्वकल्याणगुणाकरं परं ब्रह्म शोधयन्ति। सर्वप्रत्यनीकाकारताबोधनेऽपि तत्तत्प्रत्यनीकताभेदस्यावर्जनीयत्वान्न निर्विशेष(त्व)वस्तुसिद्धिः।

ननु च ज्ञानमात्रं ब्रह्मेति प्रतिपादिते निर्विशेषज्ञानमात्रं ब्रह्मेति निश्चीयते। नैवम्। स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन स्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत्। तथाऽऽह सूत्रकारः *तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्, *यावदात्मभावित्वाच्च न दोषः* इति। ज्ञानेन धर्मेण स्वरूपमपि निरूपितं न तु ज्ञानमात्रं ब्रह्मेति। कथमिदमवगम्यत इति चेत्; *यः सर्वज्ञः सर्ववित् इत्यादिज्ञातृत्वश्रुतेः। *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, *विज्ञातारमरे केन विजानीयादित्यादिश्रुतिशतसमधिगतमिदम्। ज्ञानस्य धर्ममात्रत्वाद्धर्ममात्रस्यैकस्य वस्तुत्वप्रतिपादनानुपपत्तेश्च। अतः सत्यज्ञानादिपदानि स्वार्थभूतज्ञानादिविशिष्टमेव ब्रह्म प्रतिपादयन्ति।

तत्त्वमिति द्वयोरपि पदयोः स्वार्थप्रहाणेन निर्विशेषवस्तुस्वरूपोपस्थापनपरत्वे मुख्यार्थपरित्यागश्च। ऐक्यतात्पर्यनिश्चयान्न लक्षणा दोषः सोऽयं देवदत्त इतिवत्। यथा सोऽयमित्यत्र स इति शब्देन देशान्तरकालान्तरसंबन्धी पुरुषः प्रतीयते; अयमिति च संनिहितदेशवर्तमानकालसंबन्धी। तयोस्सामानाधिकरण्येनैक्यं प्रतीयते। तत्रैकस्य युगपद्विरुद्धदेशकालसंबन्धितया प्रतीतिर्न घटत इति द्वयोरपि पदयोः स्वरूपमात्रोपस्थापनपरत्वं स्वरूपस्य चैक्यं प्रतिपाद्यत इति चेत्; नैतदेवम्। सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधाभावात्। एकस्य भूतवर्तमानक्रियाद्वयसंबन्धो न विरुद्धः। देशान्तरस्थितिर्भूता, संनिहितदेशस्थितिर्वर्तते; अतो भूतवर्तमानक्रियाद्वयसंबन्धितयैक्यप्रतिपादनमविरुद्धम्। देशद्वयविरोधश्च कालभेदेन परिहृतः। लक्षणायामपि न द्वयोरपि पदयोर्लक्षणासमाश्रयणम्, एकेनैव लक्षितेन विरोधपरिहारात्। लक्षणाभाव एवोक्तः, देशान्तरसंबन्धितया भूतस्यैवान्यदेशसंबन्धितया वर्तमानत्वाविरोधात्। एवमत्रापि जगत्कारणभूतस्यैव परस्य ब्रह्मणो जीवान्तर्यामितया जीवात्मत्वमविरुद्धमिति प्रतिपादितम्। यथाभूतयोरेव हि द्वयोरैक्यं सामानाधिकरण्येन प्रतीयते। तत्परित्यागेन स्वरूपमात्रैक्यं न सामानाधिकरण्यस्यार्थः। *भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति हि तद्विदः। तथाभूतयोरेवैक्यमुपपादितमस्माभिः। उपक्रमविरोध्युपसंहारवाक्यतात्पर्यनिश्चयश्च न घटते। उपक्रमे हि *तदैक्षत बहु स्यामित्यादिना सत्यसङ्कल्पत्वं जगदेककारणत्वमप्युक्तम्। तद्विरोधि चाविद्याश्रयत्वादि ब्रह्मणः।

अपि चार्थभेदतत्संसर्गविशेषबोधनकृतपदवाक्यस्वरूपतालब्धप्रमाणभावस्य शब्दस्य निर्विशेषवस्तुबोधनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम्। निर्विशेष इत्यादिशब्दास्तु केनचिद्विशेषेण विशिष्टतयाऽवगतस्य वस्तुनो वस्त्वन्तरावगतविशेषनिषेधपरतया बोधकाः, इतरथा तेषामप्यनवबोधकत्वमेव; प्रकृतिप्रत्ययरूपेण पदस्यैवानेकविशेषगर्भितत्वात्, अनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य ॥

अथ स्यात्—नास्माभिर्निर्विशेषे स्वयंप्रकाशे वस्तुनि शब्दः प्रमाणमित्युच्यते, स्वतस्सिद्धस्य प्रमाणानपेक्षत्वात्। सर्वैः शब्दैस्तदुपरागविशेषा ज्ञातृत्वादयः सर्वे निवर्त्यन्ते;

सर्वेषु विशेषेषु निवृत्तेषु वस्तुमात्रमनवच्छिन्नं स्वयंप्रकाशं स्वत एवावतिष्ठत इति। नैतदेवम्, केन शब्देन तद्वस्तु निर्दिश्य तद्गता विशेषा निरस्यन्ते? ज्ञप्तिमात्रशब्देनेति चेन्न, सोऽपि सविशेषमेव वस्त्ववलम्बते, प्रकृतिप्रत्ययरूपेण विशेषगर्भत्वादेव। ज्ञा अवबोधन इति सकर्मकः सकर्तृकः क्रियाविशेषः क्रियान्तरव्यावर्तकस्वभावविशेषश्च प्रकृत्याऽवगम्यते; प्रत्ययेन लिङ्गसङ्ख्यादयः। स्वतस्सिद्धावप्येतत्स्वभावविशेषविरहे सिद्धिरेव न स्यात्। अनन्यसाधनस्वभावतया हि ज्ञप्तेः स्वतस्सिद्धिरुच्यते। ब्रह्मस्वरूपं कृत्स्नं सर्वदा स्वयमेव प्रकाशते चेत्, न तस्मिन्नन्यधर्माध्यासस्संभवति। न हि रज्जुस्वरूपेऽवभासमाने सर्पत्वादिरध्यस्यते। अत एव हि भवद्भिराच्छादिकाऽविद्याऽभ्युपगम्यते। ततश्च, शास्त्रीयनिवर्तकज्ञानस्य ब्रह्मणि तिरोहितांशो विषयः। अन्यथा तस्य निवर्तकत्वं च न स्यात्। अधिष्ठानातिरेकिरज्जुत्वप्रकाशनेन हि सर्पत्वं बाध्यते। एकश्चेद्विशेषो ज्ञानमात्रे वस्तुनि शब्देनाभिधीयते, स च ब्रह्मविशेषणं भवतीति सर्वश्रुतिप्रतिपादितसर्वविशेषणविशिष्टं ब्रह्म भवति। अतः प्रामाणिकानां न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः।

निर्विकल्पकप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयते, अन्यथा सविकल्पके सोऽयमिति पूर्वावगतप्रकारविशिष्टप्रत्ययानुपपत्तेः। वस्तुसंस्थानविशेषरूपत्वाद्गोत्वादेर्निर्विकल्पकदशायामपि ससंस्थानमेव वस्त्वित्थमिति प्रतीयते। द्वितीयादिप्रत्ययेषु तस्यैव संस्थानविशेषस्यानेकवस्तुनिष्ठतामात्रं प्रतीयते। संस्थानरूपप्रकाराख्यस्य पदार्थस्यानेकवस्तुनिष्ठतयाऽनेकविशेषणत्वं द्वितीयादिप्रत्ययावगम्यमिति द्वितीयादिप्रत्ययास्सविकल्पका इत्युच्यन्ते।

अत एवैकस्य पदार्थस्य भिन्नाभिन्नरूपेण विरुद्धं द्व्यात्मकत्वं प्रत्युक्तम्। संस्थानस्य संस्थानिनः प्रकारतया पदार्थान्तरत्वं, प्रकारत्वादेव पृथक्सिद्ध्यनर्हत्वं पृथगनुपलम्भश्चेति न द्व्यात्मकत्वसिद्धिः।

अपि च निर्विशेषवस्तुवादिना स्वयंप्रकाशे वस्तुनि तदुपरागविशेषाः (सर्वे) सर्वैश्शब्दैर्निषिध्यन्त इति वदता के ते शब्दा निषेधका इति वक्तव्यम्। *वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति विकारनामधेययोर्वाचारम्भणमात्रत्वात् यत्तत्र कारणतयोपलक्ष्यते वस्तुमात्रं तदेव सत्यमन्यदसत्यमितीयं श्रुतिर्वदतीति चेत्; नैतदुपपद्यते। एकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति प्रतिज्ञाते, अन्यज्ञानेनान्यज्ञानासंभवं मन्वानस्यैकमेव वस्तु विकाराद्यवस्थाविशेषेण पारमार्थिकेनैव नानारूपमवस्थितं चेत्, तत्रैकस्मिन् विज्ञाते तस्माद्विलक्षणसंस्थानान्तरमपि तदेवेति तत्र दृष्टान्तोऽयं निदर्शितः। नात्र कस्यचिद्विशेषस्य निषेधकः कोऽपि शब्दो दृश्यते। *वाचारम्भणमिति वाचा-व्यवहारेण आरभ्यत इति आरम्भणम्। पिण्डरूपेणावस्थितताया मृत्तिकाया नाम चान्यत्, व्यवहारश्चान्यः। घटशरावादिरूपेणावस्थितायास्तस्या एव मृत्तिकाया अन्यानि नामानि, व्यवहाराश्चान्यादृशाः। तथाऽपि सर्वत्र मृत्तिकाद्रव्यमेकमेव नानासंस्थाननानानामधेयाभ्यां नानाव्यवहारेण चारभ्यत इत्येतदेव,

सत्यमित्यनेनान्यज्ञानेनान्यज्ञानसंभवो निदर्शितः। नात्र किञ्चिद्वस्तु निषिध्यत इति पूर्वमेवायमर्थः प्रपञ्चितः।

अपि च *येनाश्रुतं श्रुतमित्यादिना ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं प्रतिज्ञातं चेत् *यथा सोम्यैकेन मृत्पिण्डेन* इत्यादिदृष्टान्तः साध्यविकलः स्यात्; रज्जुसर्पादिवन्मृत्तिकाविकारस्य घटशरावादेरसत्यत्वं श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण युक्त्या चासिद्धमिति। एतदपि सिषाधयिषितमिति चेत्; यथेति दृष्टान्ततयोपादानं न घटते। [*सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यत्र] सदेवैकमेवेत्यवधारणद्वयेनाद्वितीयमित्यनेन च सन्मात्रातिरेकि सजातीयविजातीयाः सर्वे विशेषा निषिद्धा इति प्रतीयत इति चेत्; नैतदेवम्। कार्यकारणभावावस्थाद्वयावस्थितस्यैकस्य वस्तुनः एकावस्थावस्थितस्य ज्ञानेनावस्थान्तरावस्थितस्यापि वस्त्वैक्येन ज्ञाततां दृष्टान्तेन दर्शयित्वा श्वेतकेतोरज्ञातं सर्वस्य ब्रह्मकारणत्वं च वक्तुं *सदेव सोम्येदमित्यारब्धम्। इदमग्रे सदेवासीदिति अग्र इति कालविशेषः इदंशब्दवाच्यस्य प्रपञ्चस्य सदापत्तिरूपां क्रियां सद्द्रव्यतां च वदति, एकमेवेति चास्य नानानामरूपविकारप्रहाणम्। एतस्मिन् प्रतिपादिते अस्य जगतस्सदुपादानता प्रतिपादिता भवति। अन्यत्रोपादानकारणस्य स्वव्यतिरिक्ताधिष्ठात्रपेक्षादर्शनेऽपि सर्वविलक्षणत्वादस्य सर्वज्ञस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति अद्वितीयपदमधिष्ठात्रन्तरं निवारयति।

सर्वशक्तियुक्तत्वादेव ब्रह्मणः काश्चन श्रुतयः प्रथममुपादानकारणत्वं प्रतिपाद्य निमित्तकारणमपि तदेवेति प्रतिपादयन्ति, यथेयं श्रुतिः। अन्याश्च श्रुतयो ब्रह्मणो निमित्तकारणत्वमनुज्ञाय, अस्यैवोपादानतादि कथमिति परिचोद्य, सर्वशक्तियुक्तत्वादुपादानकारणं तदितराशेषोपकरणं च ब्रह्मैवेति परिहरन्ति, *किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनोषिणो मनसा पृच्छते दुतद्यदध्यतिष्ठद्भुवनानि धारयन्॥ ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनोषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्॥ इति सामान्यतो दृष्टेन विरोधमाशङ्क्य ब्रह्मणः सर्वविलक्षणत्वेन परिहार उक्तः। अतः *सदेव सोम्येदमग्र आसीदित्यत्राप्यग्र इत्याद्यनेकविशेषा ब्रह्मणः प्रतिपादिताः। भवदभिमतविशेषनिषेधवाचकः कोऽपि शब्दो न दृश्यते। प्रत्युत जगद्ब्रह्मणोः कार्यकारणभावज्ञापनाय अग्र इति कालविशेषसद्भावः, आसीदिति च क्रियाविशेषः, जगदुपादानता जगन्निमित्तता च, निमित्तोपादानयोर्भेदनिरसनेन तस्यैव ब्रह्मणस्सर्वशक्तियोगश्चेत्यप्रज्ञातास्सहस्रशो विशेषा एव प्रतिपादिताः। यतो वास्तवकार्यकारणभावादिज्ञापने प्रवृत्तमिदम्, अत एव *असदेवेदमग्र आसीदित्यारभ्यासत्कार्यवादनिषेधश्च क्रियते *कुतस्तु खलु सोम्यैवं स्यादिति। प्राग सत उत्पत्तिरहेतुकेत्यर्थः तदेवोपपादयति *कथमसतस्सज्जायेतेति। असत उत्पन्नमसदात्मकमेव भवतीत्यर्थः; यथा मृद उत्पन्नं घटादिकं मृदात्मकम्। सत उत्पत्तिर्नाम व्यवहारविशेषहेतुभूतोऽवस्थाविशेषयोगः।

एतदुक्तं भवति-एकमेव कारणभूतं द्रव्यमवस्थान्तरयोगेन कार्यमित्युच्यत इति एकविज्ञानेन सर्वविज्ञानं प्रतिपिपादयिषितम्। तदसत्कार्यवादे न सेत्स्यति। तथा हि-निमित्तसमवाय्यसमवायिप्रभृतिभिः कारणैरवयव्याख्यं कार्यं द्रव्यान्तरमेवारभ्यत इति कारणभूताद्वस्तुनः कार्यस्य वस्त्वन्तरत्वात् तज्ज्ञानेनास्य ज्ञातता कथमपि न संभवतीति। कथमवयवि द्रव्यान्तरं निरस्यत इति चेत्; कारणगतावस्थान्तरयोगस्य द्रव्यान्तरोत्पत्तिवादिनः संप्रतिपन्नस्यैवैकत्वनामान्तरव्यवहारान्तरादेरुपपादकत्वात् द्रव्यान्तरादर्शनाच्चेति कारणमेवावस्थान्तरापन्नं कार्यमित्युच्यत इत्युक्तम्।

ननु निरधिष्ठानभ्रमासंभवज्ञापनायासत्कार्यवादनिरासः क्रियते। तथा हि-एकं चिद्रूपं सत्यमेवाविद्याच्छादितं जगद्रूपेण विवर्तत इति, अविद्याश्रयत्वाय मूलकारणं सत्यमित्यभ्युपगन्तव्यमित्यसत्कार्यवादनिरासः। नैतदेवम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तमुखेन सत्कार्यवादस्यैव प्रसक्तत्वादित्युक्तम्, भवत्पक्षे निरधिष्ठानभ्रमासंभवस्य दुरुपपादत्वाच्च। यस्य हि चेतनगतो दोषः पारमार्थिकः, दोषाश्रयत्वं च पारमर्थिकम्, तस्य पारमार्थिकदोषेण युक्तस्यापारमार्थिकगन्धर्वनगरादिदर्शनमुपपन्नम्। यस्य तु दोषश्चापारमर्थिकः, दोषाश्रयत्वं चापारमार्थिकम्, तस्यापारमार्थिकेनाप्याश्रयेण तदुपपन्नमिति भवत्पक्षे न निरधिष्ठानभ्रमासंभवः।

शोधकवाक्येष्वपि *सत्यं ज्ञानमनन्तं ब्रह्म* *आनन्दो ब्रह्म* इत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वगुणविशिष्टं ब्रह्माभिधीयते इति पूर्वमेवोक्तम्। *अथात आदेशो नेति नेति* इति बहुधा निषेधो दृश्यत इति चेत्; किमत्र निषिध्यत इति वक्तव्यम्।

*द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च*इति मूर्तामूर्तात्मकः प्रपञ्चः सर्वोऽपि निषिध्यत इति चेत्, ब्रह्मणो रूपतया अप्रज्ञातं सर्वं रूपतयोपदिश्य पुनस्तदेव निषेद्धुमयुक्तम्, *प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात्। कस्तर्हि निषेधवाक्यार्थः? सूत्रकारः स्वयमेव वदति *प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः* इति। उत्तरत्र *अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्* इत्यादिना गुणगणस्य प्रतिपादितत्वात् पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति ब्रह्मणस्तावन्मात्रता प्रतिषिध्यत इति सूत्रार्थः। *नेह नानास्ति किञ्चनेत्यादिना नानात्वप्रतिषेध एव दृश्यत इति चेत्; अत्राप्युत्तरत्र *सर्वस्य वशी सर्वस्येशान *इति सत्यसङ्कल्पत्वसर्वेश्वरत्वप्रतिपादनाच्चेतनाचेतनवस्तुशरीर ईश्वर इति सर्वप्रकारसंस्थितः सर्वेश्वरः स एक एवेति तत्प्रत्यनीकाब्रह्मात्मकनानात्वं प्रतिषिद्धम्,न भवदभिमतम्। सर्वास्वेवंप्रकारासु श्रुतिष्वियमेव स्थितिरिति न क्वचिदपि ब्रह्मणः सविशेषत्वनिषेधवाची कोऽपि शब्दो दृश्यते।

अपि च निर्विशेषज्ञानमात्रं ब्रह्म, तच्च आच्छादिकाविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्ययमर्थो न घटते। तिरोधानं नाम प्रकाशनिवारणम्, स्वरूपातिरेकिप्रकाशधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनाश एव स्यात्। प्रकाशपर्यायं ज्ञानं नित्यम्, स च प्रकाशोऽविद्यातिरोहित इति बालिशभाषितमिदम्। अविद्यया प्रकाशस्तिरोहित इति प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा? प्रकाशस्यानुत्पाद्यत्वाद्विनाश एव स्यात्। प्रकाशो नित्यो निर्विकारस्तिष्ठतीति चेत्; सत्यामप्यविद्यायां ब्रह्मणि न किंचित्तिरोहितमिति नानात्वं पश्यतीति भवतामयं व्यवहारः सत्स्वनिवर्चनीय एव।

ननु च भवतोऽपि विज्ञानस्वरूप आत्माऽभ्युपगन्तव्यः, स च स्वयंप्रकाशः, तस्य च देवादिस्वरूपात्माभिमाने स्वरूपप्रकाशतिरोधानमवश्याश्रयणीयम्, स्वरूपप्रकाशे सति स्वात्मन्याकारान्तराध्यासायोगात्; अतो भवतश्च समानोऽयं दोषः। किञ्च अस्माकमेकस्मिन्नेवात्मनि भवदुदीरितं दुर्घटत्वम्; भवतामात्मानन्त्याभ्युपगमात् सर्वेष्वयं दोषः परिहरणीयः। अत्रोच्यते स्वभावतः मलप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपम्, स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरम्, निमेषकाष्ठाकलामुहूर्तादि परार्धपर्यन्तापरिमित व्यवच्छेदस्वरूपसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टानन्तमहाविभूति, स्वलीलापरिकरस्वांशभूतानन्तबद्धमुक्तनानाविधचेतनतद्भोग्यभूतानन्तविचित्रपरिणामशक्तिचेतनेतरवस्तुजातान्तर्यामित्वकृतसर्वशरीरत्वसर्वप्रकारावस्थानावस्थितं परं ब्रह्म च वेद्यम्, तत्साक्षात्कारक्षमभगवद्द्वैपायनपराशर वाल्मीकिमनुयाज्ञवल्क्यगौतमापस्तम्बप्रभृतिमुनिगणप्रणीतविध्यर्थवादमन्त्ररूपवेदमूलेतिहासपुराणधर्मशास्त्रोपबृंहितपरमार्थभूतानादिनिधनाविच्छिन्नपाठसंप्रदायर्ग्यजुस्सामाथर्वरूपानन्तशाखं वेदं च, अभ्युपगच्छतामस्माकं किं न सेत्स्यति? यथोक्तं भगवता द्वैपायनेन महाभारते-*यो मामजमनादिं च वेत्ति लोकमहेश्वरम्,*द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ *कालं स पचते तत्र न कालस्तत्र वै प्रभुः। एते वै निरयास्तात स्थानस्य परमात्मनः॥ अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम्। क्रीडा हरेरिदं सर्व क्षरमित्यवधार्यताम्॥*कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्॥ इति। कृष्णस्य हि कृते इति कृष्णस्य शेषभूतमित्यर्थः॥ भगवता पराशरेणाप्येवमुक्तम्- * शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दस्सर्वकारणकारणे॥*ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ *एवमेष महाशब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः॥ *एवंप्रकारममलं नित्यं व्यापकमक्षयम्। समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्॥ *कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः॥*क्रीडतो बालकस्येव चेष्टां तस्य

विशामय इति । मनुनाऽपि *प्रशासितारं सर्वेषामणीयांसमणीयसाम्, इत्याद्युक्तम् ॥ याज्ञवल्क्येनापि– *क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता, इत्यादि ॥

आपस्तम्बेनापि *पूः प्राणिनस्सर्वगुहाशयस्य, इति । सर्वे प्राणिनः गुहाशयस्य– परमात्मनः, पूः–पुरम्, शरीरमित्यर्थः । प्राणिन इति जीवात्मकभूतसंघाताः ॥

ननु च किमनेनाडम्बरेण ? चोद्यं तु न परिहृतम् । उच्यते–एवमभ्युपगच्छतामस्माकम्, आत्मधर्मभूतस्य चैतन्यस्य स्वाभाविकस्यापि कर्मणा पारमार्थिकं संकोचं, विकासं च ब्रुवतां सर्वमिदं परिहृतम् । भवतस्तु प्रकाश एव स्वरूपमिति प्रकाशो न धर्मभूतः, तस्य संकोचो विकासो वा नाभ्युपगम्यते । प्रकाशप्रसरानुत्पत्तिमेव तिरोधानभूताः कर्मादयः कुर्वन्ति । अविद्या चेत् तिरोधानम्, तिरोधानभूतया तया, स्वरूपभूतप्रकाशनाशः पूर्वमेवोक्तः । अस्माकं चाविद्यारूपेण कर्मणा स्वरूपनित्यधर्मभूतज्ञानप्रकाशः सङ्कुचितः; तेन देवादिरूपात्माभिमानो भवतीति विशेषः ॥ यथोक्तम् *अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसन्ततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ इति, क्षेत्रज्ञानां स्वधर्मभूतज्ञानस्य कर्मसंज्ञयाऽविद्यया संकोचं विकासं च दर्शयति ॥

अपि च, आच्छादिकाविद्या, श्रुतिभिश्च, ऐक्योपदेशबलाच्च ब्रह्मस्वरूपतिरोधानहेतुदोषरूपा, आश्रीयते । तस्याश्च मिथ्यारूपत्वेन, प्रपञ्चवत् स्वदर्शनमूलदोषापेक्षत्वात् न सा मिथ्यादर्शनमूलदोषस्स्यादिति, ब्रह्मैव मिथ्यादर्शनमूलं स्यात् । तस्याश्चानादित्वेऽपि मिथ्यारूपत्वादेव ब्रह्मदृश्यत्वेनैव अनादित्वात्, तद्दर्शनमूलपरमार्थदोषानभ्युपगमाच्च, ब्रह्मैव तद्दर्शनमूलं स्यात्; तस्य नित्यत्वादनिर्मोक्ष एव ॥ अत एवेदमपि निरस्तम्–एकमेव शरीरं जीववत्, निर्जीवानीतराणि शरीराणि । यथा स्वप्नदृष्टनानाविधशरीराणां निर्जीवत्वम् । तत्र स्वप्ने द्रष्टुश्शरीरमेकमेव जीववत्; तस्य स्वप्नवेलायां दृश्यभूतनानाविधानन्तशरीराणां निर्जीवत्वमेव । अनेनैकेनैव अन्येषां जीवानां शरीराणां च परिकल्पितत्वात् जीवाः मिथ्याभूताः इति । ब्रह्मणा स्वस्वरूपव्यतिरिक्तस्य जीवभावस्य सर्वशरीराणां च कल्पितत्वात्, एकस्मिन्नपि शरीरे शरीरवत्, जीवसद्भावस्य मिथ्यारूपत्वात्, सर्वाणि शरीराणि मिथ्यारूपाणि तत्र जीवभावश्च मिथ्यारूप इति, एकस्य शरीरस्य तत्र जीवसद्भावस्य च न कश्चिद्विशेषः । अस्माकं तु स्वप्ने द्रष्टुश्शरीरस्य तस्मिन्नात्मसद्भावस्य च प्रबोधवेलायामबाधितत्वात्, अन्येषां शरीराणां तद्गतजीवानां च बाधितत्वात् ते सर्वे मिथ्याभूताः; स्वशरीरमेकम्, तस्मिन् जीवभावश्च परमार्थ इति विशेषः ॥

अपि च केन वा अविद्यानिवृत्तिः ? सा च कीदृशी ? इति विवेचनीयम् । ऐक्यज्ञानं निवर्तकम्, निवृत्तिश्च अनिर्वचनीयप्रत्यनीकाकारा, इति चेत् । अनिर्वचनीयप्रत्यनीकं निर्वचनीयम् । तच्च सद्वा ? असद्वा ? द्विरूपं वा ? कोट्यन्तरं न विद्यते । ब्रह्मव्यतिरेकेण-

तदभ्युपगमे पुनरप्यविद्या न निवृत्ता स्यात्। ब्रह्मैव चेन्निवृत्तिः, तत् प्रागप्यविशिष्टमिति, वेदान्तज्ञानात्पूर्वमेव निवृत्तिस्स्यात्। ऐक्यज्ञानं निवर्तकम्, तदभावात् संसारः, इति भवद्दर्शनं विहन्यते ॥

किञ्च निवर्तकज्ञानस्याप्यविद्यारूपत्वात् तन्निवर्तनं केनेति वक्तव्यम्। निवर्तकज्ञानं स्वेतरसमस्तभेदं निवर्त्य, क्षणिकत्वादेव स्वयमेव विनश्यति, दावानलविषनाशनविषान्तरवत्, इति चेन्न। निवर्तकज्ञानस्य ब्रह्मव्यतिरिक्तत्वेन तत्स्वरूपतदुत्पत्तिविनाशानां मिथ्यारूपत्वात् तद्विनाशरूपा अविद्या तिष्ठत्येवेति, तद्विनाशदर्शनस्य निवर्तकं वक्तव्यमेव। दावाग्न्यादीनामपि पूर्वावस्थाविरोधिपरिणामपरम्परा अवर्जनीयैव ॥

अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति चेन्न; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः। ब्रह्मस्वरूपमेव इति चेन्न। ब्रह्मणः निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम्? अध्यस्तं चेत्, अयमध्यासः, तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव। तन्निवर्तकान्तराभ्युपगमे, तस्यापि त्रिरूपतया अनवस्थैव। सवस्य हि ज्ञानस्य त्रिरूपत्वविरहे ज्ञानत्वमेव हीयते; कस्यचित् कञ्चनार्थविशेषं प्रति सिद्धिरूपत्वात् ज्ञानस्य। त्रिरूपत्वविरहे, भवतां स्वरूपभूतज्ञानवत् निवर्तकज्ञानमप्यनिवर्तकं स्यात्। ब्रह्मस्वरूपस्यैव ज्ञातृत्वाभ्युपगमे, अस्मदीयपक्ष एव परिगृहीतस्स्यात्। निवर्तकज्ञानस्वरूपज्ञातृत्वं च स्वनिवर्त्यान्तर्गतमिति वचनम्, भूतलव्यतिरिक्तं कृत्स्नं छिन्नं देवदत्तेन, इत्यस्यामेव छेदनक्रियायाम् अस्याः छेदनक्रियायाः, छेत्तृत्वस्य च छेद्यान्तर्भावविवचनवत् उपहास्यम् ॥

अपि च निखिलभेदनिवर्तकमिदमैक्यज्ञानं केन जातमिति विवेचनीयम्। श्रुत्यैवेति चेन्न। तस्याः ब्रह्मव्यतिरिक्तायाः अविद्यापरिकल्पितत्वात्, प्रपञ्चबाधकज्ञानोत्पादकत्वं न संभवति। तथा हि—दुष्टकारणजन्यमपि रज्जुसर्पज्ञानम्, दुष्टकारणजन्येन रज्जुरियं न सर्प इति ज्ञानेन न बाध्यते। रज्जुसर्पज्ञानभये वर्तमाने, केनचिद्भ्रान्तेन पुरुषेण, रज्जुरियं न सर्प इत्युक्तेऽपि, अयं भ्रान्त इति ज्ञाने सति, तद्वचनं रज्जुसर्पज्ञानस्य बाधकं न भवति, भयं च न निवर्तते। प्रयोजकज्ञानवतः श्रवणवेलायामेव हि, ब्रह्मव्यतिरिक्तत्वेन श्रुतेरपि भ्रान्तिमूलत्वं ज्ञातमिति ॥

किञ्च, निवर्तकज्ञानस्य, ज्ञातुः, तत्सामग्रीभूतशास्त्रस्य च ब्रह्मव्यतिरिक्ततया यदि बाध्यत्वमुच्यते, हन्त! तर्हि प्रपञ्चनिवृत्तेः मिथ्यात्वमापततीति प्रपञ्चस्य सत्यता स्यात्; स्वप्नदृष्टपुरुषवाक्यावगतपुत्रादिमरणस्य मिथ्यात्वेन पुत्रादिसत्यतावत्। किञ्च तत्वमस्यादिवाक्यं न प्रपञ्चस्य बाधकम् भ्रान्तिमूलत्वात्; भ्रान्तप्रयुक्तरज्जुसर्पबाधकवाक्यवत्। ननु च स्वप्ने कस्मिंश्चिद्भये वर्तमाने स्वप्नदशायामेव अयं स्वप्न इति ज्ञाते सति, पूर्वभयनिवृत्तिर्दृष्टा;

तद्वदत्रापि संभवतीति। नैवम्; स्वप्नवेलायामेव, सोऽपि स्वप्न इति ज्ञाते सति, पुनर्भयानुवृत्तिरेव दृष्टेति न कश्चिद्विशेषः। श्रवणवेलायामेव सोऽपि स्वप्न इति ज्ञातमेवेत्युक्तम्॥

यदपि चेदमुक्तम्— भ्रान्तिपरिकल्पितत्वेन मिथ्यारूपमपि शास्त्रं सदद्वितीयं ब्रह्मेति बोधयति। तस्य सतो ब्रह्मणो विषयस्य पश्चात्तनबाधादर्शनात् ब्रह्म सुस्थितमेवेति। तदयुक्तम्। शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधितत्वात्। इदं भ्रान्तिमूलं वाक्यमिति चेत्, सदद्वितीयं ब्रह्मेति वाक्यमपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पश्चात्तनबाधादर्शनं तु सर्वशून्यवाक्यस्यैवेति विशेषः। सर्वशून्यवादिनः, ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च, स्वपक्षसाधनप्रमाणपारमार्थ्यानभ्युपगमेन अभियुक्तैर्वादानधिकार एव प्रतिपादितः— *अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः इति॥

अपि च, प्रत्यक्षदृष्टस्य प्रपञ्चस्य मिथ्यात्वं केन प्रमाणेन साध्यते? प्रत्यक्षस्य दोषमूलत्वेन अन्यथासिद्धिसंभवात्, निर्दोषं शास्त्रमनन्यथासिद्धं प्रत्यक्षस्य बाधकमिति चेत्, केन दोषेण जातं प्रत्यक्षमनन्तभेदविषयमिति वक्तव्यम्। अनादिभेदवासनाख्यदोषजातं प्रत्यक्षमिति चेत्, हन्त! तर्हि अनेनैव दोषेण जातं शास्त्रमपीति, एकदोषमूलत्वात् शास्त्रप्रत्यक्षयोः न बाध्यबाधकभावसिद्धिः। आकाशवाय्वादिभूततदारब्धशब्दस्पर्शादियुक्तमनुष्यत्वादिसंस्थानसंस्थितपदार्थग्राहि प्रत्यक्षम्; शास्त्रं तु प्रत्यक्षाद्यपरिच्छेद्यसर्वान्तरात्मत्वाद्यनन्तविशेषणविशिष्टब्रह्मस्वरूपतदुपासनाद्याराधनप्रकारतत्प्राप्तिपूर्वकतत्प्रसादलभ्यफलविशेषतदनिष्टकरणमूलनिग्रहविशेषविषयमिति शास्त्रप्रत्यक्षयोर्न विरोधः। अनादिनिधनाविच्छिन्नपाठसंप्रदायताद्यनेकगुणविशिष्टस्य शास्त्रस्य बलीयस्त्वं वदता प्रत्यक्षपारमार्थ्यमवश्यमभ्युपगन्तव्यमिति, अलमनेन श्रुतिशतविततिवातवेगपराहतकुदृष्टिदुष्टयुक्तिजालतूलनिरसनेनेत्युपरम्यते॥

[ इति शाङ्करमतनिराकरणम्। ]

द्वितीये तु पक्षे, उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तरानभ्युपगमात्, ब्रह्मण्येवोपाधिसंसर्गात् आपाधिकास्सर्वे दोषाः ब्रह्मण्येवं भवेयुः। ततश्च अपहतपाप्मत्वादिनिर्दोषश्रुतयस्सर्वा विहन्यन्ते। यथा घटाकाशादेः परिच्छिन्नतया महाकाशाद्वैलक्षण्यं परस्परभेदश्च दृश्यते, तत्रस्था दोषा वा गुणा वा अनवच्छिन्ने महाकाशे न संबध्यन्ते; एवमुपाधिकृतभेदव्यवस्थितजीवगता दोषाः अनुपहिते परे ब्रह्मणि न संबध्यन्त इति चेत्, नैतदुपपद्यते। निरवयवस्याकाशस्यानवच्छेद्यस्य घटादिभिश्छेदासंभवात्, तेनैवाकाशेन घटादयस्संयुक्ता इति, ब्रह्मणोऽप्यच्छेद्यत्वात् ब्रह्मैवोपाधिसंयुक्तं स्यात्। घटसंयुक्ताकाशप्रदेशः अन्यस्मादाकाशप्रदेशाद्भिद्यत इति चेत्, आकाशस्यैकस्यैव प्रदेशभेदेन घटादिसंयोगात्, घटादौ गच्छति, तस्य च प्रदेशस्यानियम इति, तद्वत् ब्रह्मण्येव प्रदेशभेदानियमेनोपाधिसंसर्गात्, उपाधौ गच्छति संयुक्तवियुक्तब्रह्मप्रदेशभेदाच्च, ब्रह्मण्येव उपाधिसंसर्गः, क्षणे क्षणे बन्धो मोक्षश्च भवतीति सन्तः परिहसन्ति॥

निरवयवस्याकाशस्यैव श्रोत्रेन्द्रियत्वेऽपि इन्द्रियव्यवस्थावत् ब्रह्मण्यपि व्यवस्थोपपद्यत इति चेन्न। वायुविशेषसंस्कृतकर्णप्रदेशसंयुक्तस्यैवाकाशप्रदेशस्येन्द्रियत्वात्, तस्य च प्रदेशान्तराद्भेदानियमेऽपि इन्द्रियव्यवस्थोपपद्यते। आकाशस्य तु, सर्वेषां शरीरेषु गच्छत्सु अनियमेन सर्वप्रदेशसंयोग इति ब्रह्मण्यपि उपाधिसंयोगप्रदेशानियम एव। आकाशस्य स्वरूपेणैव श्रोत्रेन्द्रियत्वमभ्युपगम्यापि, इन्द्रियव्यवस्थोक्ता। परमार्थतस्तु आकाशो न श्रोत्रेन्द्रियम्। वैकारिकादहङ्कारादेकादशेन्द्रियाणि जायन्त इति हि वैदिकाः। यथोक्तं भगवता पराशरेण— *तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश। एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः॥ इति। अयमर्थः—वैकारिकः तैजसो भूतादिरिति त्रिविधोऽहङ्कारः। स च क्रमात् सात्विकः, राजसः, तामसश्च। तत्र, तामसाद्भूतादेः आकाशादीनि भूतानि जायन्त इति सृष्टिक्रममुक्त्वा, तैजसात् राजसाहङ्कारात् एकादशेन्द्रियाणि जायन्त इति परमतमुपन्यस्य, सात्विकाहङ्कारात् वैकारिकाणीन्द्रियाणि जायन्त इति स्वमतमुच्यते—देवा वैकारिकास्स्मृताः इति। देवाः—इन्द्रियाणि। एवम् आहङ्कारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं महाभारते उच्यते॥ भौतिकत्वेऽपीन्द्रियाणामाकाशादिभूतविकारत्वादेव, आकाशादिभूतपरिणामविशेषाः व्यवस्थिता एव, शरीरवत् पुरुषाणामिन्द्रियाणि भवन्तीति; ब्रह्मण्यच्छेद्ये निरवयवे निर्विकारे त्वनियमेनानन्तहेयोपाधिसंसर्गदोषो दुष्परिहर एवेति श्रद्दधानानामेवायं पक्ष इति शास्त्रविदो न बहुमन्यन्ते॥ स्वरूपपरिणामाभ्युपगमात् अविकारश्रुतिर्बाध्यते, निरवद्यता च ब्रह्मणः। शक्तिपरिणाम इति चेत्, केयं शक्तिरित्युच्यते? किं ब्रह्मपरिणामरूपा? उत ब्रह्मणोऽन्या काऽपि? इति; उभयपक्षेऽपि स्वरूपपरिणामोऽवर्जनीय एव॥

[ इति भास्करमतनिराकरणम् ]

तृतीयेऽपि पक्षे जीवब्रह्मणोर्भेदवदभेदस्य चाभ्युपगमात्, तस्य च तद्भावात्, सौभरिभेदवत् स्वावतारभेदवच्च सर्वस्येश्वरभेदत्वात् सर्वे जीवगता दोषास्तस्यैव स्युः। एतदुक्तं भवति—ईश्वरः स्वरूपेणैव सुरनरतिर्यक्स्थावरादिभेदेनावस्थित इति हि तदात्मकत्ववर्णनं क्रियते? तथा सति, एकमृत्पिण्डारब्धघटशरावादिगतान्युदकाहरणादीनि सर्वकार्याणि यथा तस्यैव भवन्ति, एवं सर्वजीवगतसुखदुःखादि सर्वमीश्वरगतमेव स्यादिति॥ घटकरकादिसंस्थानानुपयुक्तमृद्द्रव्यं यथा कार्यान्तरानन्वितम्, एवमेव सुरपशुमनुजादिजीवत्वानुपयुक्तेश्वरः सर्वज्ञस्सत्यसङ्कल्पत्वादिगुणाकर इति चेत्; सत्यम्, स एवेश्वरः एकेनांशेन कल्याणगुणाकरः, स एव चान्येनांशेन हेयगुणाकर इत्युक्तम्, द्वयोरंशयोरीश्वरत्वाविशेषात्। द्वावंशौ व्यवस्थिताविति चेत्, कस्तेन लाभः? एकस्यैव एकेनांशेन नित्यदुःखित्वात्, अंशान्तरेण सुखित्वमपि नेश्वरत्वाय कल्पते। यथा देवदत्तस्य एकस्मिन् हस्ते चन्दनपङ्कानुलेपः, केयूरकटकाङ्गुलीयकालङ्कारः, एतस्यैवान्यस्मिन् हस्ते मुद्गराभिघातः, कालानलज्वालानुप्रवेशश्च; तद्वदेवेश्वरस्य स्यादिति, ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्षः; अपरिमितदुःखस्य

पारमार्थिकत्वात्, संसारिणामनन्तत्वेन दुस्तरत्वाच्च। तस्मात् विलक्षणोऽयं जीवांश इति चेत्, आगतोऽसि तर्हि मदीयं पन्थानम्। ईश्वरस्य स्वरूपेण तादात्म्यवर्णने स्यादयं दोषः। आत्मशरीरभावेन तु तादात्म्यप्रतिपादने न कश्चिद्दोषः। प्रत्युत निखिलभुवननियमनादिः महान् गुणगणः प्रतिपादितो भवति। सामानाधिकरण्यं च मुख्यवृत्तम्। अपि च, एकस्य वस्तुनो हि भिन्नाभिन्नत्वं विरुद्धत्वान्न संभवतीत्युक्तम्। घटस्य पटाद्भिन्नत्वे सति तस्य तस्मिन्नभावः, अभिन्नत्वे सति तस्य च भाव इति, एकस्मिन् काले चैकस्मिन् देशे चैकस्य हि पदार्थस्य युगपत् सद्भावोऽसद्भावश्च विरुद्धः। जात्यात्मना भावः व्यक्त्यात्मना चाभाव इति चेत्, जातेः मुण्डेन व्यक्त्या चाभेदे सति, खण्डे मुण्डस्यापि सद्भावप्रसङ्गः। खण्डेन च जातेरभिन्नत्वे सद्भावः; भिन्नत्वे असद्भावः; अश्वे महिषत्वस्येवेति विरोधो दुष्परिहर एव॥ जात्यादेर्वस्तुसंस्थानतया वस्तुनः प्रकारत्वात्, प्रकारप्रकारिणोश्च पदार्थान्तरत्वम्, प्रकारस्य पृथक्सिद्ध्यनर्हत्वम्, पृथगनुपलम्भश्च, तस्य संस्थानस्य चानेकवस्तुषु प्रकारतयावस्थितिश्च, इत्यादि पूर्वमेवोक्तम्॥ सोऽयमिति बुद्धिः प्रकारैक्यात्, अयमपि दण्डीति बुद्धिवत्। अयमेव च जात्यादिः प्रकारो वस्तुनो भेद इत्युच्यते, तद्योग एव वस्तु भिन्नमिति व्यवहारहेतुरित्यर्थः। स च वस्तुनो भेदव्यवहारहेतुः स्वस्य च, संवेदनवत्; यथा संवेदनं वस्तुनो व्यवहारहेतुः, स्वस्य व्यवहारहेतुश्च भवति। अत एव सन्मात्रग्राहिप्रत्यक्षं न भेदग्राहि—इत्यादिवादा निरस्ताः; जात्यादिसंस्थानसंस्थितस्यैव वस्तुनः प्रत्यक्षेण गृहीतत्वात् तस्यैव संस्थानरूपजात्यादेः प्रतियोग्यपेक्षया भेदव्यवहारहेतुत्वाच्च। स्वरूपपरिणामदोषश्च पूर्वमेवोक्तः॥ [इति यादवप्रकाशमतनिराकरणम्]

(अथ स्वमतस्थापनम्)

*यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः, *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः, *यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरम्, यं पृथिवी न वेद, इत्यादि, *योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे संचरन् यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः, *द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति॥ *अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा *तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्, इत्यादि, *सत्यं चानृतं च सत्यमभवत्, *अनेन जीवेनात्मना इत्यादि, *पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति, *भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, *नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, *प्रधानक्षेत्रज्ञपतिर्गुणेशः, *ज्ञाज्ञौ द्वावजावीशनीशौ, इत्यादिश्रुतिशतैः,

तदुपबृंहणैः *जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्, *यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः॥ *अहमात्मा गुडाकेश सर्वभूताशयस्थितः, *सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च, इत्यादिवेदविदग्रेसरवाल्मीकिपराशरद्वैपायनवचोभिश्च, परस्य ब्रह्मणः सर्वस्यात्मत्वावगमात्, चिदचिदात्मकस्य वस्तुनः तच्छरीरत्वावगमाच्च, शरीरस्य च शरीरिणं प्रति प्रकारतयैव पदार्थत्वात्, शरीरशरीरिणोश्च धर्मभेदेऽपि तयोरसङ्करात्, सर्वशरीरं ब्रह्मेति ब्रह्मणो वैभवं प्रतिपादयद्भिः सामानाधिकरण्यादिभिः मुख्यवृत्तैः सर्वचेतनाचेतनप्रकारं ब्रह्मैवाभिधीयते ॥

सामानाधिकरण्यं हि द्वयोः पदयोः प्रकारद्वयमुखेनैकार्थनिष्ठत्वम्। तस्य चैतस्मिन् पक्षे मुख्यता। तथा हि–तत्, त्वम्, इति सामानाधिकरण्ये तदित्यनेन जगत्कारणं सर्वकल्याणगुणाकरं निरवद्यं ब्रह्मोच्यते। त्वमिति च चेतनसमानाधिकरणवृत्तेन जीवान्तर्यामिरूपि, तच्छरीरं तदात्मतयाऽवस्थितं तत्प्रकारं ब्रह्मोच्यते। इतरेषु पक्षेषु सामानाधिकरण्यहानिः, ब्रह्मणस्सदोषता च स्यात् ॥

एतदुक्तं भवति। ब्रह्मैवैवमवस्थितमित्यत्र एवंशब्दार्थभूतप्रकारतयैव विचित्रचेतनाचेतनात्मकप्रपञ्चस्य स्थूलस्य सूक्ष्मस्य च सद्भावः। तथा च *बहु स्यां प्रजायेयेत्ययमर्थस्संपन्नो भवति। तस्यैवेश्वरस्य कार्यतया कारणतया च नानासंस्थानसंस्थितस्य संस्थानतया चिदचिद्वस्तुजातमवस्थितमिति ॥

ननु च संस्थानरूपेण प्रकारतया एवंशब्दार्थत्वं जातिगुणयोरेव दृष्टम्; न द्रव्यस्य। स्वतन्त्रसिद्धियोग्यस्य पदार्थस्य एवंशब्दार्थतया ईश्वरस्य प्रकारमात्रत्वमयुक्तमिति चेत्; उच्यते। द्रव्यस्यापि दण्डकुण्डलादेः द्रव्यान्तरप्रकारत्वं दृष्टमेव। ननु च दण्डादेः स्वतन्त्रस्य द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः यथा–दण्डी कुण्डलीति। अतः गोत्वादितुल्यतया चेतनाचेतनस्य द्रव्यभूतस्य वस्तुनः ईश्वरप्रकारतया सामानाधिकरण्येन प्रतिपादनं न युज्यते। अत्रोच्यते–गौरश्वो मनुष्यो देव इति, भूतसंघातरूपाणां द्रव्याणामेव, देवदत्तो मनुष्यो जातः पुण्यविशेषेण, यज्ञदत्तो गौर्जातः पापेन कर्मणा, अन्यश्चेतनः पुण्यातिरेकेण देवो जातः इत्यादि देवादिशरीराणां, चेतनप्रकारतया लोकवेदयोः सामानाधिकरण्येन प्रतिपादनं दृष्टम्।

अयमर्थः–जातिर्वा द्रव्यं वा गुणो वा न तत्रादरः। कञ्चन द्रव्यविशेषं प्रति विशेषणतयैव यस्य सद्भावः, तस्य तदपृथक्सिद्धेः तत्प्रकारतया तत्सामानाधिकरण्येन प्रतिपादनं युक्तम्। यस्य पुनर्द्रव्यस्य पृथक्सिद्धस्यैव कदाचित् क्वचित् द्रव्यान्तरप्रकारत्वमिष्यते, तत्र मत्वर्थीयप्रत्यय इति विशेषः। एवमेव स्थावरजङ्गमात्मकस्य सर्वस्य वस्तुनः ईश्वरशरीरत्वेन तत्प्रकारतयैव स्वरूपसद्भाव इति, तत्प्रकारी ईश्वर एव तत्तच्छब्देनाभिधीयत इति, तत्सामानाधिकरण्येन प्रतिपादनं युक्तम्। तदेतत् पूर्वमेव नामरूपव्याकरणश्रुतिविवरणे

प्रपञ्चितम्। अतः, प्रकृतिपुरुषमहदहङ्कारतन्मात्रभूतेन्द्रियतदारब्धचतुर्दशभुवनात्मकब्रह्माण्ड-तदन्तर्वर्तिदेवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितं कार्यमपि सर्वं ब्रह्मवति, कारणभूतब्रह्मविज्ञानादेव सर्वं विज्ञातं भवतीति, एकविज्ञानेन सर्वविज्ञानमुपपन्नतरम्। तदेवं कार्यकारणभावादिमुखेन कृत्स्नस्य चिदचिद्वस्तुनः परब्रह्मप्रकारतया तदात्मकत्वमुक्तम्॥

ननु च परस्य ब्रह्मणः स्वरूपेण परिणामास्पदत्वं निर्विकारनिरवद्यश्रुतिव्याकोपप्रसंगेन निवारितम्। *प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा मृत्तत्कार्यदृष्टान्ताभ्याम् परमपुरुषस्य जगदुपादानकारणत्वं च प्रतिपादितम्। उपादानकारणत्वं च परिणामास्पदत्वमेव; कथमिदमुपपद्यते अत्रोच्यते—सजीवस्य प्रपञ्चस्य अविशेषेण कारणत्वमुक्तम्। तत्र, ईश्वरस्य जीवरूपपरिणामाभ्युपगमे, *नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः इति विरुध्यते। वैषम्यनैर्घृण्यपरिहारश्च, जीवानामनादित्वाभ्युपगमेन तत्कर्मनिमित्ततया प्रतिपादितः *वैषम्यनैर्घृण्ये न सापेक्षत्वात्, *न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च इति। अकृताभ्यागमकृतविप्रणाशप्रसंगश्चानित्यत्वेऽभिहितः॥ तथा प्रकृतेरप्यनादिता श्रुतिभिः प्रतिपादिता—*अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ इति प्रकृतिपुरुषयोरजत्वं दर्शयति। *अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥ इति प्रकृतिरेव स्वरूपेण विकारास्पदमिति च दर्शयति। *गौरनाद्यन्तवती सा जनित्री भूतभाविनी, इति च। स्मृतिश्च—*प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि, *भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्॥ *प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः, *मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्, इत्यादिका॥

एवं च प्रकृतेरपीश्वरशरीरत्वात्, प्रकृतिशब्दोऽपि तदात्मभूतस्येश्वरस्य, तत्प्रकारसंस्थितस्य वाचकः। पुरुषशब्दोऽपि तदात्मभूतस्येश्वरस्य पुरुषप्रकारसंस्थितस्य वाचकः। अतः तद्विकाराणामपि तथैव ईश्वर आत्मा। तदाह—*व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च *स एव क्षोभको ब्रह्मन् क्षोभ्यश्च परमेश्वरः, इति। अतः प्रकृतिप्रकारसंस्थिते परमात्मनि प्रकारभूतप्रकृत्यंशे विकारः, प्रकार्यंशे चाविकारः। एवमेव जीवप्रकारसंस्थिते परमात्मनि च प्रकारभूतजीवांशे सर्वे चापुरुषार्थाः, प्रकार्यंशो नियन्ता, निरवद्यः, सर्वकल्याणगुणाश्रयः, सत्यसंकल्प एव॥ तथा च सति कारणावस्थ ईश्वर एवेति तदुपादानकजगत् कार्यावस्थोऽपि स एवेति, कार्यकारणयोरनन्यत्वं सर्वश्रुत्यविरोधश्च भवति।

तदेवं नामरूपविभागानर्हसूक्ष्मदशापन्नप्रकृतिपुरुषशरीरं ब्रह्म कारणावस्थम्। जगतस्तदापत्तिरेव च प्रलयः। नामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्या-

मध्यस्थनीलतोयदा विद्युल्लेखेव; सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा, स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिव आभाती त्यर्थः। *मनोमयः प्राणशरीरो भारूपस्सत्यकामस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः, *माहारजतं वासः, इत्याद्याः। *अस्येशाना जगतो विष्णुपत्नी, *ह्रीश्च ते लक्ष्मीश्च पत्न्यौ, *तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, *क्षयन्तमस्य रजसः पराके, *यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्, *यो वेद निहितं गुहायां परमे व्योमन्, *यो अस्याध्यक्षः परमे व्योमन्, *तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्, इत्यादिश्रुतिशतनिश्चितोऽयमर्थः ॥

*तद्विष्णोः परमं पदमिति विष्णोः—परस्य ब्रह्मणः परमं पदं सूरयः सदा पश्यन्ति इति वचनात्, सर्वकालदर्शनवन्तः परिपूर्णज्ञानाः केचन सन्तीति विज्ञायते। ये सूरयः, ते सदा पश्यन्तीति वचनव्यक्तिः; ये सदा पश्यन्ति, ते सूरय इति वा। उभयपक्षेऽप्यनेक-विधानं न संभवतीति चेन्न; अप्राप्तत्वात्सर्वस्य सर्वविशिष्टं परमं स्थानं विधीयते। यथोक्तम् *तद्गुणास्तु विधीयेरन्न विभागाद्विधानार्थे न चेदन्येन शिष्टाः, इति। यथा *यदाग्नेयोऽ-ष्टाकपालः, इत्यादिकर्मविधौ कर्मणो गुणानां चाप्राप्तत्वेन सर्वगुणविशिष्टं कर्म विधीयते, तथाऽत्रापि सूरिभिस्सदा दृश्यत्वेन विष्णोः परं स्थानमप्राप्तं प्रतिपादयतीति न कश्चिद्विरोधः। करणमन्त्राः क्रियमाणानुवादिनः स्तोत्रशस्त्ररूपाः जपादिषु विनियुक्ताश्च प्रकरणपठिताश्चा-प्रकरणपठिताश्च स्वार्थं सर्वं यथावस्थितमेवाप्राप्तमविरुद्धं ब्राह्मणवत् बोधयन्तीति हि वैदिकाः। (प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्; अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्।) विनियुक्तार्थप्रकाशिनां च देवतादिषु अप्राप्ताविरुद्धगुणविशेषप्रतिपादनं विनियोगा-नुगुणमेव। नेयं श्रुतिर्मुक्तजनविषया, तेषां सदादर्शनानुपपत्तेः; नापि मुक्तप्रवाहविषया, *सदा पश्यन्तीत्येकैककर्तृविषयतया प्रतीतेः श्रुतिभङ्गप्रसङ्गात्। मन्त्रार्थवादगता ह्यर्थाः कार्यपरत्वेऽपि सिद्ध्यन्तीत्युक्तम्; किं पुनः सिद्धवस्तुन्येव तात्पर्ये व्युत्पत्तिसिद्ध इति सर्वमुपपन्नम् ॥

ननु चात्र *तद्विष्णोः परमं पदमिति परस्वरूपमेव परमपदशब्देनाभिधीयते, *समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्, इत्यादिषु अव्यतिरेकदर्शनात्। नैवम्; *क्षयन्तमस्य रजसः पराके, *तदक्षरे परमे व्योमन्, *यो अस्याध्यक्षः परमे व्योमन्, *यो वेद निहितं गुहायां परमे व्योमन् इत्यादिषु परस्थानस्यैव दर्शनात्, *विष्णोः परमं पदमिति व्यतिरेक-निर्देशाच्च। *विष्ण्वाख्यं परमं पदमिति विशेषणात् अन्यदपि परमं पदं विद्यत इति तेनैव ज्ञायते। तदिदं परं स्थानं सूरिभिस्सदा दृश्यत्वेन प्रतिपाद्यते ॥

एतदुक्तं भवति— क्वचित् परस्थानं परमपदशब्देन प्रतिपाद्यते; क्वचित् प्रकृति-वियुक्तात्मस्वरूपम्; क्वचित् भगवत्स्वरूपम्। *तद्विष्णोः परमं पदमिति परस्थानम्;

*सर्गस्थित्यन्तकालेषु त्रिधैवं संप्रवर्तते । गुणप्रवृत्त्या परमं पदं तस्यागुणं महत् ॥ इत्यत्र प्रकृतिवियुक्तात्मस्वरूपम्; *समस्तहेयरहितं विष्ण्वाख्यं परमं पदमित्यत्र भगवत्स्वरूपम् । त्रीण्यप्येतानि परमप्राप्यत्वेन परमपदशब्देन प्रतिपाद्यन्ते ।

कथं त्रयाणां परमप्राप्यत्वमिति चेत्, भगवत्स्वरूपं परमप्राप्यत्वादेव परमं पदम्; इतरयोरपि भगवत्प्राप्तिगर्भत्वादेव परमपदत्वम् । सर्वकर्मविनिर्मुक्तात्मस्वरूपावाप्तिः भगवत्प्राप्तिगर्भा *त इमे सत्याः कामा अनृतापिधानाः, इति भगवतो गुणगणस्य तिरोधायकत्वेन अनृतशब्देन स्वकर्मणः प्रतिपादनात् । अनृतरूपतिरोधानं क्षेत्रज्ञकर्मेति कथमवगम्यत इति चेत्;

*अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् । तया तिरोहितत्वाच्च...... ॥

इत्यादिवचनात् । परस्थानप्राप्तिरपि भगवत्प्राप्तिगर्भैवेति सुव्यक्तम् । *क्षयन्तमस्य रजसः पराके, इति रजश्शब्देन त्रिगुणात्मिका प्रकृतिरुच्यते, केवलस्य रजसोऽनवस्थानात्; इमां त्रिगुणात्मिकां प्रकृतिमतिक्रम्य स्थिते स्थाने, क्षयन्तं–वसन्तमित्यर्थः । अनेन, त्रिगुणात्मकात् क्षेत्रज्ञस्य भोग्यभूताद्वस्तुन परस्तात् विष्णोर्वासस्थानमिति गम्यते । *वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसः परस्तात्, इत्यत्रापि तमश्शब्देन सैव प्रकृतिरुच्यते; केवलस्य तमसः अनवस्थानादेव; *रजसः पराके क्षयन्तमित्यनेनैकवाक्यत्वात्, तमसः परस्तात् वसन्तं महान्तमादित्यवर्णं पुरुषमहं वेदेत्ययमर्थोऽवगम्यते । *सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, *तदक्षरे परमे व्योमन्, इति तत् स्थानमविकाररूपं परमव्योमशब्दाभिधेयमिति च गम्यते । *अक्षरे परमे व्योमन्निति अस्य स्थानस्याक्षरत्वश्रवणात्, क्षररूपादित्यमण्डलादयः न परमव्योमशब्दाभिधेयाः । *यत्र पूर्वे साध्यास्सन्ति देवाः, *यत्रर्षयः प्रथमजा ये पुराणाः, इत्यादिषु च त एव सूरय इत्यवगम्यते । *तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परमं पदम्, इत्यत्रापि, विप्रासः –मेधाविनः, विपन्यवः– स्तुतिशीलाः, जागृवांसः –अस्खलितज्ञानाः; त एवास्खलितज्ञानाः, तत् विष्णोः परमं पदं सदा स्तुवन्तस्समिन्धते–इत्यर्थः ॥

एतेषां परिजनस्थानादीनाम्, *सदेव सोम्येदमग्र आसीत्, इत्यत्र ज्ञानबलैश्वर्यादिकल्याणगुणगणवत् परब्रह्मस्वरूपान्तर्भूतत्वात्, सदेव, एकमेव, अद्वितीयम्, इति ब्रह्मान्तर्भावोऽवगम्यते । एषामपि कल्याणगुणैकदेशत्वादेव *सदेव सोम्येदमग्र आसीदित्यत्र, इदमिति शब्दस्य कर्मवश्यभोक्तृवर्गमिश्रतद्भोग्यभूतप्रपञ्चविषयत्वाच्च, *सदा पश्यन्ति सूरय इति सदादर्शित्वेन च तेषां कर्मवश्यानन्तर्भावात्; *अपहतपाप्मा, इत्यादि *अपिपासः, इत्यन्तेन स्वलीलोपकरणभूतत्रिगुणात्मकप्रकृतिप्राकृततत्संसृष्टपुरुषगतं हेयस्वभावं सर्वं

प्रतिषिध्य, *सत्यकाम इत्यनेन स्वभोग्यभोगोपकरणजातस्य सर्वस्य नित्यता प्रतिपादिता। सत्याः कामाः यस्यासौ—सत्यकामः। काम्यन्त इति— कामाः, तेन परेण ब्रह्मणा स्वभोग्यतदुपकरणादयः स्वाभिमताः ये काम्यन्ते, ते सत्याः—नित्या इत्यर्थः। अन्यस्य लीलोपकरणस्यापि वस्तुनः प्रमाणसंबन्धयोग्यत्वे सत्यपि विकारास्पदत्वेनास्थिरत्वात्, तद्विपरीतं स्थिरत्वमेषां सत्यपदेनोच्यते; सत्यसंकल्प इति, एतेषु भोग्यतदुपकरणादिषु नित्येषु निरतिशयेष्वनन्तेषु सत्स्वपि, अपूर्वाणामपरिमितानामर्थानामपि संकल्पमात्रेण सिद्धिं वदति। एषां च भोगोपकरणानां लीलोपकरणानां चेतनानामचेतनानां स्थिराणामस्थिराणां च, तत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तिभेदादि सर्वं वदति *सत्यसंकल्प इति ॥

इतिहासपुराणयोः वेदोपबृंहणयोश्चायमर्थ उच्यते—

*तौ तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ। वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥

इति वेदोपबृंहणतया प्रारब्धे श्रीरामायणे—

*व्यक्तमेष महायोगी परमात्मा सनातनः। अनादिमध्यनिधनः महतः परमो महान् ॥
तमसः परमो धाता शङ्खचक्रगदाधरः। श्रीवत्सवक्षा नित्यश्रीरजय्यश्शाश्वतो ध्रुवः ॥
*शरा नानाविधाश्चापि धनुरायतविग्रहम्। अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः।
*विवेश वैष्णवं धाम सशरीरः सहानुगः।

श्रीमद्वैष्णवे पुराणे—

*समस्ताः शक्तयश्चैताः नृप! यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
*मूर्तं ब्रह्म महाभाग! सर्वब्रह्ममयो हरिः।
*नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी। यथा सर्वगतो विष्णुः तथैवेयं द्विजोत्तम! ॥
*देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥
*एकान्तिनस्सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः॥
*कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः।

महाभारते च— *दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम्।
गच्छ प्रभो! रक्ष चास्मान् प्रपन्नान् कल्पेकल्पे जायमानस्स्वमूर्त्या ॥
*कालस्संपच्यते तत्र न कालस्तत्र वै प्रभुः। इति ॥

परस्य ब्रह्मणो रूपवत्त्वं सूत्रकारश्च वदति *अन्तस्तद्धर्मोपदेशात् इति। योऽसावादित्यमण्डलान्तर्वर्ती तप्तकार्तस्वरगिरिवरप्रभः सहस्रांशुशतसहस्रकिरणः गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकासितपुण्डरीकदलामलायतेक्षणः सुभ्रूललाटः सुनासः सुस्मिताधरविद्रुमः सुरुचिरकोमलगण्डः कम्बुग्रीवः समुन्नतांसविलम्बिचारुरूपादिव्यकर्णकिसलयः पीनवृत्तायतभुजः चारुतराताम्रकरतलानुरक्ताङ्गुलीभिरलङ्कृतः तनुमध्यः विशाल-

वक्षस्स्थलः, समविभक्तसर्वाङ्गः, अनिर्देश्यदिव्यरूपसंहननः, स्निग्धवर्णः प्रबुद्धपुण्डरीकचारुचरणयुगलः, स्वानुरूपपीताम्बरधरः, अमलकिरीटकुण्डलहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमिताश्चर्यानन्तदिव्यभूषणः, शङ्खचक्रगदासिशार्ङ्गश्रीवत्सवनमालालङ्कृतः, अनवधिकातिशयसौन्दर्याहृताशेषमनोदृष्टिवृत्तिः, लावण्यामृतपूरिताशेषचराचरभूतजातः, अत्यद्भुताचिन्त्यनित्ययौवनः, पुष्पहाससुकुमारः, पुण्यगन्धवासितानन्तादिगन्तरालः, त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः करुणानुरागमधुरलोचनावलोकिताश्रितवर्गः पुरुषवरो दृश्यते; स च, निखिलजगदुदयविभवलयलीलः, निरस्तसमस्तहेयः, समस्तकल्याणगुणनिधिः, स्वेतरसमस्तवस्तुविलक्षणः, परमात्मा, परं ब्रह्म, नारायणः इत्यवगम्यते; *तद्धर्मोपदेशात् – *स एष सर्वेषां लोकानामीशस्सर्वेषां कामानाम्, *स एष सर्वेभ्यः पाप्मभ्य उदितः, इत्यादिदर्शनात्॥ तस्यैते गुणाः *सर्वस्य वशी सर्वस्येशानः, *अपहतपाप्मा विजरः, इत्यादि *सत्यसंकल्पः इत्यन्तम्, *विश्वतः परमं नित्यं विश्वं नारायणं हरिम्, * पतिं विश्वस्यात्मेश्वरम्, इत्यादिवाक्यप्रतिपादिताः ॥

वाक्यकारश्चैतत् सुस्पष्टमाह—*हिरण्मयः पुरुषो दृश्यते, इति प्राज्ञस्सर्वान्तरस्स्यात्—लोककामेशोपदेशात्—तथोदयात्पाप्मनाम्, इत्यादिना॥ तस्य च रूपस्यानित्यतादि वाक्यकारेणैव प्रतिषिद्धम्; *स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्, इति, उपासितुः अनुग्रहार्थः परमपुरुषस्य रूपसंग्रह इति पूर्वपक्षं कृत्वा, *रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात् इति। यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपभूता गुणाः, तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः ॥

भाष्यकारेणैतद्व्याख्यातम्—*अञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा त्वकलुषेण साधनान्तरवता गृह्यते, *न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन, इति श्रुतेः; न ह्यरूपाया देवताया रूपमुपदिश्यते; यथाभूतवादि हि शास्त्रम्; *माहारजतं वासः, *वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसः परस्तात् इति प्रकरणान्तरनिर्देशाच्च साक्षिणः इत्यादिना। हिरण्मय इति रूपसामान्यात् चन्द्रमुखवत्, न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः इति ॥

यथा ज्ञानादिकल्याणगुणानन्त्यनिर्देशात् अपरिमितकल्याणगुणविशिष्टं परं ब्रह्मेत्यवगम्यते, एवम् *आदित्यवर्णम्, *पुरुषम् इत्यादिनिर्देशात्, स्वाभिमतस्वानुरूपकल्याणतमरूपः परब्रह्मभूतः पुरुषोत्तमो नारायण इति ज्ञायते। तथा *अस्येशाना, *ह्रीश्च ते लक्ष्मीश्च पत्न्यौ *सदा पश्यन्ति सूरयः, *तमसः परस्तात्, *क्षयन्तमस्य रजसः पराके, इत्यादिना पत्नीपरिजनस्थानादीनां निर्देशादेव तथैव सन्तीत्यवगम्यते। यथाऽऽह भाष्यकारः—*यथाभूतवादि हि शास्त्रम् इति ॥

एतदुक्तं भवति—यथा *सत्यं ज्ञानमनन्तं ब्रह्मेति निर्देशात् परमात्मस्वरूपं समस्तहेयप्रत्यनीकानवधिकानन्दैकतानतया अपरिच्छेद्यतया च सकलेतरविलक्षणम्; तथा *यस्सर्वज्ञः सर्ववित् *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च *तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इत्यादिनिर्देशात् निरतिशयासंख्येयाश्च गुणाः सकलेतरविलक्षणाः; तथा *आदित्यवर्णमित्यादिनिर्देशात् रूपपरिजनस्थानादयश्च सकलेतरविलक्षणाः स्वासाधारणा अनिर्देश्यस्वरूपस्वभावा इति ॥

वेदाः प्रमाणं चेत्, विध्यर्थवादमन्त्रगतं सर्वम् अपूर्वमविरुद्धमर्थजातं यथावस्थितमेव बोधयन्ति। प्रामाण्यं च वेदानाम् *औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः *इत्युक्तम्। यथा अग्निजलादीनामौष्ण्यादिशक्तियोगस्स्वाभाविकः, यथा च चक्षुरादीनामिन्द्रियाणां बुद्धिविशेषजननशक्तिस्स्वाभाविकी; तथा शब्दस्यापि बोधकत्वशक्तिः स्वाभाविकी ॥ न च हस्तचेष्टादिवत् सङ्केतमूलं शब्दस्य बोधकत्वमिति वक्तुं शक्यम्; अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केतयितृपुरुषाज्ञानात्; यानि सङ्केतमूलानि, तानि सर्वाणि साक्षाद्वा परंपरया वा ज्ञायन्ते ॥ न च देवदत्तादिशब्दवत् कल्पयितुं युक्तम्; तेषु च साक्षाद्वा परंपरया वा संकेतो ज्ञायते, गवादिशब्दानां तु अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केताज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी। अतः अग्न्यादीनामौष्ण्यादिशक्तिवत्, इन्द्रियाणां बोधकत्वशक्तिवच्च शब्दस्यापि बोधकत्वशक्तिराश्रयणीया ॥

ननु च इन्द्रियवत् शब्दस्यापि बोधकत्वं स्वाभाविकम् (चेत्); संबन्धग्रहणं बोधकत्वाय किमित्यपेक्षते? लिङ्गवत् इत्युच्यते, यथा ज्ञातसंबन्धनियमं धूमादि अग्न्यादिविज्ञानजनकम्, तथा ज्ञातसंबन्धनियमश्शब्दोऽप्यर्थविशेषबुद्धिजनकः। एवं तर्हि शब्दोऽप्यर्थविशेषस्य लिङ्गमिति अनुमानमेव स्यात्। नैवम्—शब्दार्थयोस्संबन्धः बोध्यबोधकभाव एव; धूमादीनां तु संबन्धान्तरमिति, तस्य संबन्धस्य ज्ञानद्वारेण बुद्धिजनकत्वमिति विशेषः ॥ एवं गृहीतसंबन्धस्य बोधकत्वदर्शनात् अनाद्यनुसन्धानाविच्छेदेऽपि सङ्केताज्ञानात् बोधकत्वशक्तिरेवेति निश्चीयते ॥

एवं बोधकानां पदसंघातानां संसर्गविशेषबोधकत्वेन वाक्यशब्दाभिधेयानाम् उच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकः, ते पौरुषेयाश्शब्दा इत्युच्यन्ते; यत्र तूच्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनितसंस्कारपूर्वकः, सर्वदा अपौरुषेयाः, ते च वेदाः इत्युच्यन्ते ॥ एतदेव वेदानामपौरुषेयत्वं नित्यत्वं च, यत् पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वम् ॥

ते च, आनुपूर्वीविशेषेण संस्थिताः अक्षरराशयो वेदाः ऋग्यजुस्सामाथर्वभेदभिन्नाः अनन्तशाखा वर्तन्ते; ते च विध्यर्थवादमन्त्ररूपा वेदाः, परब्रह्मभूतनारायणस्वरूपं, तदाराधनप्रकारम्, आराधितात् फलविशेषं च बोधयन्ति ॥

परमपुरुषवत्, तत्स्वरूपतदाराधनतत्फलज्ञापकवेदाख्यं शब्दजातं नित्यमेव ॥ वेदानामनन्तत्वात्, दुरवगाहत्वाच्च परमपुरुषनियुक्ताः परमर्षयः कल्पे कल्पे निखिलजगदुपकारार्थं वेदार्थं स्मृत्वा, विध्यर्थवादमन्त्रमूलानि धर्मशास्त्राणि इतिहासपुराणानि च चक्रुः ॥ लौकिकाश्च शब्दाः वेदराशेरुद्धृत्यैव तत्तदर्थविशेषनामतया पूर्ववत् प्रयुक्ताः पारंपर्येण च प्रयुज्यन्ते ॥ ननु च वैदिका एव सर्वे वाचकाश्शब्दाश्चेत्, छन्दस्येवम् भाषायामेवमिति लक्षणभेदः कथमुपपद्यते ? उच्यते—तेषामेव शब्दानां तस्यामेवानुपूर्व्यां वर्तमानानां तथैव प्रयोगः; अन्यत्र प्रयुज्यमानानामन्यथेतीति न कश्चिद्दोषः ॥

एवम् इतिहासपुराणधर्मशास्त्रोपबृंहितसाङ्गवेदवेद्यः परब्रह्मभूतो नारायणः निखिलहेयप्रत्यनीकः सकलेतरविलक्षणः अपरिच्छिन्नज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणाकरः, स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदचिदचिद्वस्तुजातः, अपरिच्छेद्यस्वरूपस्वभावानन्तमहाविभूतिः, नानाविधानन्तचेतनाचेतनात्मकप्रपञ्चलीलोपकरणः—इति प्रतिपादितम् ॥ *सर्वं खल्विदं ब्रह्म, *ऐतदात्म्यमिदं सर्वं...तत्त्वमसि श्वेतकेतो *एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् *ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपालास्त्रयी च। त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव ॥ *त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः* *ऋतधामा वसुः पूर्वः वसूनां त्वं प्रजापतिः *जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्। अग्निः कोपः प्रसादस्ते सोमश्श्रीवत्सलक्षणः ॥ *ज्योतींषि विष्णुर्भुवनानि विष्णुः वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वम् यदस्ति यन्नास्ति च विप्रवर्य ! ॥ इत्यादिसामानाधिकरण्यप्रयोगेषु सर्वैश्शब्दैः सर्वशरीरितया सर्वप्रकारं ब्रह्मैवाभिधीयत इति चोक्तम् ॥

सत्यसङ्कल्पं परं ब्रह्म स्वयमेव बहुप्रकारं स्यामिति सङ्कल्प्य, अचित्समष्टिरूपमहाभूतसूक्ष्मं वस्तु भोक्तृवर्गसमूहं च स्वस्मिन् प्रलीनं स्वयमेव विभज्य, तस्मात् भूतसूक्ष्मात् वस्तुनः महाभूतानि सृष्ट्वा, तेषु च भोक्तृवर्गमात्मतया प्रवेश्य, तैः चिदधिष्ठितैर्महाभूतैरन्योन्यसंसृष्टैः कृत्स्नं जगत् विधाय, स्वयमपि सर्वस्यात्मतया प्रविश्य, परमात्मत्वेनावस्थितं सर्वशरीरं बहुप्रकारमवतिष्ठते ॥ यदिदं महाभूतसूक्ष्मं वस्तु, तदेव प्रकृतिशब्देनाभिधीयते। भोक्तृवर्गसमूह एव पुरुषशब्देनोच्यते। तौ च प्रकृतिपुरुषौ परमात्मशरीरतया परमात्मप्रकारभूतौ; तत्प्रकारः परमात्मैव, प्रकृतिपुरुषशब्दाभिधेयः। *सोऽकामयत, बहु स्यां प्रजायेयेति...तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च, सत्यं चानृतं च सत्यमभवत् *इति पूर्वोक्तं सर्वमनयैव श्रुत्या व्यक्तम् ॥

ब्रह्मप्राप्त्युपायश्च शास्त्राधिगततत्त्वज्ञानपूर्वकस्वकर्मानुगृहीतभक्तिनिष्ठासाध्यानवधिकातिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपपरभक्तिरेवेत्युक्तम्। भक्तिशब्दश्च प्रीतिविशेषे वर्तते। प्रीतिश्च ज्ञानविशेष एव॥ ननु च सुखं प्रीतिरित्यनर्थान्तरम्; सुखं च ज्ञानविशेषसाध्यं पदार्थान्तरमिति लौकिकाः। नैवम्; येन ज्ञानविशेषेण तत् साध्यमित्युच्यते, स एव ज्ञानविशेषस्सुखम्॥ एतदुक्तं भवति—विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि। तानि च विषयाधीनविशेषाणि तथा भवन्ति। येन च विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतम्, तद्विषयज्ञानमेव सुखम्; तदतिरेकि पदार्थान्तरं नोपलभ्यते; तेनैव सुखित्वव्यवहारोपपत्तेश्च।

एवंविधसुखरूपज्ञानस्य विशेषकत्वम् ब्रह्मव्यतिरिक्तस्य वस्तुनः सातिशयमस्थिरं च; ब्रह्मणस्तु अनवधिकातिशयं स्थिरं चेति *आनन्दो ब्रह्म इत्युच्यते। विषयायत्तत्वात् ज्ञानस्य, सुखरूपतया ब्रह्मैव सुखम्। तदिदमाह— *रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति इति। ब्रह्मैव सुखमिति ब्रह्म लब्ध्वा सुखी भवतीत्यर्थः। परमपुरुषः स्वेनैव स्वयमनवधिकातिशयसुखस्सन् परस्यापि सुखं भवति, सुखरूपत्वाविशेषात्; ब्रह्म यस्य ज्ञानविषयो भवति स सुखी भवतीत्यर्थः।

तदेवं, परस्य ब्रह्मणः अनवधिकातिशयासंख्येयकल्याणगुणाकरस्य निरवद्यस्य अनन्तमहाविभूतेः अनवधिकातिशयसौशील्यवात्सल्यसौन्दर्यजलधेः सर्वशेषित्वात्, आत्मनश्शेषत्वात्, प्रतिसंबन्धितयाऽनुसन्धीयमानम् अनवधिकातिशयप्रीतिविषयं सत् परं ब्रह्मैव एनमात्मानं प्रापयतीति॥

ननु च अत्यन्तशेषतैवात्मनोऽनवधिकातिशयं सुखमित्युक्तं भवति; तदेतत् सर्वलोकविरुद्धम्। तथा हि— सर्वेषामेव चेतनानां स्वातन्त्र्यमेवेष्टतमं दृश्यते, पारतन्त्र्यं दुःखतरम्; स्मृतिश्च— *सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् *तथा च *सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् * इति। तदिदमनधिगतदेहातिरिक्तात्मस्वरूपाणां शरीरात्माभिमानविजृम्भितम्; तथा हि—शरीरं हि मनुष्यत्वादिजातिगुणाश्रयपिण्डभूतं स्वतन्त्रं प्रतीयते; तस्मिन्नेव अहमिति संसारिणां प्रतीतिः। आत्माभिमानो यादृशः तदनुगुणैव पुरुषार्थप्रतीतिः। सिंहव्याघ्रवराहमनुष्ययक्षरक्षःपिशाचदेवदानवस्त्रीपुंसव्यवस्थितात्माभिमानानां सुखानि व्यवस्थितानि; तानि च परस्परविरुद्धानि। तस्मात्, आत्माभिमानानुगुणपुरुषार्थव्यवस्थया सर्वं समाहितम्॥

आत्मस्वरूपं तु देवादिदेहविलक्षणं ज्ञानैकाकारम्; तच्च परशेषतैकस्वरूपम्। यथावस्थितात्माभिमाने तदनुगुणैव पुरुषार्थप्रतीतिः। *आत्मा ज्ञानमयोऽमलः इति स्मृतेः ज्ञानैकाकारता प्रतिपन्ना। *पतिं विश्वस्य इत्यादिश्रुतिगणैः परमात्मशेषतैकाकारता च प्रति-

पादिता। अतः सिंहव्याघ्रादिशरीरात्माभिमानवत् स्वतन्त्राभिमानोऽपि कर्मकृतविपरीतात्मज्ञानरूपो वेदितव्यः। अतः कर्मकृतमेव परमपुरुषव्यतिरिक्तविषयाणां सुखत्वम्; अत एव तेषामल्पत्वमस्थिरत्वं च। परमपुरुषस्यैव स्वत एव सुखत्वम्। अतः तदेव स्थिरमनवधिकातिशयं च; *कं ब्रह्म खं ब्रह्म *आनन्दो ब्रह्म *सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतेः॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य वस्तुनः स्वरूपेण सुखत्वाभावः, कर्मकृतत्वेन चास्थिरत्वं भगवता पराशरेणोक्तम्– *नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम!। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः॥ सुखदुःखाद्येकान्तरूपेण वस्तुनो वस्तुत्वं कुतः? तदेकान्तता पुण्यपापकृतेत्यर्थः। एवम् अनेकपुरुषापेक्षया कस्यचित् सुखमेव कस्यचित् दुःखं भवतीत्यनवस्थां प्रतिपाद्य, एकस्मिन्नपि पुरुषे न व्यवस्थितमित्याह– *तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्॥ इति। सुखदुःखात्मकत्वं सर्वस्य वस्तुनः कर्मकृतम्, न वस्तुस्वरूपकृतम्; अतः कर्मावसाने तदपैतीत्यर्थः॥

यत्तु सव परवशं दुःखमित्युक्तम्; तत् परमपुरुषव्यतिरिक्तानां परस्परशेषशेषिभावाभावात्, तद्व्यतिरिक्तं प्रति शेषता दुःखमेवेत्युक्तम्। *सेवा श्ववृत्तिराख्यातेत्यत्रापि असेव्यसेवा श्ववृत्तिरेवेत्युक्तम्। *स ह्याश्रमैस्सदोपास्यः समस्तैरेक एव तु, इति सर्वैरात्मयाथात्म्यविद्भिस्सेव्यः पुरुषोत्तम एक एव। यथोक्तं भगवता–
*मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥इति।

इयमेव भक्तिरूपा सेवा *ब्रह्मविदाप्नोति परम्, *तमेवं विद्वानमृत इह भवति, *ब्रह्म वेद ब्रह्मैव भवति, इत्यादिषु वेदनशब्देनाभिधीयत इत्युक्तम्। *यमेवैष वृणुते तेन लभ्यः इति विशेषणात्, यमेवैष वृणुत इति भगवता वरणीयत्वं प्रतीयते; वरणीयश्च प्रियतमः; यस्य भगवति अनवधिकातिशया प्रीतिर्जायते, स एव भगवतः प्रियतमः। तदुक्तं भगवतैव– *प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः * इति।

तस्मात्, परभक्तिरूपापन्नमेव वेदनं तत्त्वतो भगवत्प्राप्तिसाधनम्॥ यथोक्तं भगवता द्वैपायनेन मोक्षधर्मे सर्वोपनिषद्व्याख्यानरूपम्—

*न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह॥ इति।

धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति–साक्षात्करोति, प्राप्नोतीत्यर्थः; *भक्त्या त्वनन्यया शक्यः इत्यनेनैकार्थ्यात्। भक्तिश्च ज्ञानविशेष एवेति सर्वमुपपन्नम्॥

सारासारविवेकज्ञाः गरीयांसो विमत्सराः॥
प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसंग्रहः॥

इति श्रीभगवद्रामानुजविरचितः वेदार्थसंग्रहस्समाप्तः॥

# वेदार्थसंग्रहोपात्तप्रमाणवचानानामकारादि क्रमसूचिका।

संख्या, पृष्ठसंख्या

श्रीरस्तु

श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजग्रन्थमालायाम्

# शारीरकमीमांसाभाष्यम् ॥

## प्रथमाध्याये—प्रथमपादे—जिज्ञासाधिकरणम् ॥

---

अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिञ्शेमुषी भक्तिरूपा ॥
पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थितामानीतां तु निजाक्षरैस्सुमनसो भौमाः पिबन्त्वन्वहम् ॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते—

### 1 ॐ ॥ अथातो ब्रह्मजिज्ञासा ॥ १–१–१ ॥

अत्रायमथशब्द आनन्तर्ये भवति। अतश्शब्दो वृत्तस्य हेतुभावे। अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी, *कर्तृकर्मणोः कृति* इति विशेषविधानात्। यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः; तथाऽप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते। न च *प्रतिपदविधाना षष्ठी न समस्यते, इति कर्मणि षष्ठ्यास्समासनिषेधश्शङ्कनीयः; *कृद्योगा च षष्ठी समस्यते इति प्रतिप्रसवसद्भावात्। ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः; स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात्, भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म। ज्ञातुमिच्छा जिज्ञासा। इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते ॥

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः—

*वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा, इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्— *संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः, इति। अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः। मीमांसाशास्त्रम्— *अथातो धर्मजिज्ञासा, इत्यारभ्य *अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्, इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्। तथाहि— प्रथमं तावत् *स्वाध्यायोऽध्येतव्यः, इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते॥ तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् *अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत् इत्यनेन, *श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥ इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते। एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते। अध्ययनं च स्वाध्यायसंस्कारः, *स्वाध्यायोऽध्येतव्यः, इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्; जपादिना स्वरूपेणापि तत्साधनत्वाच्च॥

एवमध्ययनविधिर्मन्त्रवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति। अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्, गृहीतात्स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषस्स्वयमेव प्रवर्तते। तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति। तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति— *तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, *अन्तवदेवास्य तद्भवति, *न ह्यध्रुवैः प्राप्यते, *प्लवा ह्येते अदृढा यज्ञरूपाः, *परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्॥ तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥ *ब्रह्मविदाप्नोति परम्, *न पुनर्मृत्यवे तदेकं पश्यति, *न पश्यो मृत्युं पश्यति, *स स्वराड्भवति, *तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते *पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीत्यादीनि॥

ननु च—साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वम्, स्वर्गादीनां च क्षयित्वं, ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्; आपातप्रतीतिर्विद्यत एव; तथाऽपि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थस्संशयविपर्ययौ नातिवर्तते; अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्; तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान्॥

( लघुपूर्वपक्षः )

ननु च—ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते; तदनधिगतकर्मणो न शक्यं कर्तुम्—इति चेत्; अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते? प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रं, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव, कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च—*सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्, इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्। नैतद्युक्तं, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्? श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति— *अन्तवदेवास्य तद्भवति, *तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते, *ब्रह्मविदाप्नोति परम्, *ब्रह्म वेद ब्रह्मैव भवति, *तमेव विदित्वाऽतिमृत्युमेति—इत्याद्याः ॥

यदपि चेदमुक्तं यज्ञादिकर्मापेक्षा विद्येति। तद्वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ, *विविदिषन्ति, इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह— *शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्— इति। तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां, *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, *सत्यं ज्ञानमनन्तं ब्रह्म, *निष्कलं निष्क्रियं शान्तम्, *अयमात्मा ब्रह्म, *तत्त्वमसि, इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति, एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ॥

एतदुक्तं भवति— ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणां नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य *ब्राह्मणा विविदिषन्ति, इत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगात् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्॥

(लघुसिद्धान्तः)

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः; सा च ब्रह्मविज्ञानादेव भवति—इति। तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्— किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानम्? इति। न तावद्वाक्यजन्यं ज्ञानम्; तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न च वाच्यं—भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य सहसव भेदज्ञानानिवृत्तिर्न दोषाय; चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्। अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति—इति। सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलमथ चानुवर्तत इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानुवृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते। अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। तथा च श्रुतयः— *विज्ञाय प्रज्ञां कुर्वीत, *अनुविद्य विजानाति, *ओमित्येवात्मानं ध्यायथ, *निचाय्य तं मृत्युमुखात्प्रमुच्यते, *आत्मानमेव लोकमुपासीत, *आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, *सोऽन्वेष्टव्यस्सविजिज्ञासितव्यः —इत्येवमाद्याः॥

अत्र *निदिध्यासितव्यः इत्यादिनैकार्थ्यात्, *अनुविद्य विजानाति, *विज्ञाय प्रज्ञाङ्कुर्वीत, इत्येवमादिभिर्वाक्यार्थज्ञानं (नस्य) ध्यानोपकारकत्वात्, 'अनुविद्य', 'विज्ञाय' इत्यनूद्य 'प्रज्ञां कुर्वीत', 'विजानाति' इति ध्यानं विधीयते। श्रोतव्य इति चानुवादः, स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्। श्रवण-

प्रतिष्ठार्थत्वान्मननस्य, मन्तव्य इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च— *आवृत्तिरसकृदुपदेशात्, इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्— *मनो ब्रह्मेत्युपासीतेत्यत्र *भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद, *न स वेद अकृत्स्नो ह्येषः— आत्मेत्येवोपासीत, *यस्तद्वेद यत्स वेद स मयैतदुक्तः, इत्यत्र *अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से— इति ॥

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्; *ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः, इति ध्रुवायास्स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा, *भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इत्यनेनैकार्थ्यात्। एवं च सति, *आत्मा वा अरे द्रष्टव्यः इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता। वाक्यकारेणैतत्सर्वं प्रपञ्चितम्—*वेदनमुपासनं स्यात्तद्विषये श्रवणात्, इति। सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। *सकृत्प्रत्ययं कुर्याच्छाब्दार्थस्य कृतत्वात्प्रयाजादिवत्, इति पूर्वपक्षं कृत्वा, *सिद्धं तूपासनशब्दात्, इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। *उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च, इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि— *नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियस्स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम् *तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति, *प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। इति च। अतस्साक्षात्काररूपा स्मृतिस्स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति। एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते— *तमेव विदित्वाऽतिमृत्युमेति, *तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते।

*नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन !। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप !॥
*पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ॥ इति ॥

एवंरूपाया ध्रुवानुस्मृतेस्साधनानि यज्ञादीनि कर्माणीति— *यज्ञादिश्रुतेरश्ववत्, इत्यभिधास्यते। यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते; तथाऽपि तस्यैव

वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च *आप्रयाणात्तत्रापि हि दृष्टम्, *अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्, *सहकारित्वेन च, इत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—*तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यस्संभवान्निर्वचनाच्च, इति। विवेकादीनां स्वरूपं चाह *जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः, इति। अत्र निर्वचनम्—*आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः, इति। *विमोकः कामानभिष्वङ्गः, इति। *शान्त उपासीत, इति निर्वचनम्। *आरम्बणसंशीलनं पुनःपुनरभ्यासः, इति। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण— *सदा तद्भावभावितः, इति। *पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया, इति। निर्वचनं— *क्रियावानेष ब्रह्मविदां वरिष्ठः, *तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन, इति च। *सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि, इति। निर्वचनं— *सत्येन लभ्यः, *तेषामेवैष विरजो ब्रह्मलोकः, इत्यादि। *देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसाद इति तद्विपर्ययोऽनवसादः। निर्वचनं— *नायमात्मा बलहीनेन लभ्यः, इति। *तद्विपर्ययजा तुष्टिरुद्धर्षः इति, तद्विपर्ययोऽनुद्धर्षः। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि— *शान्तो दान्तः, इति। एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति॥

तथा च श्रुत्यन्तरम्— *विद्यां चाविद्यां च यस्तद्वेदोभयँ सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ इति॥ अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया—कर्मणा। मृत्युं—ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा-अपोह्य। विद्यया-ज्ञानेन। अमृतं-ब्रह्म। अश्नुते-प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरद्विहितं कर्मैव; यथोक्तम्— *इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥ इति॥

ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम्— *एष एवासाधु कर्म कारयति तं यमधो निनीषति, इति श्रुत्याऽवगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वं, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम् *सत्त्वात्संजायते ज्ञानम्, इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनं च अनभिसंहितफलेनानुष्ठितेन कर्मणा। तथा च श्रुतिः— *धर्मेण पापमपनुदति, इति। तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं, केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या॥

अपि च नित्यानित्यवस्तुविवेकादयश्च, मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः।

उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि, ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥

( महापूर्वपक्षः )

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्, *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, *अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः, *सत्यं ज्ञानमनन्तं ब्रह्म, *निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, *यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्॥ *न दृष्टेर्द्रष्टारं पश्येः, न मतेर्मन्तारं मन्वीथाः, *आनन्दो ब्रह्म, *इदं सर्वं यदयमात्मा, *नेह नानाऽस्ति किंचन, मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति, *यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्, *वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, *यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति *न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि, *मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्,

*प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥
*ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥
*परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते!॥
*यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥
ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर!॥
*तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः॥
*यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम!। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥
*वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥
*सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः॥
*विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥
*अहमात्मा गुडाकेश! सर्वभूताशयस्थितः॥ *क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!
*न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैश्शास्त्रैः, निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या, इत्यभिधानात्॥

मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्, यथा रज्ज्वाद्यधिष्ठानसर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। *अनृतेन हि प्रत्यूढाः *तेषां सत्यानां सतामनृतमपिधानम्, *नासदासीन्नो सदासीत्तदानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्, *मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, *इन्द्रो मायाभिः पुरुरूप ईयते, *मम माया दुरत्यया, *अनादिमायया सुप्तो यदा जीवः प्रबुध्यते— इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—

*ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥
*तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद्द्विज! वस्तुजातम्।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम्॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥ इति॥

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति *न पुनर्मृत्यवे तदेकं पश्यति, *न पश्यो मृत्युं पश्यति, *यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति, *भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ *ब्रह्म वेद ब्रह्मैव भवति, *तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः, इत्याद्याश्श्रुतयः। अत्र मृत्युशब्देनाविद्याऽभिधीयते। यथा सनत्सुजातवचनम् *प्रमादं वै मृत्युमहं ब्रवीमि सदाप्रमादममृतत्वं ब्रवीमि—इति। *सत्यं ज्ञानमनन्तं ब्रह्म, *विज्ञानमानन्दं ब्रह्म, इत्यादिशोधकवाक्यावसेयनिर्विशेषचिन्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानं च,*अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद, *अकृत्स्नो ह्येषः, *आत्मेत्येवोपासीत, *तत्त्वमसि, *त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि, इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव—*आत्मेति तूपगच्छन्ति ग्राहयन्ति च, इति। तथा च वाक्यकारः *आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः, इति॥ अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता॥

ननु च, सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते? कथं वा

'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ? तत्र द्वयोः प्रत्यक्षयोर्विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्; तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः ? पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्; शास्त्रप्रत्यक्षयोरपि समानमेतत्।

एतदुक्तं भवति–बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि तद्बाध्यम्; अनन्यथासिद्धमनवकाशमितरद्बाधकम्–इति सर्वत्र बाध्यबाधकभावनिर्णय इति ॥

तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। संभाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः। ननु, अनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य, *ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्; पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः। ननु च, *यस्सर्वज्ञस्सर्ववित्, *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, *सत्यकामस्सत्यसङ्कल्पः, इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् ? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ॥

एतदुक्तं भवति– *अस्थूलमनण्वह्रस्वमदीर्घम्, * सत्यं ज्ञानमनन्तं ब्रह्म, *निर्गुणम्, *निरञ्जनम्–इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति; इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम् ॥

ननु च, *सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते ॥ नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः। अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्; अनभिधानज्ञो देवानां प्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः; ततश्चैकार्थत्वं न सिध्यति। एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात्। एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाश्शृणु। एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च॥

एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तब्रह्मपरम्। ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम्। अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम्। न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः। अपि तु सकलेतरविरोधि ब्रह्मैव।

यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनस्सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् ॥

तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव, *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् इत्यादिभिरैकार्थ्यम्। *यतो वा इमानि भूतानि जायन्ते, *सदेव सोम्येदमग्र आसीत्, *आत्मा वा इदमेक एवाग्र आसीत्—इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते *सत्यं ज्ञानमनन्तं ब्रह्मेति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते। अन्यथा, *निरञ्जनम्, *निर्गुणम्, इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति। ननु च, सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात्। नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसंमतम्। ननु च, सर्वपदानां लक्षणा न दृष्टचरी। ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय। तथा च शास्त्रस्थैरभ्युपगम्यते। कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते। कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव। अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्। सति च विरोधे बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य। ननु च, घटोऽस्ति पटोस्ति इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्; तथैवात्र विविच्यते। कथम्? घटोऽस्तीत्यत्रास्तितत्वं तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः ॥

किंच भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुस्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च वाच्यम्, स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति। स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोस्स्वरूपत्वाविशेषात्।

यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। हस्तः करः इतिवत् घटो भिन्नः इति पर्यायत्वं च स्यात्। नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। किंच जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो भेदस्य दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥

किंच 'घटोऽस्ति' 'पटोऽस्ति 'घटोऽनुभूयते' 'पटोऽनुभूयते' इति सर्वे पदार्थास्सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्था सती; व्यावर्तमानास्सर्पभूदलनाम्बुधारादयोऽपरमार्थाः। ननु च, रज्जुसर्पादौ 'रज्जुरियं न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यम्, न व्यावर्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया, किंत्वबाधितत्वात्। अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते, घटादौ दृष्टा व्यावृत्तिस्सा किंरूपेति विवेचनीयम्। किं घटोस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत् सन्मात्रमबाधितमनुवर्तते। तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—सत्परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्। घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत्—इति। एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्थः; सैव सती ॥

ननु च, सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्। नैवम्; भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात्सदनुभूतिरेव ॥ सा च स्वतस्सिद्धा, अनुभूतित्वात्। अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किंच अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्, सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ॥

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयते' इति। न हि कश्चित् 'घटोऽयम्' इति जानन् तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति। तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेस्सद्भाव एव हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते। एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्यत इति चेत्; किमिदमजडत्वं नाम? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्संभवात्; नहि कदाचिदपि सुखादयस्सन्तो नोपलभ्यन्ते। अतोऽनुभूतिस्स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति। तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्। अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः; उभयाभ्युपेतानुभूत्यैवाशेष-

व्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते। नापि ज्ञानान्तरसिद्धा। अपि तु सर्वं साधयन्त्यनुभूतिस्स्वयमेव सिध्यति। प्रयोगश्च—अनुभूतिरनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्; यस्स्वसंबन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः स तयोस्स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ। रूपादिर्हि पृथिव्यादौ स्वसंबन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसंबन्धाधीनश्चाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ॥

सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च, प्रागभावाद्यभावात्। तदभावश्च स्वतस्सिद्धत्वादेव। न ह्यनुभूतेस्स्वतस्सिद्धायाः प्रागभावस्स्वतोऽन्यतो वाऽवगन्तुं शक्यते। अनुभूतिस्स्वाभावमवगमयन्ती, सती तावन्नावगमयति। तस्यास्सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति? एवमसत्यपि नावगमयति; अनुभूतिस्स्वयमसती स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणम् 'अनुभूतिरियम्' इति विषयीकृत्य तदभावं साधयेत्; स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वात्, न तत्प्रागभावोऽन्यतश्शक्यावगमः। अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रतिसंबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ॥

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्यास्स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति ॥

ननु च, अहं जानामीति ज्ञातृता प्रतीतिसिद्धा। नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य, अनुभूतेस्स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहंकारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्। सुषुप्तिमूर्च्छादावहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम्। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात् कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथाऽहमर्थात् ज्ञातुरपि विलक्षणस्साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्। एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहंकारस्स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति। तत्कृतोयं 'जानाम्यहम्' इति भ्रमः। स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः, रविकर-

जायन्ते...तद्ब्रह्म* इति। सूत्रे यत इति हेतौ पञ्चमी, जनिस्थितिलयानां साधारणत्वात्। जनि-हेतुत्वञ्च निमित्तोपादानरूपं विवक्षितम्, *यतः इति हि श्रुतिः। इहोभयविषया कथमिति चेत्, *यतो वा इमानीति प्रसिद्धवन्निर्देशात्, प्रसिद्धेश्च उभयविषयत्वात्। *सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्...तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत* इत्यत्र, सदेव इदम् अग्रे एकमेव आसीदिति उपादानतां प्रतिपाद्य, अद्वितीयमिति अधिष्ठात्रन्तरनिवारणात् सच्छब्दवाच्यं ब्रह्मैव निमित्तमुपादानञ्चेति विज्ञायते। तथा तदैक्षत बहु स्यां प्रजायेयेत्यात्मन एव विचित्रस्थिरत्रसरूपेण बहुभवनं सङ्कल्प्य तथैव सृष्टिवचनाच्च। अतश्श्रुतावपि यतः इति हेतौ पञ्चमी। अत्रैव ब्रह्मणो जगन्निमित्तत्वमुपादानत्वञ्च प्रतिपादितम्, अर्थविरोधात् *अस्मान्मायी सृजते विश्वमेतत्* इत्यादि विशेषश्रुत्या चाक्षिप्य, *प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् *अभिध्योपदेशाच्च *साक्षाच्चो-भयाम्नानात् *आत्मकृतेः* इत्यादिभिस्सूत्रैः परिहरिष्यते। ननु च सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं निरवद्यतया निरस्तसमस्तापुरुषार्थगन्धं ब्रह्मैवात्मानं विचित्रचिदचिन्मिश्रं जगद्रूपमिदं सर्वमसृजतेति कथमुपपद्यते? तदेतत् सूत्रकारस्स्वयमेव परिचोद्य परिहरिष्यति। *अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् *इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः* इति चोद्यम्; परिहारस्तु *न तु दृष्टान्तभावात् अधिकं तु भेदनिर्देशात्* इति च। *क्षरंत्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः *स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः *क्षरं प्रधानममृताक्षरं हरः क्षरात्माना-वीशते देव एकः (अचिद्वर्गं स्वात्मनो भोग्यत्वेन हरतीति भोक्ता हर इत्युच्यते) *द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ इत्यादिश्रुतिस्मृतिगणैः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् परमपुरुषार्थभागिनः प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म। तच्च प्रत्यगात्म शरीरतया तदात्मभूतम्। प्रत्यगात्मनस्तच्छरीरत्वं ब्रह्मणस्तदात्मत्वञ्च *य आत्मनि तिष्ठन्...यस्यात्मा शरीरम् *एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः* इत्यादिश्रुतिशतसमधि-गतम्। सशरीरस्यात्मनः कार्यावस्थाप्राप्तावपि गुणदोषव्यवस्थितेर्दृष्टान्तभावात् ब्रह्मणि न दोष-प्रसक्तिरिति नासामञ्जस्यं वेदान्तवाक्यस्येति *न तु दृष्टान्तभावादित्युक्तम्। दृष्टान्तश्च—देवमनु-ष्यादिशब्दवाच्यस्य सशरीरस्यात्मनः मनुष्यो बालो युवा स्थविर इति नानावस्थाप्राप्तावपि बालत्वयुवत्वस्थविरत्वादयः शरीरगता दोषाः नात्मानं स्पृशन्ति, आत्मगताश्च ज्ञानसुखादयः न शरीरमिति। अतः कार्यावस्थं कारणावस्थं च ब्रह्म प्रत्यगात्मशरीरतया तदात्मभूतमिति प्रत्यगात्मवाचिना शब्देन ब्रह्माभिधाने तच्छब्दसामानाधिकरण्ये च हेतुं वक्तुम्, निरसनीयं मतद्वयम् *प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः, उत्क्रमिष्यत एवंभावादित्यौडुलोमिः* इत्युपन्यस्य *अवस्थितेरिति काशकृत्स्नः* इति हेतुरुक्तः। *तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्* इत्यादिना प्रत्यगात्मन आत्मतयाऽवस्थानात् ब्रह्मणस्तच्छब्देनाभिधानम्, तत्सा-

मानाधिकरण्येन व्यपदेशश्चेत्युक्तम्। तथा *वैषम्यनैर्घृण्ये न सापेक्षत्वात् *न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च* इति देवमनुष्यादिविषमसृष्टेर्जीवकर्मनिमित्तत्वम्, जीवानां तत्तत्कर्मप्रवाहाणाञ्चानादित्वं प्रतिपाद्य, तदनादित्वं च *नित्यो नित्यानां चेतनश्चेतनानाम् *ज्ञाज्ञौ द्वौ* इत्यादिश्रुतिषूपलभ्यत इत्युक्त्वा, तदनादित्वेऽपि प्रलयकाले चिदचिद्वस्तुनोर्भोक्तृ-भोग्ययोर्नामरूपविभागाभावात्, *आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्* इत्यादावेकत्वावधारणमुपपद्यत इति सूत्रकारेण स्वयमेवोक्तम्। तथा च *नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः इति प्रत्यगात्मनो नित्यत्वादनुत्पत्तिमुक्त्वा *ज्ञोऽत एवेति तस्य ज्ञातृत्वमेव स्वरूपमित्युक्तम्। *उत्क्रान्तिगत्यागतीनामित्यादिनाऽणुत्वञ्चोक्तम्। *तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् *याव-दात्मभावित्वाच्च न दोषस्तद्दर्शनात्* इति ज्ञातुरेवात्मनो ज्ञानशब्देन व्यपदेशो ज्ञानगुणसारत्वात् ज्ञानैकनिरूपणीयस्वभावत्वाच्चेत्युक्तम्। *नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा* इति ज्ञानमात्रस्वरूपात्मवादे हेत्वन्तरायत्तज्ञानवादे, सर्वगतात्मवादे च दोष उक्तः। *कर्ता शास्त्रार्थवत्त्वात् *उपादानाद्विहारोपदेशाच्च *व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः *उपलब्धि-वदनियमः *शक्तिविपर्ययात् *समाध्यभावाच्च *यथा च तक्षोभयथा* इत्यात्मन एव शुभाशुभेषु कर्मसु कर्तृत्वम्, प्रकृतेरकर्तृत्वम्, प्रकृतेश्च कर्तृत्वे तस्यास्साधारणत्वेन सर्वेषां फलानुभवप्रसङ्गादि च प्रतिपादितम्। *परात्तु तच्छ्रुतेः *कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः* इत्यात्मन एव कर्तृत्वं परमपुरुषानुमतिसहकृतमित्युक्तम्। *अंशो नानाव्यपदेशादन्यथा चापि दाशकित-वादित्वमधीयत एके *मन्त्रवर्णात् *अपि स्मर्यते *प्रकाशादिवत्तु नैवं परः स्मरन्ति च *इति *अनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः *क्षरंत्वविद्या ह्यमृतंतु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः *प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यंकिञ्चन वेद नान्तरम् *तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति *ज्ञाज्ञौ द्वावजावीशनीशौ *पृथागात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति *यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥ *स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः *यस्सर्वज्ञस्सर्ववित् *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल-क्रिया च *निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् *नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् *पतिं विश्वस्यात्मेश्वरम्* इत्यादिषु प्रत्यगात्मनः परमात्मनश्च कर्मवश्यत्वेन शोचितृत्वेनासर्वज्ञत्वेन उपासनायत्तमुक्तित्वेन निरवद्यत्वेन सर्वज्ञत्वेन सत्यसङ्कल्पत्वेन सर्वेश्वरत्वेन समस्तकल्याणगुणाकरत्वादिना च स्वरूपस्य स्वभावस्य नानात्वव्यपदेशात् तयोरेव *तत्त्वमसि *अय-मात्मा ब्रह्म *योऽसौ सोऽहं योऽहं सोऽसौ *अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद *अकृत्स्नो ह्येषः...आत्मेत्येवोपासीत *ब्रह्मदाशा ब्रह्मदासा ब्रह्म मे कितवाः* इति च सर्वजीवात्म व्यापित्वेनाभेदव्यपदेशाच्च, उभयव्यपदेशाविरोधेन परमात्मांशो जीवात्मेत्यभ्युपगन्तव्यम्। न

केवलं न्यायसिद्धमिदं, श्रुतिस्मृतिभ्याञ्चांशत्वमुक्तं जीवात्मनः *पादोऽस्य विश्वा भूतानि *ममैवांशो जीवलोके जीवभूतस्सनातनः* इति । अंशत्वंनाम एकवस्त्वेकदेशत्वम् । तथा सत्युभयोरेकवस्तुत्वेनाविरोधो न स्यादित्याशङ्कय, *प्रकाशादिवत्तु नैवं परः* इति परिहरति । अन्यविशेषणतैकस्वभावप्रकाशजातिगुणशरीरविशिष्टानग्निव्यक्तिगुण्यात्मनः प्रति प्रकाशजातिगुणशरीराणां यथा अंशत्वम्; एवं परमात्मानं प्रत्यगात्मशरीरकं प्रति प्रत्यगात्मनोंऽशत्वम् । एवम् अंशत्वे यत्स्वभावोंऽशभूतो जीवः, नैवमंशी परमात्मा, सर्वत्र विशेषणविशेष्ययोस्स्वरूपस्वभावभेदात् । एवञ्च *कर्ता शास्त्रार्थवत्त्वात् *परात्तु तच्छ्रुतेः* इत्यनन्तरोक्तञ्च न विरुध्यते । एवं प्रकाशशरीरवज्जीवात्मनाम् अंशत्वं पराशरादयस्स्मरन्ति च *एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत् ॥ *यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज । तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः ॥ *ते सव सर्वभूतस्य विष्णोरंशसमुद्भवाः* इति । अन्यथा पारमार्थिकापारमार्थिकोपाधिसमाश्रयणे प्रत्यगात्मनोंऽशत्वे ब्रह्मण एव वेदान्तनिवर्त्यास्सर्वे दोषा भवेयुरिति *आभासा एव चेत्यादिसूत्रैरुक्तम् । 'अतस्सर्वदा चिदचिद्वस्तुशरीरतया तदात्मभूतमेव ब्रह्म, कदाचिदविभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कारणावस्थम्, कदाचिच्च विभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कार्यावस्थं ब्रह्म । सर्वदा चिदचिद्वस्तुशरीरतया तद्विशिष्टत्वेऽपि ब्रह्मणः परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूतचेतनाचेतनवस्तुगते; आत्मभूतं ब्रह्म सर्वदा निरस्तनिखिलदोषगन्धानवधिकातिशयासङ्ख्येयज्ञानानन्दाद्यपरिमितोदारगुणसागरमवतिष्ठत इति ब्रह्मैव जगन्निमित्तमुपादानञ्चेति *यतो वा इमानि* इत्यादिवाक्यं प्रतिपादयत्येवेति जन्माद्यस्य यतस्तत् ब्रह्मेति सुष्ठूक्तम् । *सदेव सोम्येदमग्रआसीत्, एकमेवाद्वितीयम् *तदैक्षत बहु स्यां प्रजायेयेत्यत्र चायमर्थः—*यस्यात्मा शरीरम्, *यस्याक्षरं शरीरम्, यस्य पृथिवी शरीरम्, यस्याव्यक्तं शरीरम्, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः* इत्यादिश्रुतेः ब्रह्मणः सर्वदा चिदचिद्वस्तुशरीरकत्वात् सदेवेदमिदानीं स्थूलचिदचिद्वस्तुशरीरकत्वेन विभक्तनामरूपम्, अग्रे—प्रलयकाले, सूक्ष्मदशापन्नचिदचिद्वस्तुशरीरतया नामरूपविभागानर्हमेकमेवासीत् । स्वयमेव ब्रह्म सर्वज्ञं सर्वशक्ति निमित्तान्तरानपेक्षमद्वितीयंचातिष्ठत् । *तदैक्षत बहु स्यां प्रजायेयेति तन्नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतया एकमेवावस्थितं नामरूपविभागार्हस्थूलदशापत्त्या बहुप्रकारं स्यामिति ऐक्षत । स्यां, प्रजायेयेति व्यष्टिसमष्टिव्यपदेशः । चिदचितोः परस्य च प्रलयकालेऽपि व्यवहारानर्हसूक्ष्मभेदः सर्ववेदान्तिभिरभ्युपगतः, अविद्याकृतभेदस्य उपाधिकृतभेदस्य च अनादित्वाभ्युपगमात् । इयांस्तु विशेषः—ब्रह्मैवाज्ञम् उपाधिसंबद्धं चेति सर्वश्रुतिस्मृतिन्यायविरोधोऽन्येषाम्, तदभावादविरोधश्चास्माकम्—इति ॥ २ ॥

3 शास्त्रयोनित्वात् ॥ एवं चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव जगदुपादानत्वं निमित्तत्वंच नानुमानगम्यमिति शास्त्रैकप्रमाणकत्वात्तस्य *यतो वा इमानि भूतानीत्यादिवाक्यम्, निखिलजगदेककारणं ब्रह्म बोधयत्येवेति सिद्धम् ॥ ३ ॥

4 तत्तु समन्वयात् ॥ पुरुषार्थतयाऽन्वयः समन्वयः; शास्त्राख्यप्रमाणस्य पुरुषार्थपर्यवसायित्वेऽपि ब्रह्म स्वस्य परस्य चानुभवितुः अविशेषेण स्वरूपेण गुणैः विभूत्या च अनुभूयमानम् अनवधिकातिशयानन्दरूपमिति पुरुषार्थत्वेनाभिधेयतयाऽन्वयात्, ब्रह्मणश्शास्त्रप्रमाणकत्वमुपपन्नतरमिति निरवद्यं निखिल जगदेककारणं ब्रह्म वेदान्ताः प्रतिपादयन्तीत्युक्तम्। तस्यैकस्यैकदैव कृत्स्नजगन्निमित्तत्वं तस्यैवोपादानतया जगदात्मकत्वञ्च नानुमानादिगम्यमिति शास्त्रैकप्रमाणकत्वात्, तस्य चानवधिकातिशयानन्दरूपतया परमपुरुषार्थत्वाद्वेदान्ताः प्रतिपादयन्त्येवेति स्थिरीकृतम् ॥ ४ ॥

अतः परं पादशेषेण जगत्कारणतया प्रधानपुरुषप्रतिपादनानर्हतया सर्वज्ञं सत्यसङ्कल्पं निरस्ताविद्यादिसमस्तदोषगन्धम् अपरिमितोदारगुणसागरं ब्रह्मैव वेदान्ताः प्रतिपादयन्तीत्युच्यते। तत्र तावत्प्रधानं वेदान्तप्रतिपादनानर्हमित्याह—

5 ईक्षतेर्नाशब्दम् ॥ अशब्दम्—आनुमानिकं प्रधानम्। तत् वेदान्तवेद्यं न; कुतः? ईक्षतेः—*सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्* इति प्रस्तुतजगत्कारणव्यापारवाचिनः ईक्षतेर्धातोश्श्रवणात् *तदैक्षत बहु स्यामिति ॥ ५ ॥

6 गौणश्चेन्नात्मशब्दात् ॥ *तत्तेज ऐक्षत* इत्यादिषु अचेतनेऽपि वस्तुनि ईक्षतिश्श्रूयते। तत्र गौणः; एवमत्रापि प्रधान एवेक्षतिर्गौण इति चेत्; नैतदुपपद्यते, प्रस्तुते सच्छब्दवाच्ये श्रूयमाणाच्चेतनवाचिनः आत्मशब्दात्। *स आत्मा तत्त्वमसि श्वेतकेतो* इति ह्युत्तरत्र श्रूयते। तेजःप्रभृतिष्वपि न गौणमीक्षणम्। तेजःप्रभृतिशब्दैरपि तत्तच्छरीरकं ब्रह्मैवाभिधीयते, *अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ब्रह्मात्मकजीवानुप्रवेशादेव सर्वस्य वस्तुनो नामरूपभाक्त्वात्। *तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्, निरुक्तंचानिरुक्तंच, निलयनंचानिलयनंच, विज्ञानंचाविज्ञानंच, सत्यंचानृतंच सत्यमभवत्* इति चेतनमचेतनंच पृथक् निर्दिश्य तदुभयमनुप्रविश्य सत्त्यच्छब्दवाच्योऽभवदिति हि समानप्रकरणे स्पष्टमभिहितम् ॥ ६ ॥

7 तन्निष्ठस्य मोक्षोपदेशात् ॥ इतश्च प्रधानादर्थान्तरभूतं सच्छब्दाभिहितं जगत्कारणम्; सच्छब्दाभिहिततत्त्वनिष्ठस्य मोक्षोपदेशात्। *तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये* इति हि तन्निष्ठस्य मोक्ष उपदिश्यते। प्रधानकारणवादिनामपि हि प्रधाननिष्ठस्य मोक्षो नाभिमतः ॥ ७ ॥

8 हेयत्वावचनाच्च ॥ यदि प्रधानमत्र विवक्षितम्; तदा तस्य हेयत्वात् अध्येयत्वमुच्येत। न तदुच्यते। मोक्षसाधनतया ध्येयत्वमेवात्रोच्यते *तत्त्वमसि श्वेतकेतो *इत्यादिना ॥ ८ ॥

इतश्च न प्रधानम्—

9 प्रतिज्ञाविरोधात् ॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात्। सच्छब्दवाच्यतत्त्वज्ञानेन तत्कार्यतया चेतनाचेतनसर्ववस्तुज्ञानम्, *येनाश्रुतं श्रुतं भवतीत्यादिना प्रतिज्ञातम्। तद्धि प्रधान-

कारणवादे विरुध्यते, चेतनस्य प्रधानकार्यत्वाभावात्। प्रधानादर्थान्तरभूतब्रह्मकारणवादे चिदचिद्वस्तुशरीरं ब्रह्मैव नामरूपविभागाविभागाभ्यां कार्यं कारणञ्चेति ब्रह्मज्ञानेन कृत्स्नस्य ज्ञाततोपपद्यते ॥ ९ ॥

इतश्च न प्रधानम्—

10 स्वाप्ययात् ॥ *स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा संपन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति* इति जीवस्य चेतनस्य सुषुप्तस्य सता संपन्नस्य स्वाप्ययवचनात् प्रधानादर्थान्तरभूतं सच्छब्दवाच्यमिति विज्ञायते। स्वमपीतो भवति—आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणं श्रुत्युक्तम्। तज्जीवशब्दाभिधेयं परं ब्रह्मैव सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति *सता सोम्य तदा संपन्नो भवति स्वमपीतो भवतीत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् *प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्* इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः। सुषुप्तिकाले हि नामरूपे विहाय सता संपरिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते। यथा—*सुप्युप्तः...स्वप्नं न कञ्चन पश्यति *अथास्मिन्प्राण एवैकधा भवति, एतस्माद्वा आत्मनः प्राणा यथायथं विप्रतिष्ठन्ते। तथा *त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा... यद्यद्भवन्ति तथा भवन्ति* इति ॥ १० ॥

11 गतिसामान्यात् ॥ सकलोपनिषद्गतिसामान्यादस्यामप्युपनिषदि न प्रधानं कारणमिति ज्ञायते। आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः *स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता न चाधिपः* इत्यादिसकलोपनिषत्सु सर्वेश्वर एव हि जगत्कारणमिति प्रतिपाद्यते ॥ ११ ॥

12 श्रुतत्वाच्च ॥ श्रुतमेव ह्यस्यामुपनिषदि—*आत्मतः प्राणः ..आत्मन आकाशः* इत्यादौ आत्मन एव सर्वोत्पत्तिः; अतः प्रधानादचेतनादर्थान्तरभूतस्सर्वज्ञः पुरुषोत्तम एव जगत्कारणं ब्रह्मेति स्थितम् ॥ १२ ॥

13 आनन्दमयोऽभ्यासात् ॥ यद्यपि प्रधानादर्थान्तरभूतस्य प्रत्यगात्मनश्चेतनस्य ईक्षणगुणयोगस्संभवति, तथाऽपि प्रत्यगात्मा बद्धो मुक्तश्च न जगत्कारणम्, *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः* इत्यारभ्य *तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः* इत्यस्य आनन्दमयत्वप्रतिपादनात् कारणतया व्यपदिष्टोऽयमानन्दमयः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः परमात्मैव। कुतः? अभ्यासात्—आनन्दमयस्य निरतिशयदशाशिरस्कानन्दमयत्वेना-

भ्यासात्। *ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः *यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन* इति हि वेद्यत्वेनायमानन्दमयोऽनवधिकातिशयोऽभ्यस्यते ॥ १३ ॥

14 विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ *स वा एष पुरुषोन्नरसमयः* इति विकारार्थमयट्प्रकरणात् *आनन्दमयः* इत्यस्यापि विकारार्थत्वं प्रतीयते। अतोऽयमानन्दमयः नाविकाररूपः परमात्मा, इति चेन्न; अर्थविरोधात्; प्राचुर्यार्थं एवायं मयडिति विज्ञायते। *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः* इति ह्यविकार आत्मा प्रकृतः। प्रकरणे च विकारार्थत्वं प्राणमय एव परित्यक्तम्। उक्तेन न्यायेन आनन्दप्राचुर्यात् परमपुरुष एवायमानन्दमयः ॥ १४ ॥

15 तद्धेतुव्यपदेशाच्च ॥ *एष ह्येवानन्दयातीति जीवान्प्रत्यानन्दहेतुरयमानन्दमयो व्यपदिश्यते; अतश्चायं न प्रत्यगात्मा ॥ १५ ॥

16 मान्त्रवर्णिकमेव च गीयते ॥ *सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णोदितमेव *तस्माद्वा एतस्मादित्यादिना आनन्दमय इति गीयते; अतश्च न प्रत्यगात्मा ॥ १६ ॥

17 नेतरोऽनुपपत्तेः ॥ इतरः—प्रत्यगात्मा मन्त्रवर्णोदित इति नाशङ्कनीयम्, *सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चितेति प्रत्यगात्मनो बद्धस्य मुक्तस्य च ईदृशविपश्चित्त्वानुपपत्तेः। *सोऽकामयत, बहु स्यां प्रजायेयेति विचित्रस्थिरत्रसरूपबहुभवनसङ्कल्परूपमिदं विपश्चित्त्वमिति ह्युत्तरत्र व्यज्यते। मुक्तस्य सर्वज्ञस्यापि जगद्व्यापाराभावादीदृशविपश्चित्त्वासंभवः ॥ १७ ॥ इतश्च—

18 भेदव्यपदेशाच्च ॥ *तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः* इति हि विज्ञानमयात् प्रत्यगात्मनो भेदेनायमानन्दमयो व्यपदिश्यते। न च विज्ञानमयविषयतया उदाहृतश्लोके *विज्ञानं यज्ञं तनुते* इति व्यपदेशात् विज्ञानमयो बुद्धिमात्रमित्याशङ्कनीयम्; यतस्सूत्रकार एव इमामाशङ्कां परिहरिष्यति *व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः* इति। *विज्ञानं यज्ञं तनुते* इति यज्ञादिक्रियायां जीवस्य कर्तृत्वव्यपदेशाच्च जीवः कर्ता। विज्ञानशब्देन जीवस्याव्यपदेशे बुद्धिमात्रव्यपदेशे च विज्ञानेनेति निर्देशविपर्ययस्स्यात्, बुद्धेः करणत्वादिति ॥ १८ ॥ इतश्च—

19. कामाच्च नानुमानापेक्षा ॥ *सोऽकामयत, बहु स्यामिति स्वकामादेवास्य जगत्सर्गश्श्रूयते। प्रत्यगात्मनो हि यस्य कस्यचित्सर्गे आनुमानापेक्षा दृश्यते। अनुमानगम्यं प्रधानम् आनुमानम् ॥ १९ ॥ इतश्च—

20 अस्मिन्नस्य च तद्योगं शास्ति ॥ अस्मिन्–आनन्दमये, अस्य–प्रत्यगात्मनः, आनन्दयोगं शास्ति *रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति* इति। अतः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः पुरुषोत्तमः जगत्कारणभूतः आनन्दमयः ॥ २० ॥

21 अन्तस्तद्धर्मोपदेशात् ॥ अयं जगत्कारणभूतः विपश्चिदानन्दमयः, कश्चिदुपचितपुण्यविशेषो जीवविशेषः देहयोगाद्विज्ञायते, नायं परमात्मेति नाशङ्कनीयम्; *य एषोऽन्तरादित्ये

हिरण्मयः पुरुषः* इत्यादौ श्रूयमाणः पुरुषाकारः परमात्मैव । कुतः ? तद्धर्मोपदेशात्; *स एष सर्वेषां लोकानामीशः सर्वेषां कामानाम् *तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः* इति निरुपाधिकसर्वलोकसर्वकामेशत्वं स्वत एवाकर्मवश्यत्वं च प्रत्यगात्मनोऽर्थान्तरभूतस्य हि परमपुरुषस्यैव धर्मः । *वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसः परस्तात्* इत्यादिषु त्रिगुणात्मकप्रकृत्यनन्तर्गताप्राकृतस्वासाधारणरूपवत्त्वं च ज्ञानादिगुणवत्तस्यैव हि श्रूयते । ज्ञानादयोऽपि *सत्यं ज्ञानमनन्तं ब्रह्म *यस्सर्वज्ञस्सर्ववित् *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च* इत्यादिषु श्रुतत्वात् तस्य गुणा विज्ञायन्ते । तथा *आदित्यवर्णं तमसः परस्तात्* इत्यादिषु अप्राकृतस्वासाधारणरूपश्रवणात् तद्वत्ता च विज्ञायते । तदेतद्वाक्यकारश्चाह—*हिरण्मयः पुरुषो दृश्यते इति प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मनाम्* इत्युक्त्वा, तद्रूपस्य कार्यत्वं मायामयत्वं वेति विचार्य, *स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्* इति निरसनीयं मतमुपन्यस्य, *रूपं वाऽतीन्द्रियम् अन्तःकरणप्रत्यक्षनिर्देशात्* इति । व्याख्यातं च द्रमिडाचार्यैः—*न वा मायामात्रमञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा त्वकलुषेण साधनान्तरवता गृह्यते, *न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेनेति श्रुतेः; न ह्यरूपाया देवतायाः रूपमुपदिश्यते; यथाभूतवादि हि शास्त्रम्; यथा *माहारजतं वासः *वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णमिति प्रकरणान्तरनिर्देशात्* इति । *साक्षिण इति हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्* इति च वाक्यम् । तच्च व्याख्यातं तैरेव *न मयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः *इत्यादिना । अतः प्रधानात् प्रत्यगात्मनश्चार्थान्तरभूतो निरुपाधिकविपश्चिदनवधिकातिशयानन्दोऽप्राकृतस्वासाधारणदिव्यरूपः पुरुषोत्तमः परं ब्रह्म जगत्कारणमिति वेदान्तैः प्रतिपाद्यत इति निरवद्यम् ॥ २१ ॥

22 भेदव्यपदेशाच्चान्यः ॥ *य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यधिदैवतम्, यश्चक्षुषि तिष्ठन् यं आत्मनि तिष्ठन् इत्यध्यात्मम्, यस्सर्वेषु लोकेषु तिष्ठन्नित्यधिलोकम्, यस्सर्वेषु भूतेषु तिष्ठन्नित्यधिभूतम्, यस्सर्वेषु वेदेषु तिष्ठन्नित्यधिवेदम्, यस्सर्वेषु यज्ञेषु तिष्ठन्नित्यधियज्ञम्* इत्यन्तर्यामिब्राह्मणे । सुबालोपनिषदि च *यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य, *योऽव्यक्तमन्तरे सञ्चरन् योऽक्षरमन्तरे सञ्चरन् यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरम् यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः* इति सर्वदेवसर्वलोकसर्वभूतसर्ववेदसर्वयज्ञसर्वात्मोपरिवर्तमानतया तत्तच्छरीरतया तत्तदन्तरात्मतया तत्तदवेद्यतया तत्तन्नियन्तृतया चैभ्यस्सर्वेभ्यः भेदव्यपदेशाच्च, अयमपहतपाप्मा नारायणः प्रधानात् प्रत्यगात्मनश्च अर्थान्तरभूतो निखिलजगदेककारणमिति सिद्धम् ॥ २२ ॥

23,24 आकाशस्तल्लिङ्गात् ॥ अत एव प्राणः ॥ *सर्वाणि ह वा इमानि भूतान्याकाशादेव

समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति, *सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमेवाभ्युज्जिहते* इत्यादौ, *सदेव सोम्येदमग्र आसीदित्यादिना सामान्येन निर्दिष्टस्य जगत्कारणस्य भूताकाशप्राणसहचारिजीववाचिशब्दाभ्यां विशेषनिर्णयशङ्कायां *सर्वाणि ह वा इमानि भूतानीति प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिङ्गात् भूताकाशजीवाभ्याम् अर्थान्तरभूतः परमपुरुष एवात्र आकाशप्राणशब्दनिर्दिष्ट इति निश्चीयते। तत्प्रसिद्धिस्तु—बहुभवनरूपेक्षणानवधिकातिशयानन्दजीवानन्दहेतुत्वविज्ञानमयविलक्षणत्वनिखिलभुवनभयाभयहेतुत्वसर्वलोकसर्वकामेशत्वसर्वपाप्मोदयाप्राकृतस्वासाधारणरूपविशिष्टस्य रविकरविकसितपुण्डरीकनयनस्य सर्वज्ञस्य सत्यसङ्कल्पस्य करणाधिपाधिपस्य परमपुरुषस्यैव निखिलजगदेककारणत्वादिति स एव आकाशप्राणशब्दाभ्यां जगत्कारणत्वेनाभिधीयत इति निर्णयो युक्त एव ॥ २३ ॥ २४ ॥

25 ज्योतिश्चरणाभिधानात् *अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषू लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः* इत्यत्र सर्वस्मात्परत्वेन निर्दिश्यमानतया सकलकारणभूतज्योतिषः काक्षेयज्योतिषैक्याभिधानात्, स्ववाक्ये विरोधिलिङ्गादर्शनाच्च प्रसिद्धमेव ज्योतिर्जगत्कारणत्वेन प्रतिपाद्यत इति शङ्कायाम्; यद्यपि स्ववाक्ये विरोधिलिङ्गं न दृश्यते; तथाऽपि पूर्वस्मिन् वाक्ये *पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि* इति प्रतिपादितस्य सर्वभूतचरणस्य परमपुरुषस्यैव द्युसंबन्धितयाऽत्रापि प्रत्यभिज्ञानात् स एव ज्योतिश्शब्देन सर्वस्मात् परत्वेन सकलकारणतयाऽभिधीयते। अस्य च कौक्षेयज्योतिषैक्याभिधानं फलायोपदिश्यत इति न कश्चिद्विरोधः। अखिलजगदेककारणभूतः परमपुरुषोऽप्राकृतस्वासाधारणदिव्यवर्णो दिव्यरूपस्तमसः परस्ताद्वर्तत इति तस्यैव निरतिशयदीप्तियोगात् ज्योतिश्शब्दाभिधेयत्वम् विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु वासश्च युज्यते ॥ २५ ॥

26 छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् ॥ पूर्वत्र *गायत्री वा इदं सर्वमिति गायत्र्याख्यच्छन्दः प्रस्तुतमिति नात्र परमपुरुषाभिधानमिति चेत्, नैतत्, परमपुरुषस्यैव गायत्रीसादृश्यस्य अनुसन्धानोपदेशत्वात्, तस्य छन्दोमात्रस्य सर्वभूतात्मकत्वानुपपत्तेरेवेति निगम्यते। अन्यत्रापि ह्यन्यस्य छन्दस्सादृश्यात् छन्दोनिर्देशो दृश्यते *ते वा एते पञ्चान्ये *इत्यारभ्य *सैषा विराट्* इत्यादौ ॥ २६ ॥

27 भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशश्च परमपुरुषे गायत्रीशब्दनिर्दिष्टे ह्युपपद्यत इति पूर्वोक्तप्रकार एव समञ्जसः ॥ २७ ॥

28 उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ पूर्वत्र* त्रिपादस्यामृतंदिवीति परमपुरुषो व्यपदिश्यते। अत्र *अथ यदतः परो दिवः इति पञ्चम्या निर्दिष्टः द्युसंबन्धिज्योतिरिति न प्रत्यभिज्ञेति चेत्; नैतत्, उभयस्मिन्नपि व्यपदेशे विरोधाभावात्; यथा वृक्षाग्रे श्येनः, वृक्षाग्रात्परतश्श्येनः इति व्यपदेशः। अत्र दिवः परत्वमेव उभयत्र विवक्षितमित्यर्थः ॥ २८ ॥

29 प्राणस्तथाऽनुगमात् ॥ आत्मनां हिततमरूपमोक्षसाधनोपासनकर्मतया प्रज्ञातजीवभावस्य इन्द्रस्य *प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति विधानात् स एव जगत्कारणम्; कारणोपासनं हि मोक्षसाधनम्, *तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये *इति श्रुतेरिति नाशङ्कनीयम्; प्राणशब्दसमानाधिकरणेन्द्रशब्दनिर्दिष्टो जीवादर्थान्तरभूत उक्तलक्षणः परमात्मैव। कुतः ? तथानुगमात्; परमात्मासाधारणानन्दाजरामृतादिष्वस्येन्द्रप्राणशब्दनिर्दिष्टस्यानुगमो हि दृश्यते— *स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः* इति ॥ २९ ॥

30 न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ उपक्रमे हि *मामेव विजानीहीति त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्य इन्द्रस्योपदेशात्, उपसंहारस्तदनुगुणो वर्णनीय इति चेत्; नैतत्; अध्यात्मसंबन्धभूमा ह्यस्मिन्—अध्यात्मं—परमात्मधर्मः। परमात्मधर्मसंबन्धबहुत्वमस्मिन्निन्द्रशब्दाभिधेये, वाक्योपक्रमप्रभृत्योपसंहाराद्दृश्यते। *यं त्वं मनुष्याय हिततमं मन्यस इति हिततमोपासनं प्रारब्धम्। तच्च परमात्मधर्मः, *तमेवं विद्वानमृत इह भवति, नान्यः पन्था इत्यादिश्रुतेः। तथा *एष एव साधु कर्म कारयतीत्यादिना सर्वस्य कारयितृत्वम्, *एवमेवैता भूतमात्रा* इत्यारभ्य *प्रज्ञामात्राः प्राणेष्वर्पिताः* इति सर्वाधारत्वं, तथा आनन्दादयश्च, *एष लोकाधिपतिरित्यादिना सर्वेश्वरत्वंच ॥ ३० ॥

31 शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ नामरूपव्याकरणादिशास्त्रात्सर्वशब्दैः परमात्मैवाभिधीयत इति दृष्ट्या तज्ज्ञापनायायमिन्द्रशब्देन परमात्मोपदेशः। शास्त्रस्था हि वामदेवादयः तथैव वदन्ति– *तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति ॥ ३१ ॥

32 जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ *त्रिशीर्षाणं त्वाष्ट्रमहनम्, यावध्यस्मिन् शरीरे प्राणो वसति तावदायुः* इत्यादिजीवलिङ्गं, मुख्यप्राणलिङ्गं चास्मिन् दृश्यत इति नैवमिति चेन्न; उपासात्रैविध्यात् हेतोर्जीवशब्देन प्राणशब्देन च परमात्मनोऽभिधानम्। अन्यत्रापि परमात्मनः स्वरूपेणोपासनं भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेनेति त्रिविधं परमात्मोपासनमाश्रितम्। यथा *सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपेण, *तदनुप्रविश्य, सच्च त्यच्चाभवदित्यादि *सत्यंचानृतंच सत्यमभवत्* इति भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन च। इहापि तत्संभवादेवमुपदेशः। *जन्माद्यस्य यतः इत्यादिषु सद्ब्रह्मात्मेति सामान्यशब्दैर्हि जगत्कारणं प्रकृतिपुरुषाभ्यामर्थान्तरभूतमिति साधितम्। *ज्योतिश्चरणाभिधानादित्यस्मिन् सूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति विशेषतो निर्णीतम्। स एव प्रज्ञातजीववाचिभिरिन्द्रादिशब्दैरपि क्वचित्क्वचिच्छास्त्रदृष्ट्या तत्तच्छरीरकतया चोपास्यत्वायोपदिश्यत इति *शास्त्रदृष्ट्या तूपदेशो वामदेववदिति उपासात्रैविध्यादिति साधितम् ॥ ३२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

प्रथमाध्याये द्वितीयः पादः

33 सर्वत्र प्रसिद्धोपदेशात् ॥ *सर्वं खल्विदमिति निर्दिष्टेन सामानाधिकरण्येन निर्दिष्टं ब्रह्म परमात्मा; कुतः ? प्रसिद्धोपदेशात् *तज्जलानिति हेतुतस्सर्वात्मकत्वोपदेशादित्यर्थः । प्रसिद्धं हि हेतुतया व्यपदिश्यते । सकलोपनिषत्सु ब्रह्मैव हि जगज्जन्मलयजीवनहेतुतया प्रसिद्धं *यतो वा इमानीत्यादिषु ॥ १ ॥

34 विवक्षितगुणोपपत्तेश्च ॥ मनोमयत्वसत्यसङ्कल्पत्वादयो विवक्षितगुणाः ब्रह्मण्येवोपपद्यन्ते ॥ २ ॥

35 अनुपपत्तेस्तु न शारीरः ॥ दुःखमिश्रपरिमितसुखलवभागिनि शारीरे तु एषां गुणानामनुपपत्तेर्न शारीरोऽयम् ॥ ३ ॥

36 कर्मकर्तृव्यपदेशाच्च ॥ *एतमितः प्रेत्याभिसंभविताऽस्मि* इत्यभिसंभाव्याभिसंभवितृत्वेन प्रस्तुतब्रह्मजीवयोर्व्यपदेशादभिसंभाव्यं ब्रह्म जीवादर्थान्तरम् ॥ ४ ॥

37 शब्दविशेषात् ॥ *एष म आत्माऽन्तर्हृदये* इति षष्ठ्या प्रथमया च जीवो ब्रह्म च व्यपदिश्यते । ततश्चार्थान्तरम् ॥ ५ ॥

38 स्मृतेश्च ॥ अत्रापि प्रथमया निर्दिष्टः पुरुषोत्तम इति निश्चीयते *सर्वस्य चाहं हृदि सन्निविष्टः* इति हि स्मृतिः ॥ ६ ॥

39 अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ *एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेः* इत्यादिना अल्पायतनत्वात्, स्वरूपाल्पत्वस्य व्यपदेशाच्च, नायं पर इति चेन्न; उपास्यत्वाद्धेतोस्तथा व्यपदेशः, नतु स्वरूपाल्पत्वेन, व्योमवत्; स्वरूपमहत्वं चात्रैव व्यपदिश्यते *ज्यायान् पृथिव्याः ज्यायानन्तरिक्षादित्यादिना ॥ ७ ॥

40 संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ परोऽप्यन्तश्शरीरे वसति चेत्, जीववत् सुखदुःखोपभोगप्राप्तिस्स्यादिति चेन्न, हेतुवैशेष्यात्; परस्य हि छन्दतो जीवरक्षायै शरीरान्तर्वासः ॥८॥

41 अत्ता चराचरग्रहणात् ॥ *यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः* इत्यत्र ओदनोपसेचनसूचितोऽत्ता परमपुरुषः, ब्रह्मक्षत्रोपलक्षितस्य चराचरस्य कृत्स्नस्य मृत्यूपसेचनत्वेन अदनीयतया ग्रहणात् ॥ ९ ॥

42 प्रकरणाच्च ॥ *महान्तं विभुमात्मानं मत्वा धीरो न शोचति, नायमात्मा प्रवचनेन लभ्यः *इत्यादिना परस्यैव प्रकृतत्वात्, स एवायम् ॥ १० ॥

43 गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ अनन्तरम् *ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये* इत्यादिना जीवपरमात्मानावेव प्रयोज्यप्रयोजकभावेन कर्मफलाशनेऽन्वयादुपदिष्टौ, तयोरेवास्मिन् प्रकरणे गुहाप्रवेशदर्शनात्; *तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितमिति

परस्य *या प्राणेन संभवत्यदितिर्देवतामयी, गुहां प्रविश्य तिष्ठन्तीति जीवस्य । कर्मफलादनाद्दितिर्जीवः ॥ ११ ॥

44 विशेषणाच्च ॥ जीवपरावेव हि सर्वत्रास्मिन्प्रकरणे विशेष्येते, *न जायते म्रियते वा विपश्चिदित्यादौ जीवः, *अणोरणीयान् महतो महीयान्, *महान्तं विभुमात्मानम्* नायमात्मा प्रवचनेन *विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्* इत्यादिषु परः । *त्रिपादस्यामृतं दिवि *अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु* इति विश्वतः प्राकृतात् स्थानात् परं विष्णोः परस्थानमेव हि संसाराध्वनः पारभूतं मुमुक्षुभिः प्राप्यम् *परमं पदं सदा पश्यन्ति सूरयः *तदक्षरे परमे व्योमन् *क्षयन्तमस्य रजसः पराके *विश्वं पुराणं तमसः परस्तात् *ते ह नाकं महिमानस्सचन्ते, यत्र पूर्वे साध्यास्सन्ति देवाः* इत्यादिसकलोपनिषत्प्रसिद्धम् ॥ १२ ॥

45 अन्तर उपपत्तेः ॥ *य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म* इत्यत्र अक्ष्याधारः परमपुरुषः, निरुपाधिकामृतत्वाभयत्वसंयद्वामत्वादीनामस्मिन्नेवोपपत्तेः ॥ १३ ॥

46 स्थानादिव्यपदेशाच्च ॥ *यश्चक्षुषि तिष्ठन्नित्यादिना स्थितिनियमनादिव्यपदेशाच्चायं परः ॥ १४ ॥

47 सुखविशिष्टाभिधानादेव च ॥ *कं ब्रह्म खं ब्रह्मेति पूर्वत्रास्यैव सुखविशिष्टतया अभिधानाच्चायं परः ॥ १५ ॥

48 अत एव च स ब्रह्म ॥ यतस्तत्र भवभीताय उपकोसलाय ब्रह्मजिज्ञासवे *कं ब्रह्म खं ब्रह्मेत्युपदिष्टः *यद्वा व कं तदेव खमिति सुखरूपः; अतस्सुखशब्दाभिधेय आकाशः परमेव ब्रह्म ॥ १६ ॥

49 श्रुतोपनिषत्कगत्यभिधानाच्च ॥ श्रुतब्रह्मस्वरूपाणामधिगन्तव्यतया अर्चिरादिगतेरक्षिपुरुषं श्रुतवते *तेऽर्चिषमेवाभिसंभवन्तीत्यादिनाऽभिधानाच्चायं परमपुरुषः ॥ १७ ॥

50 अनवस्थितेरसंभवाच्च नेतरः ॥ परस्मादितरो जीवादिर्नाक्ष्याधारः; चक्षुषि नियमेन अनवस्थितेः अमृतत्वाद्यसंभवाच्च ॥ १८ ॥

51 अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ *यः पृथिव्यां तिष्ठन्नित्यादिषु अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमपुरुषः, सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियन्तृत्वादिपरमात्मधर्मव्यपदेशात् ॥ १९ ॥

52 न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ नायं प्रधानं जीवश्च, तयोरसंभावितसर्वाविदितत्वादिधर्माभिलापात्; असंभावनया यथा न स्मार्तम्, तथा जीवोऽपीत्यर्थः ॥ २० ॥

53 उभयेऽपि हि भेदेनैनमधीयते ॥ उभये–काण्वा माध्यन्दिनाश्च, *यो विज्ञाने तिष्ठन् *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयतीति प्रत्यगात्मनो भेदेन, एनम्–अन्तर्यामिणम् अधीयते; अतः पर एवायम् ॥ २१ ॥

54 अदृश्यत्वादिगुणको धर्मोक्तेः ॥ *अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्य-मित्यारभ्य *यद्भूतयोनिं परिपश्यन्ति धीराः *अक्षरात् परतः परः* इत्यादौ प्रधानात्प्रत्यगात्मनश्च अर्थान्तरभूतः परमात्मा प्रतिपाद्यते, *यस्सर्वज्ञस्सर्वविदित्यादिधर्मोक्तेः ॥ २२ ॥

55 विशेषणभेदव्यपदेशाभ्यांच नेतरौ ॥ एकविज्ञानेन सर्वविज्ञानरूपविशेषणव्यपदेशान्न प्रधानम्। *अक्षरात् परतः पर इति प्रधानात्परतः प्रत्यगात्मनोऽपि पर इति भेदव्यपदेशात् न प्रत्यगात्मा च। अथवा सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशकात् पर इति भेदव्यपदेशः ॥२३॥

56 रूपोपन्यासाच्च ॥ *अग्निर्मूर्धा* इत्यादिना त्रैलोक्यशरीरोपन्यासाच्च परमात्मा ॥२४॥

57 वैश्वानरस्साधारणशब्दविशेषात् ॥ *आत्मानमेवेमं वैश्वानरमित्यादौ वैश्वानरः पर-मात्मा, जाठराग्न्यादिषु साधारणस्यापि वैश्वानरशब्दस्य अस्मिन्प्रकरणे परमात्मासाधारणैः सर्वात्मकत्वब्रह्मशब्दादिभिर्विशेष्यमाणत्वात् ॥ २५ ॥

58 स्मर्यमाणमनुमानं स्यादिति ॥ द्युलोकप्रभृति पृथिव्यन्तं रूपम् *अग्निर्मूर्धेत्या-दिषूक्तम्, अत्र प्रत्यभिज्ञायमानमस्य परमात्मत्वे अनुमानम्—लिङ्गमित्यर्थः ॥ २६ ॥

59 शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैन-मधीयते ॥ *स एषोऽग्निर्वैश्वानरः* इति अग्निशब्दसामानाधिकरण्यात् प्राणाहुत्याधारत्वादिभिः *पुरुषेऽन्तः प्रतिष्ठितमित्यादेश्च नायं परमात्मेति चेत्; नैतत्, जाठराग्निशरीरकत्वेनोपास्यत्वोपदेशात्, केवलजाठराग्नेः त्रैलोक्यशरीरकत्वाद्यसंभवाच्च। *स एषोऽग्निर्वैश्वानरो यत्पुरुषः* इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजिनः। निरुपाधिकपुरुषशब्दश्च परमात्मनि नारायण एव *सहस्रशीर्षमित्यारभ्य, *विश्वमेवेदं पुरुषः* इत्यादिषु प्रसिद्धः ॥ २७ ॥

60 अत एव न देवता भूतंच ॥ यतोऽयं वैश्वानरः त्रैलोक्यशरीरः, पुरुषशब्दनिर्दिष्टश्च, ततोऽयं नाग्न्याख्यदेवता, तृतीयमहाभूतंच ॥ २८ ॥

61 साक्षादप्यविरोधं जैमिनिः ॥ नावश्यमग्निशरीरकत्वेन उपास्यत्वायेदमग्निशब्दसामा-नाधिकरण्यम्, अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेस्सामानाधिकरण्याविरोधं जैमिनिराचार्यो मन्यते ॥ २९ ॥

62 अभिव्यक्तेरित्याश्मरथ्यः ॥ *यस्त्वेतमेवं प्रादेशमात्रमित्यनवच्छिन्नस्य द्युप्रभृति-परिच्छिन्नत्वमुपासकाभिव्यक्त्यर्थमिति आश्मरथ्यः ॥ ३० ॥

63 अनुस्मृतेर्बादरिः ॥ द्युप्रभृतिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वकल्पनं तथा-

अनुस्मृत्यर्थं—ब्रह्मप्रतिपत्तय इति बादरिः ॥ ३१ ॥

64 संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ *उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः* इत्यादिना उपासकहृदयादीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेः अग्निहोत्रत्वसंपादनार्थमिति जैमिनिः । दर्शयति च श्रुतिः—*य एतदेवं विद्वानग्निहोत्रं जुहोतीति । एते पक्षास्स्वीकृताः । पूजार्थमाचार्यग्रहणम् ॥ ३२ ॥

65 आमनन्ति चैनमस्मिन् ॥ एनम्—परमात्मानम्, अस्मिन्—उपासितृशरीरे प्राणाहुतिवेलायामनुसन्धानार्थं *तस्य ह वा एतस्य...मूर्धैव सुतेजाः* इत्यादि आमनन्तिच । उपासकस्य मूर्धादिरेवास्य परमात्मनो मूर्धादिरित्यर्थः ॥ ३३ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

॥ प्रथमाध्याये तृतीयः पादः ॥

66 द्युभ्वाद्यायतनं स्वशब्दात् ॥ *यस्मिन्द्यौः पृथिवी चान्तरिक्षमित्यादौ द्युपृथिव्यादीनामायतनम्—आधारः परमपुरुषः; *तमेवैकं जानथात्मानमित्यात्मशब्दात् । निरुपाधिकात्मत्वं हि परमपुरुषस्यैव । *अमृतस्यैष सेतुरिति तदेव द्रढयति । *बहुधा जायमान इति परत्वं न निवारयति; *अजायमानो बहुधा विजायते* इति कर्मभिरजायमानस्यैव आश्रितवात्सल्यात् छन्दतो जननं तस्य हि श्रूयते ॥ १ ॥

67 मुक्तोपसृप्यव्यपदेशाच्च ॥ *तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति *तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्* इति च पुण्यपापविनिर्मुक्तानां प्राप्यतया व्यपदेशाच्चायं परः ॥ २ ॥

68 नानुमानमतच्छब्दात्प्राणभृच्च ॥ यथा न प्रधानमतच्छब्दात्, तथा न प्राणभृदपीत्यर्थः ॥ ३ ॥

69 भेदव्यपदेशात् ॥ *अनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमित्यादिना प्रत्यगात्मनो भेदेन व्यपदेशाच्चायं परः ॥ ४ ॥

70 प्रकरणात् ॥ *अथ परा यया तदक्षरमधिगम्यते* इत्यादि परस्य हीदं प्रकरणम् ॥५॥

71 स्थित्यदनाभ्यांच ॥ *तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति* इति जीवस्य कर्मफलादनमभिधाय, अनश्नतो दीप्यमानस्य स्थित्यभिधानाच्चायं परमात्मा ॥ ६ ॥

72 भूमा संप्रसादादध्युपदेशात् ॥ *सुखं त्वेव विजिज्ञासितव्यम्, *भूमैव सुखम्* इत्युक्त्वा भूम्नस्स्वरूपमाह *यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा* इति; यस्मिन् सुखेऽनुभूयमाने तद्व्यतिरिक्तं किमपि सुखत्वेन न पश्यति न शृणोति न विजानाति स भूमेत्युच्यते, *अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पमिति वचनात् । तथाच

महाभारते *दिव्यानि कामचाराणि विमानानि सभास्तथा। आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः। एते वै निरयास्तात स्थानस्य परमात्मनः॥ इति। *एष तु वा अतिवदति यस्सत्येनातिवदतीति प्रस्तुतं चातिवादित्वमेवमेव समञ्जसम्। अतिवादित्वं हि स्वोपास्यपुरुषार्थाधिक्यवादित्वम्। तदल्पमित्यल्पप्रतियोगित्वेन, भूमा इत्युक्तप्रकारवैपुल्याश्रयसुखरूपवाची। अयं भूमशब्दव्यपदिष्टः परमात्मा; संप्रसादादध्युपदेशात्—संप्रसादः प्रत्यगात्मा, *अथ य एष संप्रसादः* इत्यादिश्रुतेः। *एष तु वा अतिवदति यस्सत्येनेत्यादिना प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनः ऊर्ध्वमर्थान्तरत्वेन अस्योपदेशात् ॥ ७ ॥

73 धर्मोपपत्तेश्च ॥ *स भगवः कस्मिन् प्रतिष्ठितः...स्वे महिम्नि* इत्यादावुपदिष्टानस्वमहिमप्रतिष्ठितत्वसर्वकारणत्वसर्वात्मकत्वादिधर्माणां परस्मिन्नेवोपपत्तेश्च भूमा परः ॥ ८ ॥

74 अक्षरमम्बरान्तधृतेः ॥ *एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु* इत्यादिना अभिहितमक्षरं परं ब्रह्म, अम्बरान्तधृतेः। *यदूर्ध्वं गार्गि दिवः इत्यारभ्य सर्वविकाराधारतया निर्दिष्ट आकाशः *कस्मिन्नोतश्च प्रोतश्चेति पृष्टे *एतद्वै तदक्षरमिति निर्दिष्टस्याक्षरस्य वायुमदम्बरान्तधृतेः; सर्वविकाराधारो ह्ययमाकाशः वायुमदम्बरान्तकारणं प्रधानम्; तद्धारकं परं ब्रह्म ॥ ९ ॥

75 सा च प्रशासनात् ॥ सा च धृतिः, *एतस्य वाऽक्षरस्य प्रशासने गार्गीत्यादिना प्रकृष्टाज्ञया क्रियमाणा श्रूयते। अत इदमक्षरं प्रत्यगात्मा च न भवतीत्यर्थः ॥ १० ॥

76 अन्यभावव्यावृत्तेश्च ॥ अन्यभावः—अन्यत्वम्, *अदृष्टं द्रष्टृ इत्यादिना परमात्मनोऽन्यत्वं ह्यस्याक्षरस्य व्यावर्तयति वाक्यशेषः; अतश्च पर एव ॥ ११ ॥

77 ईक्षतिकर्म व्यपदेशात्सः ॥ *यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत* इत्यारभ्य *स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते* इत्यत्र ध्यायतिपूर्वकेक्षतिकर्म सः—प्रशासिता परमात्मा इत्यर्थः; उत्तरत्र *तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परश्चेति परमपुरुषासाधारणधर्मव्यपदेशात; *यत्तत्कवयो वेदयन्ते इति तदीयस्थानस्य सूरिभिर्दृश्यत्वव्यपदेशाच्च ॥ १२ ॥

78 दहर उत्तरेभ्यः ॥ *अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्* इत्यत्र दहराकाशशब्दनिर्दिष्टः परमात्मा, उत्तरेभ्यः वाक्यगतेभ्यः तदसाधारणधर्मेभ्यः। उत्तरत्र दहराकाशस्य सर्वाधारतयाऽतिमहत्वमभिधाय, एतत्सत्यं ब्रह्माख्यं पुरमिति निर्दिश्य, तस्मिन् ब्रह्माख्ये दहराकाशे कामास्समाहिताः इत्युक्ते, कोऽयं दहराकाशः? के च कामाः? इत्यपेक्षायाम्, *एष आत्मा अपहतपाप्मा इत्यारभ्य *सत्यकामस्सत्यसङ्कल्पः इत्यन्तेन दहराकाशः आत्मा; कामाश्च अपहतपाप्मत्वादयः तद्विशेषणभूतगुणा इति हि ज्ञापयति। *दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यत्र दहरा-

काशस्तदन्तर्वर्ति च यत्, तदुभयमन्वेष्टव्यमित्युक्तमिति विज्ञायते; *अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्* इति हि व्यज्यते ॥ १३ ॥

79 गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ *एवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्य एत ब्रह्मलोकं न विन्दन्ति* इत्यहरहस्सर्वासां प्रजानामजानतीनां दहराकाशोपरि गतिः — वर्तनम्, दहराकाशसमानाधिकरणो ब्रह्मलोकशब्दश्च दहराकाशः परं ब्रह्मेति ज्ञापयति । तथा ह्यन्यत्र सर्वासां परमात्मोपरि वर्तमानत्वं दृष्टम्, *तस्मिन् लोकाश्श्रितास्सर्वे *तदक्षरे परमे प्रजाः *इत्यादौ; ब्रह्मलोकशब्दश्च *एष ब्रह्मलोकः इत्यादौ । अन्यत्र दर्शनाभावेऽपि इदमेव पर्याप्तम् अस्य परमात्मत्वे लिङ्गम्, यद्दहराकाशोपरि सर्वस्य वर्तमानत्वम्, ब्रह्मलोकशब्दश्च ॥ १४ ॥

80 धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ *अथ य आत्मा स सेतुर्विधृतिरिति जगद्धृतेः परमात्मनो महिम्नोऽस्मिन् दहराकाशे उपलब्धेश्चायं परः; सा हि परमात्ममहिमा, *एष सेतुर्विधरणः इत्यादिश्रुतेः ॥ १५ ॥

81 प्रसिद्धेश्च ॥ आकाशशब्दस्य *यदेष आकाश आनन्दः इति परमात्मन्यपि प्रसिद्धेश्चायं परः; सत्यसङ्कल्पत्वादिगुणबृन्दोपबृंहिता प्रसिद्धिः भूताकाशप्रसिद्धबलीयसीत्यर्थः ॥ १६ ॥

82 इतरपरामर्शात्स इति चेन्नासंभवात् ॥ *अथ य एष संप्रसादः इतीतरस्य—जीवस्य परामर्शात् प्रकृताकाशस्स इति चेत्; नैतत्, उक्तगुणानां तत्रासंभवात् ॥ १७ ॥

83 उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ उत्तरत्र *य आत्मा अपहतपाप्मेति जीवस्य अपहतपाप्मत्वादिश्रवणान्नासंभवः, जागरितस्वप्नसुषुप्त्याद्यवस्थासु वर्तमानत्वात् स हि जीव इति चेत्, नैतत्, आविर्भूतस्वरूपस्तु—कर्मारब्धशरीरसंबन्धित्वेन तिरोहितापहतपाप्मत्वादिकः पश्चात् परं ज्योतिरुपसंपद्याविर्भूतस्वरूपः तत्र अपहतपाप्मत्वादिगुणको जीवः प्रतिपादितः । दहराकाशस्तु अतिरोहितकल्याणगुणसागर इति नायं जीवः ॥ १८ ॥

84 अन्यार्थश्च परामर्शः ॥ *अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते* इति जीवात्मनो दहराकाशोपसंपत्त्या स्वरूपाविर्भावापादनरूपमाहात्म्यप्रतिपादनार्थोऽत्र जीवपरामर्शः ॥ १९ ॥

85 अल्पश्रुतेरिति चेत्तदुक्तम् ॥ अल्पस्थानत्वस्वरूपाल्पत्वश्रुतेर्नायं परमात्मेति चेत्; तत्रोत्तरमुक्तम् *निचाय्यत्वादेवं व्योमवच्चेति ॥ २० ॥

86 अनुकृतेस्तस्य च ॥ तस्य—दहराकाशस्य परञ्ज्योतिषः, अनुकरणश्रवणाच्च जीवस्य न जीवो दहराकाशः; *स तत्र पर्येति जक्षत् क्रीडन् रममाणः इत्यादिस्तदुपसंपत्त्या स्वच्छन्दवृत्तिरूपस्तदनुकारश्श्रूयते ॥ २१ ॥

87 अपि स्मर्यते ॥ *इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तिच ॥ इति ॥ २२ ॥

88 शब्दादेव प्रमितः ॥ *अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्येत्यादौ अङ्गुष्ठप्रमितः परमात्मा, *ईशानो भूतभव्यस्येति सर्वेश्वरत्ववाचिशब्दादेव ॥ २३ ॥

89 हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ अनवच्छिन्नस्यापि उपासकहृदि वर्तमानत्वापेक्षमङ्गुष्ठप्रमितत्वम् । मनुष्याणामेवोपासनसंभावनया तद्विषयत्वाच्च शास्त्रस्य मनुष्यहृदयापेक्षयेदमुक्तम् । स्थितं तावदुत्तरत्र समापयिष्यते ॥ २४ ॥

90 तदुपर्यपि बादरायणस्संभवात् ॥ तत्—ब्रह्मोपासनम्; उपरि-देवादिष्वप्यस्ति, अर्थित्वसामर्थ्यसंभवादिति भगवान् बादरायणः मेने । संभवश्च पूर्वोपार्जितज्ञानाविस्मरणात्; मन्त्रार्थवादेषु विग्रहादिमत्तया स्तुतिदर्शनात्, तदुपपत्तये तत्संभवे, तेषामेव प्रामाण्येन विग्रहादिमत्त्वाच्च ॥ २५ ॥

91 विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ विग्रहादिमत्वे एकस्यानेकत्र युगपत्सान्निध्यायोगात्, कर्मणि विरोध इति चेन्न; शक्तिमत्सु सौभरिप्रभृतिषु युगपदनेकशरीरप्रतिपत्तिदर्शनात् ॥ २६ ॥

92 शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ वैदिके तु शब्दे विरोधप्रसक्तिः—देहस्य सावयवत्वेनोत्पत्तिमत्त्वादिन्द्रादिदेवोत्पत्तेः प्राक् विनाशादूर्ध्वञ्च वैदिकेन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादिति चेन्न; अतः—वैदिकादेवेन्द्रादिशब्दादिन्द्राद्यर्थसृष्टेः । नहीन्द्रादिशब्दाः व्यक्तिवाचकाः; अपि तु गवादिशब्दवदाकृतिवाचिनः; पूर्वस्मिन्निन्द्रादौ विनष्टे वैदिकेन्द्रादिशब्दादेव ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरम् इन्द्रादिकं कुलालादिरिव घटादिकं सृजतीति न कश्चिद्विरोधः । कुत इदमवगम्यते ? श्रुतिस्मृतिभ्याम् । श्रुतिः *वेदेन रूपे व्याकरोत् सतासती प्रजापतिः *स भूरिति व्याहरत् स भूमिमसृजत* इत्यादिः । स्मृतिरपि—*सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इत्यादिः ॥ २७ ॥

93 अत एव च नित्यत्वम् ॥ यतो ब्रह्मा वैदिकाच्छब्दादर्थान् स्मृत्वा सृजति; अत एव *मन्त्रकृतो वृणीते *विश्वामित्रस्य सूक्तं भवति *इति विश्वामित्रादीनां मन्त्रादिकृत्त्वेऽपि मन्त्रादिमयवेदस्य नित्यत्वं तिष्ठति । अनधीतमन्त्रादिदर्शनशक्तान् पूर्वविश्वामित्रादीन् तत्तद्वैदिकशब्दैः स्मृत्वा, तदाकारानपरान् तत्तच्छक्तियुक्तान् सृजति हि ब्रह्मा नैमित्तिकप्रलयानन्तरम् । ते चानधीत्यैव तानेव मन्त्रादीन् अस्खलितान् पठन्ति । अतस्तेषां मन्त्रादिकृत्त्वं वेदनित्यत्वं च स्थितम् ॥ २८ ॥

प्राकृतप्रलये तु चतुर्मुखे वेदाख्यशब्दे च विनष्टे कथं वेदस्य नित्यत्वमित्यत आह—

94 समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ अत एव सृज्यानाम् समाननामरूपत्वात् प्राकृतप्रलयावृत्तावपि न विरोधः । आदिकर्ता परमपुरुषो हि पूर्वरूपसंस्थानं जगत् स्मृत्वा तदाकारमेव जगत् सृजति, वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य चतुर्मुखाय ददातीति । श्रुति-

स्मृतिभ्यामादिकर्ता पूर्ववत्सृजतीत्यवगम्यते । श्रुतिस्तावत् *सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिका, *यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै* इति च । स्मृतिरपि-- *यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव तथा भावा युगादिषु ॥ इति । वेदस्य नित्यत्वं च पूर्वपूर्वोच्चारणक्रमविशिष्टस्यैव सर्वदोच्चार्यमाणत्वम् ॥ २९ ॥

95 मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ मधुविद्यादिषु वस्वादिदेवानामेव उपास्यत्वात्, प्राप्यत्वाच्च, तत्र वस्वादीनां कर्मकर्तृभावविरोधेन उपास्यत्वासंभवात्, वसूनां सतां वसुत्वं प्राप्तमिति प्राप्यत्वासंभवाच्च तत्र वस्वादीनामनधिकारं जैमिनिर्मेने ॥ ३० ॥

96 ज्योतिषि भावाच्च ॥ *तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति ज्योतिषि-परस्मिन् ब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽपि अधिकारमात्रवचनात् अन्यत्र वस्वाद्युपासने अनधिकारो न्यायसिद्धो गम्यते ॥ ३१ ॥

97 भावंतु बादरायणोऽस्ति हि ॥ मधुविद्यादिष्वपि वस्वादीनामधिकारभावं भगवान् बादरायणो मन्यते । अस्ति हि वस्वादीनां सतां स्वावस्थब्रह्मण उपास्यत्वसंभवः, कल्पान्तरे वसुत्वादेः प्राप्यत्वसंभवश्च । *एकल एव मध्ये स्थाता* इत्यादिना आदित्यस्य कारणावस्थां प्रतिपाद्य, *य एतामेवं ब्रह्मोपनिषदं वेदेति मधुविद्यायाः ब्रह्मविद्यात्वमाह । अतः कार्यकारणोभयावस्थं तत्रोपास्यम् । कल्पान्तरे वस्वादित्वमनुभूय अधिकारावसाने ब्रह्मप्राप्तिर्न विरुद्धा ॥ ३२ ॥

98 शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ *आजहारेमाश्शूद्रेत्यादौ ब्रह्मोपदेशे शिष्यं प्रति शूद्रेत्यामन्त्रणेन शिष्यस्य ब्रह्मज्ञानाप्राप्त्या शुक्सञ्जातेति सूच्यते । शोचनाच्छूद्रः, न जातियोगेन । कुतः? तदनादरश्रवणात्—ब्रह्मविद्यावैकल्येन स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात्; तदैवाचार्यं प्रत्याद्रवणात् । हिशब्दो हेतौ; यतश्शूद्रेत्यामन्त्रणं न जातियोगेन, अतश्शूद्रस्य ब्रह्मोपासनाधिकारो न सूच्यते ॥ ३३ ॥

99 क्षत्रियत्वगतेश्च ॥ शुश्रूषोः क्षत्रियत्वगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् । उपक्रमे *बहुदायीत्यादिना दानपतित्वबहुपक्वान्नदायित्वबहुग्रामप्रदानैरस्य हि क्षत्रियत्वं गम्यते ॥ ३४ ॥

100 उत्तरत्र चैत्ररथेन लिङ्गात् ॥ उपरिष्टाच्चास्यां विद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते *अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्चेत्यादौ । अभिप्रतारी हि चैत्ररथः क्षत्रियः । अभिप्रतारिणः चैत्ररथत्वम्, क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते । प्रकरणान्तरे हि कापेयसहचारिणश्चैत्ररथत्वम्, क्षत्रियत्वं चावगतम्, *एतेन चैत्ररथं कापेया अयाजयन्निति । *तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायतेति च । अतश्च अयं शिष्यः न चतुर्थः ॥ ३५ ॥

101 संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ विद्योपक्रमे *उप त्वा नेष्ये इत्युपनयनपरामर्शात् शूद्रस्य तदभावाभिलापाच्च न शूद्रस्य ब्रह्मविद्याधिकारः । *न शूद्रे पातकं किञ्चित् न च संस्कारमर्हतीति संस्कारो हि निषिद्धः ॥ ३६ ॥

102 तदभावनिर्धारणे च प्रवृत्तेः ॥ *नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरेति शूद्रत्वाभावनिश्चय एव उपदेशप्रवृत्तेश्च नाधिकारः ॥ ३७ ॥

103 श्रवणाध्ययनार्थप्रतिषेधात् ॥ शूद्रस्य श्रवणाध्ययनादीनि हि निषिध्यन्ते, *तस्माच्छूद्रसमीपे नाध्येतव्यमिति । अनुपशृण्वतोऽध्ययनादि च न संभवति ॥ ३८ ॥

104 स्मृतेश्च ॥ स्मर्यते हि शूद्रस्य वेदश्रवणादौ दण्डः *अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः इति ॥ ३९ ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति—

105 कम्पनात् ॥ अङ्गुष्ठप्रमितप्रकरणमध्ये *यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतमित्यादिना अभिहिताङ्गुष्ठप्रमितप्राणशब्दनिर्दिष्टजनितभयात् वज्रादिवोद्यतात् अग्निवायुसूर्येन्द्रप्रभृतिकृत्स्नजगत्कम्पनात् अङ्गुष्ठप्रमितः परमपुरुष इति निश्चीयते ॥ ४० ॥

106 ज्योतिर्दर्शनात् ॥ तत्प्रकरणे *न तत्र सूर्यो भातीत्यारभ्य *तस्य भासा सर्वमिदं विभातीति भाश्शब्दाभिहितस्य अनवधिकातिशयज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमितः परमपुरुषः ॥४१॥

107 अकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ *आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मेत्यादिना निर्दिष्ट आकाशः, *धूत्वा शरीरमकृतं कृतात्मेति प्रकृतात्प्रत्यगात्मनः परिशुद्धादर्थान्तरभूतः परमपुरुषः; नामरूपयोः निर्वोढृत्वतदस्पर्शरूपार्थान्तरत्वामृतत्वादिव्यपदेशात् ॥४२॥

तत्त्वमस्यादिनैक्योपदेशात् प्रत्यगात्मनो नार्थान्तरभूतः परमपुरुष इत्याशङ्क्याह—

108 सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ *प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् *प्राज्ञेनात्मनाऽन्वारूढः* इति सुषुप्त्युत्क्रान्त्योः बाह्यान्तरविषयानभिज्ञात्प्रत्यगात्मनः तदानीमेव प्राज्ञतया भेदेन व्यपदेशादर्थान्तरभूत एव ॥ ४३ ॥

109 पत्यादिशब्देभ्यः॥परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायमर्थान्तरभूतः॥ *सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः* इति ह्युत्तरत्र श्रूयते; ऐक्योपदेशोऽपि *अवस्थितेरिति काशकृत्स्नः* इत्यनेन जीवस्य शरीरभूतस्यात्मतया अवस्थितेरिति स्वयमेव परिहरिष्यति ॥ ४४ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

## प्रथमाध्याये चतुर्थः पादः

110 आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ एकेषां कठानां शाखायाम्, आनुमानिकं प्रधानमपि जगत्कारणत्वेन *महतः परमव्यक्तमित्युच्यते इति चेत्; न,

पूर्वत्र *आत्मानं रथिनं विद्धीत्यादिषूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु शरीराख्यरूपकविन्यस्तस्यात्राव्यक्तशब्देन गृहीतेः । *इन्द्रियेभ्यः परा ह्यर्थाः* इत्यादिना हि वशीकार्यत्वेन हि परा उच्यन्ते । तथा चोत्तरत्र श्रुतिरेव दर्शयति *यच्छेद्वाङ्मनसी प्राज्ञः इत्यादिना ॥१॥

111 सूक्ष्मंतु तदर्हत्वात् ॥ सूक्ष्मम्—अव्यक्तमेव शरीरावस्थं कार्यार्हमित्यव्यक्तशब्देन शरीरमेव गृह्यते ॥ २ ॥

यदि रूपकविन्यस्तानामेव ग्रहणम्, किमर्थम् *अव्यक्तात्पुरुषः परः* इत्यत आह—

112 तदधीनत्वादर्थवत् ॥ पुरुषाधीनत्वादात्मशरीरादिकम् अर्थवत्—उपासननिर्वृत्तये भवति । पुरुषो ह्यन्तर्यामी सर्वमात्मादिकं प्रेरयन् उपासनोपायत्वेन वशीकार्यकाष्ठा प्राप्यश्चेति *सा काष्ठा सा परा गतिरित्युच्यते ॥ ३ ॥

113 ज्ञेयत्वावचनाच्च ॥ अत्राव्यक्तस्य ज्ञेयत्वावचनाच्च न कापिलमव्यक्तम् ॥ ४ ॥

114 वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ *अशब्दमस्पर्शमित्यारभ्य *निचाय्य तमिति वदतीति चेन्न; *तद्विष्णोः परमं पदम् *एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते* इत्यादिना प्रकृतः प्राज्ञो हि *निचाय्य तमिति ज्ञेय उच्यते ॥ ५ ॥

115 त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ उपास्योपासनोपासकानां त्रयाणामेवास्मिन्प्रकरणे ज्ञेयत्वेन उपन्यासः प्रश्नश्च; न प्रधानादेः । *अध्यात्मयोगाधिगमेन देवं मत्वा इत्यादिः उपन्यासः; *येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके* इत्यादिकश्च प्रश्नः ॥ ६ ॥

116 महद्वच्च ॥ *बुद्धेरात्मा महान्परः इत्यात्मशब्दाद्यथा न तान्त्रिको महान्, तथाऽव्यक्तमपीति ॥ ७ ॥

117 चमसवदविशेषात् ॥ *अजामेकां...बह्वीः प्रजास्सृजमानामित्यत्र न तन्त्रसिद्धा प्रकृतिः कारणत्वेनोक्ता; जन्माभावयोगमात्रेण न तस्या एव प्रतीतिः *अर्वाग्बिलश्चमस इतिवत् प्रकरणे विशेषकाभावात् । *यथेदं तच्छिर इति हि चमसो विशेष्यते । यौगिकशब्दाद्विशेषप्रतीतिर्हि विशेषकापेक्षा ॥ ८ ॥

118 ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ज्योतिः—ब्रह्म; ब्रह्मकारणिका इयमजा । तथाहि ब्रह्मकारणिकाया एव प्रतिपादकमेतत्सरूपमन्त्रश्च तैत्तिरीयाः अधीयते; *अणोरणीयान्महतो महीयानित्यारभ्य *अतस्समुद्रा गिरयश्चेत्यादिना सर्वस्य ब्रह्मण उत्पत्त्या तदात्मकत्वप्रतिपादनसमये *अजामेकामिति पठन्ति । अतस्तत्प्रत्यभिज्ञानादियं ब्रह्मकारणिकेति निश्चीयते ॥ ९ ॥

119 कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ कल्पना—सृष्टिः, यथा *सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति । *अस्मान्मायी सृजते विश्वमेतदित्यादिना सृष्ट्युपदेशात् अजात्वब्रह्मकार्यत्वयोरविरोधश्च । प्रलयकाले नामरूपे विहायाचिद्वस्त्वपि सूक्ष्मरूपेण ब्रह्मशरीरतया तिष्ठतीत्यजात्वम् ।

सृष्टिकाले नामरूपे भजमाना प्रकृतिः ब्रह्मकारणिका; यथा आदित्यस्य सृष्टिकाले वस्वादिभोग्यरसाधारतया मधुत्वं कार्यत्वञ्च, तस्यैव प्रलयकाले मध्वादिव्यपदेशानर्हसूक्ष्मरूपेणावस्थानमकार्यत्वञ्च मधुविद्यायां प्रतीयते *असौ वा आदित्यो देवमधु *नैवोदेता नास्तमेता एकल एव मध्ये स्थातेति, तद्वत् ॥ १० ॥

120 न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ *यस्मिन्पञ्च पञ्चजना इत्यत्र पञ्चविंशतिसङ्ख्योपसंग्रहादपि न तान्त्रिकाण्येतानि; यस्मिन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तेभ्यः पृथग्भावात् एतेषां तत्त्वातिरेकाच्च; यच्छब्दनिर्दिष्टमाकाशश्चेति द्वयमतिरिक्तम्। संख्योपसंग्रहादपीत्यपिशब्दान्नात्र पञ्चविंशतिसंख्यासंग्रहः; *दिक्संख्ये संज्ञायामिति संज्ञाविषयोऽयं पञ्चजना इति। पञ्चजना नाम केचित्, ते पञ्च पञ्चजनाः इत्युच्यन्ते, *सप्त सप्तर्षय इतिवत् ॥ ११ ॥

121 प्राणादयो वाक्यशेषात् ॥ पञ्चजनसंज्ञिताः प्राणादयः पञ्चेन्द्रियाणीति *प्राणस्य प्राणमुत चक्षुषश्चक्षुरित्यादिवाक्यशेषादवगम्यते; चक्षुश्श्रोत्रसाहचर्यात् प्राणान्नशब्दावपि स्पर्शनादीन्द्रियविषयौ ॥ १२ ॥

122 ज्योतिषैकेषामसत्यन्ने ॥ एकेषां शाखिनां काण्वानाम् *अन्नस्यान्नमित्यसति, *तं देवा ज्योतिषां ज्योतिरित्युपक्रमगतेन ज्योतिश्शब्देन पञ्च पञ्चजनाः इन्द्रियाणीति ज्ञायन्ते। ज्योतिषां ज्योतिः—प्रकाशकानां प्रकाशकं ब्रह्मेत्युक्त्वा, अनन्तरं *पञ्च पञ्चजना इत्युक्तेः प्रकाशकानि पञ्चेन्द्रियाणीति गम्यते ॥ १३ ॥

123 कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ आकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु *असद्वा इदमग्र आसीत् *तद्धेदं तर्ह्यव्याकृतमासीदित्यादिष्वनिर्ज्ञातविशेषेषु *आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजै* इति विशेषवाचिवाक्यनिर्दिष्टस्यैवोक्तेः न तान्त्रिकाव्याकृतादिकारणवादप्रसङ्गः ॥ १४ ॥

124 समाकर्षात् ॥ *सोऽकामयत, बहु स्यां प्रजायेयेति पूर्वनिर्दिष्टस्यैव सर्वज्ञस्य *असद्वा इदमग्र आसीदित्यत्र समाकर्षाच्च स एवेति गम्यते। *तद्धेदं तर्ह्यव्याकृतमासीदिति निर्दिष्टस्यैव *स एष इह प्रविष्ट आनखाग्रेभ्यः, *पश्यत्यचक्षुरित्यत्र समाकर्षात् एष एवाव्याकृत इति निश्चीयते। असदव्याकृतशब्दौ हि तदानीं नामरूपविभागाभावादुपपद्येते ॥ १५ ॥

125 जगद्वाचित्वात् ॥ *ब्रह्म ते ब्रवाणीत्युपक्रम्य *यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इत्यत्र कर्मशब्दस्यैतच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या जगद्वाचित्वात् परमेव ब्रह्म वेदितव्यतयोपदिष्टम् ॥ १६ ॥

126 जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ *एतैरात्मभिर्भुङ्क्ते *अथास्मिन्प्राण एवैकधा भवतीति च जीवादिलिङ्गान्न पर इति चेत्, एतत् प्रतर्दनविद्यायामेव परिहृतम्—पूर्वापरपर्यालोचनया ब्रह्मपरत्वे निश्चिते तदनुगुणतया नेयमन्यल्लिङ्गमिति ॥ १७ ॥

127 अन्यार्थंतु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ *तौ ह सुप्तं पुरुषमाजग्मतुरित्यादिना देहातिरिक्तजीवसद्भावप्रतिपादनं तदतिरिक्तपरमात्मसद्भावज्ञापनार्थमिति, *क्वैष एतद्बालाके पुरुषोऽशयिष्टेति प्रश्नात्, *अथास्मिन्प्राण एवैकधा भवति *सता सोम्य तदा संपन्नो भवतीति वाक्यसमानार्थकात् प्रतिवचनाच्चावगम्यते। एके—वाजसनेयिनोऽपि एतत्प्रतिवचनसरूपं वाक्यं स्पष्टमधीयते च, *क्वैष एतदित्यादि, *य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते इत्यन्तम् ॥१८॥

128 वाक्यान्वयात् ॥ *न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामायेत्यारभ्य, *आत्मा वा अरे द्रष्टव्य इत्यादिनोपदिष्टः परमात्मा, *अमृतत्वस्य तु नाशाऽस्ति वित्तेनेत्यारभ्य *आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमित्यादि *येनेदं सर्वं विजानातीत्यन्तस्य कृत्स्नस्य वाक्यस्य परमात्मन्येवान्वयात् ॥ १९ ॥

अस्मिन्प्रकरणे प्रकरणान्तरे च जीववाचिशब्देन परमात्मनोऽभिधाने, तत्सामानाधिकरण्ये च कारणं मतान्तरेणाह—

129 प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ *आत्मनि खल्वरे दृष्टे इत्यादिना परमात्मज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य तत्कार्यतया तस्मादनतिरिक्तत्वं ज्ञापयितुं जीवशब्देन परमात्माभिधानमिति आश्मरथ्यः ॥ २० ॥

130 उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ उत्क्रमिष्यतः—मुक्तस्य परमात्मस्वरूपभावादात्मशब्देन परमात्माभिधानमिति औडुलोमिः ॥ २१ ॥

131 अवस्थितेरिति काशकृत्स्नः ॥ *य आत्मनि तिष्ठन्नात्मनोऽन्तर इत्यादिना जीवात्मनि परमात्मन आत्मतया अवस्थितेरिति काशकृत्स्न आचार्यो मन्यते। इदमेव मतं सूत्रकारस्स्वीकृतवानिति, मतद्वयमुपन्यस्य तद्विरोध्येतदभिधानात् अन्यस्यानभिधानाच्च निश्चीयते ॥ २२ ॥

132 प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ जगदुपादानकारणमपि परं ब्रह्म, न निमित्तमात्रम्, *स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवतीति, येन आदेष्ट्रा निमित्तभूतेन विज्ञातेन चेतनाचेतनात्मकं कृत्स्नं जगद्विज्ञातं भवतीति आदेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञातदुपपादनरूपमृत्कार्यदृष्टान्तानुपरोधात्। आदिश्यते अनेनेति आदेशः—इत्यादेशशब्देनादेष्टाऽभिधीयते। आदेशः प्रशासनम्, *एतस्य वा अक्षरस्य प्रशासने गार्गि* इत्यादिश्रुतेः ॥ २३ ॥

133 अभिध्योपदेशाच्च ॥ *तदैक्षत बहु स्यां प्रजायेयेति निमित्तभूतस्येक्षितुः विचित्रचिदचिद्रूपेण जगदाकारेणात्मनो बहुभवनसङ्कल्पोपदेशाच्च उपादानमपीति विज्ञायते॥ २४ ॥

134 साक्षाच्चोभयाम्नानात् ॥ *ब्रह्म वनं ब्रह्म स वृक्ष आसीत्...ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति उपादानं निमित्तञ्च ब्रह्मैवेति स्वशब्देन उभयाम्नानाच्च ॥ २५ ॥

135 आत्मकृतेः ॥ *सोऽकामयतेति निमित्तभूतस्य स्वस्यैव जगदाकारेण कृतेः *तदात्मानं स्वयमकुरुतेत्युपदिश्यमानायाः परमपुरुषो जगन्निमित्तमुपादानश्चेति विज्ञायते ॥ २६ ॥

परस्य ब्रह्मणो निरवद्यत्वसत्यसङ्कल्पत्वादेः तद्विपरीतानन्तापुरुषार्थाश्रयजगदाकारेण आत्मकृतेश्चाविरोधः कथमित्याशङ्क्याह--

136 परिणामात् ॥ अत्रोपदिश्यमानात् परिणामात् तदविरोध एव । अविभक्तनामरूपातिसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमपुरुषस्स्वयमेव *सोऽकामयत बहु स्यां प्रजायेयेति विभक्तनामरूपचिदचिद्वस्तुशरीरको भवेयमिति सङ्कल्प्य *इदं सर्वमसृजत यदिदं किञ्चेति स्वशरीरभूतमतिसूक्ष्मञ्चिदचिद्वस्तु स्वस्माद्विभज्य *तत्सृष्ट्वा, तदेवानुप्राविशदिति स्वस्माद्विभक्ते चिदचिद्वस्तुनि स्वयमेवात्मतयाऽनुप्रविश्य *सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तंच, निलयनं चानिलयनंच, विज्ञानं चाविज्ञानंच, सत्यं चानृतंच सत्यमभवदिति हि स्वस्य बहुभवनरूपपरिणाम उपदिश्यते; अतो न कश्चिद्विरोधः । अविभागावस्थायामपि जीवस्तत्कर्म च सूक्ष्मरूपेण तिष्ठतीति वक्ष्यति *न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चेति ॥ २७ ॥

137 योनिश्च हि गीयते ॥ *यद्भूतयोनिमित्यादिषु योनिश्च गीयते; अतश्चोपादानमपि ॥ २८ ॥

138 एतेन सर्वे व्याख्याता व्याख्याताः ॥ *जन्माद्यस्य यतः* इत्यादिना एतदन्तेन न्यायेन सर्वे वेदान्ताः ब्रह्मपरा व्याख्याताः ॥ द्विरुक्तिरध्यायपरिसमाप्तिद्योतनाय ॥ २९ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे प्रथमस्याध्यायस्य चतुर्थःपादः ॥ ४ ॥

॥ समाप्तश्चाध्यायः ॥

---

श्रीमते रामानुजाय नमः

## श्री वेदान्तसारे द्वितीयाध्याये प्रथमः पादः

139 स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ उपबृंहणापेक्षे वेदान्तार्थनिर्णये सति, कपिलस्मृत्युपबृंहणेन वेदान्तार्थः प्रधानकारणवाद इत्यनभ्युपगमे, कपिलस्मृतेरुपबृंहणानन्वयेनानवकाशदोषप्रसक्तिरिति चेत् न; अन्यासां वेदाविरोधिनीनां बह्वीनां मन्वादिस्मृतीनामनवकाशप्रसक्तेः । वेदस्योपबृंहणापेक्षत्वेऽपि अनन्यपराविरुद्धानेकस्मृतिषु सतीषु, विरुद्धार्थायाः वेदोदितार्थविशदीकरणत्वाभावेन तस्या उपबृंहणत्वमन्याय्यमित्यर्थः ॥ १ ॥

योगीन्द्रकपिलस्य तथाऽनुपलब्धेः कथं स्मृत्यन्तरमेतन्न्याय्यमिति चेत्, तत्राह--

140 इतरेषां चानुपलब्धेः ॥ वेदार्थसाक्षात्कारचतुरमन्वादियोगीन्द्राणां कपिलदृष्टार्थानुपलब्धेः कपिलोपलब्धिर्भ्रम एव ॥ २ ॥

141 एतेन योगः प्रत्युक्तः ॥ योगस्य हैरण्यगर्भस्यापि कापिलस्मृतिवद्वेदविरुद्धत्वाविशेषात् तद्वन्निरासः ॥ ३ ॥

142 न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ विकारास्पदत्वेनाज्ञत्वेनापुरुषार्थाश्रयत्वेन च जगतो ब्रह्मविलक्षणत्वात्तत्कार्यत्वं न संभवति; विलक्षणत्वंच शब्दाच्चावगम्यते, *विज्ञानं चाविज्ञानं चेत्यादेः ॥ ४ ॥

143 अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ *तं पृथिव्यब्रवीत् *आपो वा अकामयन्तेत्यादौ ज्ञानकार्यव्यपदेशः तत्तदभिमानिदेवताविषय इति, *हन्ताहमिमास्तिस्रो देवता इति देवताशब्देन विशेषितत्वात्, *अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिना तत्तदचिद्वस्त्वभिमानित्वेन देवतानुगतेश्चावगम्यते ॥ ५ ॥

144 दृश्यते तु ॥ विलक्षणयोरपि कार्यकारणभावस्संभवति, माक्षिकादिभ्यः क्रिम्याद्युत्पत्तिदर्शनात् ॥ ६ ॥

145 असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ एवं तर्हि कार्यं कारणे असदिति चेत् न, सालक्षण्यनियमप्रतिषेधमात्रत्वात्; पूर्वोक्तं कार्यकारणयोर्वस्त्वैक्यं न त्यक्तम् ॥ ७ ॥

146 अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ जगतो ब्रह्मकारणत्वेन तस्मिन्नपीत्यादौ जगत इव ब्रह्मणोऽपि विकारित्वाद्यनिष्टप्रसङ्गाद्वेदान्तवाक्यं सर्वमसमञ्जसं स्यात् ॥ ८ ॥

147 न तु दृष्टान्तभावात् । नैतत्, *यस्यात्मा शरीरम् *यस्याव्यक्तं शरीरमित्यादिश्रुतिसिद्धचिदचिद्वस्तुशरीरकस्य ब्रह्मणः कार्यकारणभावेनावस्थाने गुणदोषव्यवस्थितेः दृष्टान्तसद्भावात् । यथा जीवस्य सशरीरस्य मनुष्याद्यात्मनो बालत्वयुवत्वस्थविरत्वादिभावेऽपि बालत्वादयश्शरीरे तिष्ठन्ति, ज्ञानसुखादयश्चात्मन्येव; तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगतान्यज्ञानविकारादीनि दोषाः । आत्मभूते तु ब्रह्मणि निरवद्यत्वाविकारित्वसार्वज्ञ्यसत्यसङ्कल्पत्वादयः ॥ ९ ॥

148 स्वपक्षदोषाच्च ॥ प्रधानकारणदोषाच्चायमेव ग्राह्यः । प्रधानकारणवादे हि निर्विकारपुरुषसन्निधानात् प्रकृतिप्रवृत्तावितरेतरधर्माध्यासादयो दुरुपपादाः ॥ अन्यत्रान्यधर्मानुसन्धानरूपोऽध्यासः निर्विकारपुरुषस्य न संभवति, अचेतनायाः प्रकृतेरनुसन्धानरूपोऽध्यासस्सुतरां न संभवति ॥ १० ॥

149 तर्काप्रतिष्ठानादपि ॥ प्रधानकारणवादस्य कुतर्कमूलत्वात् तस्याप्रतिष्ठितत्वादपि त्याज्यं प्रधानम् ॥ ११ ॥

150 अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ क्लृप्तप्रकारात् प्रकारान्तरेण प्रधानमनुमेयमिति चेत्; एवमपि ततोऽधिककुतर्ककुशलसंभावनया अप्रतिष्ठितत्वात् अनिर्मोक्षप्रसङ्गो दुर्वारस्स्यात् ॥ १२ ॥

151 एतेन शिष्टापरिग्रहा अपि व्याख्याताः॥ एतेन—साङ्ख्यस्मृतिनिराकरणहेतुना तर्काप्रतिष्ठितत्वादिना परिशिष्टाश्च कणभक्षाक्षपादक्षपणकादिस्मृतयो निराकृताः॥ १२॥

152 भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्॥ यदि चिदचिद्वस्तुशरीरकत्वेन ब्रह्मणोऽपि सशरीरत्वमिष्यते; तर्हि जीववत्सशरीरत्वेन ब्रह्मणोऽपि शरीरसंबन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्तेः जीवादविभागप्रसक्तिरिति चेत्, न; स्यादेव जीवाद्विभागः, निरवद्यत्वकल्याणगुणाकरत्वेन ब्रह्मणः। न हि सशरीरत्वप्रयुक्तमनिष्टभोक्तृत्वम्; अपि त्वन्यवश्यत्वकृतम्। यथा लोके राज्ञस्सशरीरत्वेऽपि अनन्यवश्यस्य स्वाज्ञातिवृत्तिकृतानिष्टभोक्तृत्वं नेतरसमानम्॥ १४॥

153 तदनन्यत्वमारम्भणशब्दादिभ्यः॥ कारणभूताद्ब्रह्मणोऽनन्यत्वं कार्यभूतजगतः वाचारम्भणशब्दादिभ्यो वाक्येभ्योऽवगम्यते, *वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् *सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति *ऐतदात्म्यमिदं सर्वं...... तत्त्वमसीत्यादिभ्यः॥ १५॥

154 भावे चोपलब्धेः॥ घटादिकार्यभावे च तदेवेदं मृद्द्रव्यमित्युपलब्धेश्च कारणादनन्यत्कार्यम्॥ १६॥

155 सत्त्वाच्चापरस्य॥ कार्यस्य कारणे सत्त्वाच्च तस्मादनन्यत्कार्यम्, घटशरावादिकं पूर्वं मृत्तिकैवासीदिति हि घटादिः मृदात्मनोपलभ्यते॥ १७॥

156 असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च॥ *इदं वा अग्रे नैव किञ्चनासीदिति कार्यस्य तदानीमसत्त्वव्यपदेशात् कारणे कार्यमसदिति चेत् न, स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादसत्त्वव्यपदेशः। कुतः? *तदसदेव सन्मनोऽकुरुत स्यामिति वाक्यशेषादवगम्यते; मनस्कारो हि विद्यमानस्यैव। युक्तिश्च असद्व्यपदेशो धर्मान्तरयोगनिमित्त इति गमयति; पिण्डत्वघटत्वकपालत्वादिभिः परस्परविरोधिभिः भावरूपैर्धर्मैः घटः प्राङ्नासीदिदानीमस्ति भविष्यति चेति सदा विद्यमानस्यैव मृद्द्रव्यस्य हि असदादिव्यपदेशः। तथा शब्दान्तरं च *तद्धेदं तर्ह्यव्याकृतमासीदित्यादि॥ १८॥

157 पटवच्च॥ तन्तव एव संयोगविशेषभाजः पट इति नामान्तरादिकं भजन्ते, तद्वत् ब्रह्मापि॥ १९॥

158 यथा च प्राणादिः॥ यथा च वायुरेक एव वृत्तिविशेषैः प्राणापानादिनामानि भजते, तथा ब्रह्मापीति तदनन्यत्वं जगतः॥ २०॥

159 इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥ *तत्त्वमसि, *अयमात्मा ब्रह्मेति कार्यभूतस्य जीवस्य ब्रह्मभावव्यपदेशाद्धि अनन्यत्वमुक्तम्; एवं तर्हि सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मणः आत्मनो हितरूपकार्यजगदकरणम्, अहितरूपकार्यकरणञ्चेत्यादिदोषप्रसक्तिः॥ २१॥ नैतत्—

160 अधिकं तु भेदनिर्देशात् ॥ कार्यकारणयोरनन्यत्वेऽपि जीवस्वरूपात् ब्रह्मस्वरूपमर्थान्तरम्, *करणाधिपाधिपः *विद्याविद्ये ईशते यस्तु सोऽन्यः* इत्यादिभेदनिर्देशात्। चिदचिद्वस्तुशरीरं ब्रह्मैव कारणावस्थं कार्यावस्थश्चेति गुणदोषव्यवस्थितिरिति *न तु दृष्टान्तभावादिति ह्युक्तम्। *यस्य पृथिवी शरीरम् *यस्यात्मा शरीरमित्यादिश्रुतिशतसमधिगतं चिदचिद्वस्तुशरीरकत्वम् ॥ २२ ॥

161 अश्मादिवच्च तदनुपपत्तिः ॥ अश्मकाष्ठलोष्टतृणादेरचेतनस्येव जीवस्य *अनीशया शोचति मुह्यमान इत्यादिना अत्यन्तविसजातीयतयाऽभिहितस्य सर्वज्ञसत्यसङ्कल्पब्रह्मस्वरूपतानुपपत्तिस्सिद्ध्यत्येवेत्यर्थः ॥ २३ ॥

162 उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ कार्यनिर्वृत्तावनेककारकोपसंहारदर्शनात् ब्रह्मैकमेव जगदाकारकार्यं न भवेदिति चेत् न, क्षीरस्यैव दधिभाववत् ब्रह्मणोऽपि संभवति ॥ २४ ॥

163 देवादिवदपि लोके ॥ यथा देवादेश्शास्त्रावगतशक्तेः स्वसङ्कल्पादेव स्वेस्वे लोके स्वापेक्षितनानारूपभावः; एवं ब्रह्मणोऽपि शास्त्रावगतशक्तेस्सर्वमुपपन्नम् ॥ २५ ॥

164 कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ चिदचिद्वस्तुशरीरकं ब्रह्मैव कार्यकारणावस्थमिति ह्युक्तम्। तत्र ब्रह्मणश्शरीरिणो निरवयवत्वेन कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसक्तिः; कार्यावस्थायामपि अंशान्तरेणावस्थितमिति च पक्षे निरवयवत्वशब्दकोपो वा स्यात्। अतो ब्रह्म न कारणम् ॥ २६ ॥

परिहरति—

165 श्रुतेस्तु शब्दमूलत्वात् ॥ श्रुतिप्रामाण्यान्नैवं प्रसज्यते। शब्दैकप्रमाणकत्वाद्ब्रह्मस्वरूपस्य सकलेतरप्रमाणावगतवस्तुविसजातीयत्वेन तत्रतत्रादृष्टशक्तियोगो ब्रह्मणो न विरुद्धः; अतः कार्यत्वेन कारणत्वेन परिपूर्णस्यावस्थानं संभवति। यथा जातिवादिनां जातेः खण्डमुण्डादिषु ॥ २७ ॥

166 आत्मनि चैवं विचित्राश्च हि ॥ जीवात्मनि चाचिद्धर्मविरोधिधर्मयोगो विसजातीयशक्तित्वादेव। अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणा नियतशक्तयो विचित्रा दृश्यन्ते ॥ २८ ॥

167 स्वपक्षदोषाच्च ॥ कृत्स्नप्रसक्त्यादिदोषः निरवयवेऽचित्सजातीये प्रधान एवेति ब्रह्मैव कारणम् ॥ २९ ॥

168 सर्वोपेता च तद्दर्शनात् ॥ *पराऽस्य शक्तिर्विविधैव श्रूयते* इति श्रुतेः सर्वशक्तियोगश्च देवताया अवगम्यते ॥ ३० ॥

169 विकरणत्वान्नेति चेत्तदुक्तम् ॥ *न तस्य कार्यं करणञ्च विद्यते इति ब्रह्मणो विकरणत्वात् कारणत्वं नेति चेत्, तस्योत्तरं शब्दैकमूलत्वेन विसजातीयत्वादिति पूर्वसूत्रोक्तमेव ॥ ३१ ॥

170 न प्रयोजनवत्त्वात् ॥ ब्रह्मणः अवाप्तसमस्तकामत्वेन सृष्टौ प्रयोजनाभावात् ब्रह्म न कारणम् ॥ ३२ ॥

171 लोकवत्तु लीलाकैवल्यम् ॥ अवाप्तसमस्तकामस्यापि लीलाप्रयोजनत्वे नैरपेक्ष्यं संभवति, लोके केवललीलायै कन्तुकाद्यारम्भदर्शनात् । अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाऽभिमतसकलभोगोपकरणसद्भावः । आत्मतृप्तेर्भोगतृप्तिर्विसजातीया । लीलारसस्यापि तद्विलक्षणस्य त्रिगुणपुरुषाद्युपकरणं नित्यमेव ॥ ३३ ॥

172 वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ देवादिविषमसृष्ट्या पक्षपातो नैर्घृण्यश्च न संभवति परस्य, क्षेत्रज्ञकर्मसापेक्षत्वाद्विषमसृष्टेः । तथा *साधुकारी साधुर्भवति पापकारी पापो भवतीति श्रुतिरेव दर्शयति ॥ ३४ ॥

173 न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युलभ्यते च ॥ *सदेव सोम्येदमग्र आसीत् एकमेवेत्येकत्वावधारणात्, तदानीं क्षेत्रज्ञाभावात् कर्म न संभवतीति चेत्, नः अनादित्वात् क्षेत्रज्ञानां तत्तत्कर्मप्रवाहश्चास्त्येव । उपपद्यते च तदनादित्वेऽप्यविभागश्रुतिः, नामरूपविभागाभावात्, *तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियतेत्यनयैकार्थ्यात् । उपलभ्यते च श्रुतिषु क्षेत्रज्ञानादित्वम् *ज्ञाज्ञौ द्वावजावीशनीशौ *नित्यो नित्यानामिति ॥ ३५ ॥

174 सर्वधर्मोपपत्तेश्च ॥ प्रधानपरमाण्वादिष्वनुपपन्नानां सर्वधर्माणां ब्रह्मणि सकलेतरविलक्षणत्वेन सर्वशक्तिश्रुत्या चोपपत्तेः ब्रह्मैव कारणमिति सिद्धम् ॥ ३६ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे द्वितीयस्याध्यायस्य प्रथमः पादः ।

---

## द्वितीयाध्याये द्वितीयः पादः

175 रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ दार्वादेरचेतनस्य रथप्रासादादिनिर्माणे तदभिज्ञानधिष्ठितस्य रचनानुपपत्तेश्च तज्ज्ञाधिष्ठितस्य रचनाप्रवृत्तेश्च, अनुमानगम्यं प्रधानमचेतनं प्राज्ञानधिष्ठितं न जगत्कारणम् ॥ १ ॥

176 पयोम्बुवच्चेत्तत्रापि ॥ यथा पयः अम्बु च दध्यादिभावेऽनपेक्षम्, तद्वत्प्रधानमपीति चेत्; तत्रापि उक्त एव हेतुः, तस्यापि पक्षीकृतत्वात् ॥ २ ॥

177 व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ प्राज्ञाधिष्ठितत्वानपेक्षत्वेन सर्वदा सृष्टिप्रसङ्गाच्च न प्रधानं कारणम् ॥ ३ ॥

178 अन्यत्राभावाच्च न तृणादिवत् ॥ क्षीरीभवद्धेनूपयुक्ततृणादिवत् प्रधानमपीति न युक्तं वक्तुम्, अनडुदादिष्वदर्शनात्; तद्धि प्राज्ञाधिष्ठितम् ॥ ४ ॥

179 पुरुषाश्मवदिति चेत्तथाऽपि ॥ पुरुषः स्वसन्निधानात्प्रधानं प्रवर्तयति । अन्धपङ्गुपुरुषवत् अश्मवत्—अयस्कान्ताश्मवत् इति न प्राज्ञापेक्षेति चेत्; न, तथाऽपि न प्रधानप्रवृत्तिसंभवः,

अविकृतत्वात्पुरुषस्य। पङ्ग्वन्धादेः मार्गोपदेशदेशान्तरगमनादिः कादाचित्को विकारो ह्यस्ति ॥५॥

180 अङ्गित्वानुपपत्तेश्च ॥ गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः, प्रतिसर्गावस्थायां साम्यावस्थानां वैषम्यकृताङ्गाङ्गित्वानुपपत्तेश्च न जगदारम्भः ॥ ६ ॥

181 अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ज्ञस्य या शक्तिः तद्वियोगात्—ज्ञातृत्वशक्तिवियोगादित्यर्थः । उक्तप्रकारव्यतिरिक्तप्रकारेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात् रचनानुपपत्त्यादयो दोषास्तदवस्थाः ॥ ७ ॥

182 अभ्युपगमेऽप्यर्थाभावात् ॥ प्रधानाभ्युपगमेऽपि प्रयोजनाभावान्न तदनुमेयम् । पुरुषस्य निर्विकारस्य प्रधानदर्शनरूपविकारासंभवात्, प्रकृतिधर्माध्यासनिमित्तभोगः, तद्विवेकानुसन्धानकृतकैवल्यञ्च न संभवति ॥ ८ ॥

183 विप्रतिषेधाच्चासमञ्जसम् ॥ पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धसहस्राभ्युपगमाच्च असमञ्जसं कापिलमतम् ॥ ९ ॥

184 महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ असमञ्जसमिति वर्तते, वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां महद्दीर्घवत्—त्र्यणुकव्यणुकोत्पत्तिवदन्यच्च तन्मतं सर्वमसमञ्जसम् । अवयवास्स्वकीयैष्षड्भिः पार्श्वैस्संयुज्यमाना हि पृथुतरमवयविनमारभन्ते । परमाणूनां निरवयवत्वेन पार्श्वानभ्युपगमात्; पार्श्वाननपेक्ष्य संयुज्यमानानां न पृथुतरद्रव्यारम्भकत्वसंभवः ॥ १० ॥

185 उभयथाऽपि न कर्मातस्तदभावः ॥ अणुगताद्यकर्मासंभवात्तत्कृताणुसंयोगाभावात् क्षेत्रज्ञादृष्टानां विपाकापेक्षत्वेऽपि न तत्कृतकादाचित्काणुगतकर्मसंभवः; अनपेक्षत्वे प्रागप्युत्पादकं स्यात् । विपाको नाम कश्चिददृष्टगतो धर्मो न ज्ञायते; कर्मविधिवेलायामेव कालविशेषनियतफलदायित्वं यस्य कर्मणश्चोदितम्, तस्य तत्तत्कालागम एव विपाकः । अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तराप्रतिबन्ध एव विपाकः, अदृष्टानि च तत्तत्कर्मानुगुणफलदानस्वभावानि । अतोऽनन्तैरात्मभिः विविधकालफलदायित्वेनानुष्ठितानामेकदैकरूपविपाको न संभवति । अनुमेयेश्वरासिद्धेस्तदधिष्ठानाच्च न संभवति ॥ ११ ॥

186 समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ समवायाभ्युपगमाच्च असमञ्जसम्, समवायस्यापि जातिगुणादेरिव अपृथक्सिद्धिहेत्वपेक्षासाम्यादनवस्थितेः, समवायस्य तत्स्वभावकल्पनायां जात्यादेरेव तन्न्याय्यम् ॥ १२ ॥

187 नित्यमेव च भावात् ॥ समवायस्य नित्यत्वाभ्युपगमे संबन्धिनित्यत्वमन्तरेण तदनुपपत्तेः अवयवावयविनोरुभयोर्नित्यत्वप्रसङ्गादसदेवेदम् ॥ १३ ॥

188 रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ परमाणूनां रूपादिमत्त्वान्नित्यत्वादिविपर्ययश्च, घटादिषु तथा दर्शनात् ॥ १४ ॥

189 उभयधा च दोषात् ॥ अनित्यत्वादिभयाद्रूपादिशून्यत्वे कारणगुणपूर्वकत्वासिद्धिः, तद्भयाद्रूपादिमत्त्वे च अनित्यत्वादिरिति उभयधा च दोषादसमञ्जसमेव ॥ १५ ॥

190 अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ काणादपक्षे कस्याप्यंशस्य वैदिकैरपरिग्रहादनुपपन्नत्वाच्च अत्यन्तमनपेक्षा ॥ १६ ॥

191 समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ अणुहेतुके पृथिव्यादिसमुदाये, पृथिव्यादिहेतुके शरीरेन्द्रियसमुदाये च सुगताभ्युपगते तदभ्युपगमप्रकारेणैव समुदायासिद्धिः । क्षणिकत्वं हि तैरभ्युपगम्यते । संहतौ व्याप्रियमाणाः परमाणवः पृथिव्यादयश्च तदानीमेव नष्टाश्चेत्, के समुदायिरूपेण संहन्यन्ते ? ॥ १७ ॥

192 इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ अस्थिरेषु स्थिरत्वबुद्धिरूपाविद्यारागद्वेषादिपरम्परया अन्योन्यकारणत्वात्सर्वकारणत्वमुपपन्नमिति चेत्, न; अविद्यायास्सङ्घातभावानिमित्तत्वात् । न हि शुक्तिकादिषु रजतादिबुद्धिरूपाविद्यया शुक्तिकादिर्वस्तुतो रजतादिकार्यं करोति । अत्र विदुषस्तदानीमेव नष्टत्वादविद्यानिमित्तरागादयोऽपि न संभवन्ति ॥ १८ ॥

193 उत्तरोत्पादे च पूर्वनिरोधात् ॥ उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्यापि नष्टत्वेनाभावस्यैवोत्पादकत्वाविशेषेण सर्वदोत्पत्तिश्च स्यात् ॥ १९ ॥

194 असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ असत उत्पत्तावधिपतिसहकार्यादीनां ज्ञानहेतुत्वप्रतिज्ञाविरोधश्च । तस्यापि स्थित्यभ्युपगमे युगपत् घटद्वयोपलब्धिप्रसक्तिः, अस्थितौ च संप्रयोगज्ञानापत्तेः यौगपद्यम् ॥ २० ॥

195 प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ निरोधः—निरन्वयविनाशः, स स्थूलः सूक्ष्मश्च न संभवति, कपालादिभावरूपावस्थाप्राप्तेरेव विनाशशब्दाभिधेयत्वात्, सतो द्रव्यस्य अविच्छेदात् ॥ २१ ॥

196 उभयधा च दोषात् ॥ उत्पन्नस्य तुच्छतापत्तौ तुच्छादुत्पत्तौ चाभावादुत्पत्त्यसंभवाद्भावात्मककार्यापत्तिरूपदोषात्तुच्छत्वासिद्धिः ॥ २२ ॥

197 आकाशे चाविशेषात् ॥ आकाशे च न तुच्छत्वम्, अबाधितप्रतीत्यविशेषात् । प्रतीयते ह्याकाशः श्येनादिपतनदेशत्वेन ॥ २३ ॥

198 अनुस्मृतेश्च ॥ प्रत्यभिज्ञानाच्च न क्षणिकत्वसिद्धिः । तदेवेदमिति हि सामानाधिकरण्येनातीतवर्तमानदेशकालविशिष्टं वस्तु एकमिति प्रतीयते । अस्याश्च सामग्री पूर्वानुभवजनितसंस्कारवतः पुरुषस्येन्द्रियसंप्रयोगः ॥ २४ ॥

199 नासतोऽदृष्टत्वात् ॥ ज्ञानाकारवैचित्र्येण ज्ञाने स्वाकारं समर्प्य विनष्टमप्यर्थमनुमिनोतीति वादश्च न संभवति, असतो विनष्टस्य धर्मिणो धर्मसंक्रमणस्यादृष्टत्वात् । ( ज्ञाने नीला-

द्याकार उपलभ्यते; स विनष्टस्यासतोऽर्थस्याकारो भवितुं नार्हति; कुतः ? अदृष्टत्वात्। न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्टम्)॥ २५॥

200 उदासीनानामपि चैवं सिद्धिः॥ क्षणिकत्वाभ्युपगमे अनुष्ठातुरन्यत्वात् फलिनां निष्प्रयत्नानामपि सर्वार्थसिद्धिस्स्यात्॥ २६॥

201 नाभाव उपलब्धेः॥ ज्ञानव्यतिरिक्तार्थाभाववादश्च न संभवति; घटमहं जानामीति कर्तृज्ञानकर्मतयाऽर्थस्य उपलब्धेः न तदभावश्शक्यते वक्तुम्। पुरुषस्यार्थविशेषव्यवहारानुगुण्यापादकत्वमेव ज्ञानस्याकारः॥ २७॥

202 वैधर्म्याच्च न स्वप्नादिवत्॥ करणदोषजबाधकप्रत्ययराहित्यरूपवैषम्याच्च न स्वप्नादिवज्जागरितज्ञानस्य मिथ्यात्वम्॥ २८॥

203 न भावोऽनुपलब्धेः॥ अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति, अनुपलब्धेः। स्वप्नज्ञानस्याप्यर्थवत्त्वोपपादयिष्यते॥ २९॥

204 सर्वथाऽनुपपत्तेश्च॥ सर्वशून्यवादश्च न संभवति। सदिति प्रतिज्ञायामसदिति प्रतिज्ञायाश्च तुच्छता न संभवति, अनुपपत्तेः; सदसद्बुद्धितुच्छत्वादीनां वस्तुगतान्योन्यविरुद्धभावरूपावस्थाविशेषविषयत्वात्॥ ३०॥

205 नैकस्मिन्नसम्भवात्॥ अर्हतो मतं न युक्तिमत्, एकस्मिन् वस्तुनि युगपत् सत्त्वासत्त्वनित्यत्वानित्यत्वभेदाभेदानामसंभवात्। पर्यायरूपाश्च द्रव्यस्यास्तित्वादिशब्दबुद्धिविषयाः परस्परविरुद्धपिण्डत्वघटत्वकपालत्वाद्यवस्थाः युगपन्न संभवन्ति; तथा घटत्वशरावत्वावस्थाश्च पृथिव्यादेः प्रदेशभेदेन। तथा च द्रव्यस्यानित्यत्वमुत्पत्तिविनाशयोगित्वम्, तद्विपरीतं नित्यत्वं नैकस्मिन् समवैति॥ ३१॥

206 एवं चात्माकार्त्स्न्यम्॥ आत्मनश्शरीरपरिमाणत्वे बृहतश्शरीरादल्पीयसि प्रविशतः अकार्त्स्न्यं–विकलत्वं प्रसज्यते॥ ३२॥

207 न च पर्यायादप्यविरोधो विकारादिभ्यः॥ तथा सङ्कोचविकासावस्थायोगादपि नाविरोधः, घटादिवद्विकारादियोगप्रसक्तेः॥ ३३॥

208 अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः॥ अन्त्यस्य–मोक्षावस्थापरिमाणस्य एकरूपावस्थितेः तस्य स्वाभाविकत्वेनात्मतत्परिमाणयोरुभयोर्नित्यत्वेन पूर्वत्रापि न विशेषः। विविधदेहपरिमाणत्वे वैकल्यं स्यादेव॥ ३४॥

209 पत्युरसामञ्जस्यात्॥ नेति वर्तते, पशुपतेर्मतमनादरणीयम्, वेदविरुद्धनिमित्तोपादानभेदतद्विरुद्धाचारपरत्वेन असामञ्जस्यात्॥ ३५॥

210 अधिष्ठानानुपपत्तेश्च॥ अनुमेयेश्वराभ्युपगमेन हि केवलाधिष्ठातृत्वमुच्यते। तथा

सति अशरीरस्य प्रधानाधिष्ठानानुपपत्तेः; सशरीरत्वे तु शरीरोत्पत्त्यनिरूपणात्, सावयवस्य तस्य नित्यत्वे महीमहीधरादीनामपि नित्यत्वाविरोधाच्च ॥ ३६ ॥

211 करणवच्चेन्न भोगादिभ्यः ॥ करणकलेबराद्यधिष्ठानवदशरीरस्यैवाधिष्ठानमिति चेत्; न, पुण्यपापनिमित्तत्वात्तस्य तत्फलभोगादिप्रसक्तेः ॥ ३७ ॥

212 अन्तवत्त्वमसर्वज्ञता वा ॥ तथा सति क्षेत्रज्ञवत् अन्तवत्त्वमसर्वज्ञता च ॥ ३८ ॥

213 उत्पत्त्यसंभवात् ॥ साङ्ख्यादिवत्पञ्चरात्रमपि जीवोत्पत्त्यभिधानात्, श्रुतिविरुद्धत्वेन तदसंभवादप्रमाणम् ॥ ३९ ॥

214 न च कर्तुः करणम् ॥ कर्तुः—जीवात्, करणम्—मनश्च, श्रुतावुत्पद्यते इति नोच्यते, *एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चेत्यादिश्रुतेः ॥ ४० ॥

215 विज्ञानादिभावे वा तदप्रतिषेधः ॥ *वासुदेवात्सङ्कर्षणो नाम जीव इत्यादौ सङ्कर्षणादीनां विज्ञानादिरूपवासुदेवत्वे सति तदभिधायिनः प्रामाण्यानिषेधः। परब्रह्मवासुदेवस्य श्रुतावपि *अजायमानो बहुधा विजायते इति चावतारश्श्रूयते । जीवादिशब्दाः तत्तच्छरीरकसङ्कर्षणादीनां वाचकाः ॥ ४१ ॥

216 विप्रतिषेधाच्च ॥ तस्मिन्नपि तन्त्रे *व्याप्तिरूपेण संबन्धः तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥ इति जीवोत्पत्तिप्रतिषेधाच्चाविरोधश्श्रुतः ॥ ४२ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे द्वितीयस्याध्यायस्य द्वितीयः पादः

---

## द्वितीयाध्याये तृतीयः पादः

217 न वियदश्रुतेः ॥ वियन्नोत्पद्यते, अश्रुतेः—श्रुतिः श्रवणम्। निरवयवस्य, आत्मन इवोत्पत्तिश्रवणासंभवात् ॥ १ ॥

218 अस्ति तु ॥ श्रवणं संभवत्येव—*आकाशस्संभूतः इत्येव हि श्रुतिः अतीन्द्रियार्थविषया वियदुत्पत्तिं प्रतिपादयति । आत्मनोऽपि *न जायते* इति प्रतिषेधादनुत्पत्तिः ॥ २ ॥

219 गौण्यसंभवाच्छब्दाच्च ॥ *तत्तेजोऽसृजतेति तेजःप्राथम्यवचनात्, *आकाशस्संभूत इति श्रुतिः गौणी, *वायुश्चान्तरिक्षं चैतदमृतमिति शब्दाच्च ॥ ३ ॥

220 स्याच्चैकस्य ब्रह्मशब्दवत् ॥ एकस्य संभूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वम् अनुषङ्गे संभवत्येव, श्रवणावृत्तिवत्। यथैकस्य ब्रह्मशब्दस्य *तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायते इति प्रकृतौ गौणत्वम्, *तपसा चीयते ब्रह्मेति मुख्यत्वमावृत्तौ ॥ ४ ॥ परिहरति—

221 प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ *येनाश्रुतं श्रुतमित्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अहानिः वियदादेः ब्रह्मकार्यत्वेन तदव्यतिरेकादेव ॥ ५ ॥

222 शब्देभ्यः ॥ *आकाशस्संभूत इत्यादिशब्देभ्यः अवगतां वियदुत्पत्तिं *तत्तेजोऽसृजतेत्यत्राकाशशब्दावचनावगतं तेजःप्राथम्यं न निवारयितुं क्षमम् ॥ ६ ॥

223 यावद्विकारं तु विभागो लोकवत् ॥ *ऐतदात्म्यमिदं सर्वमित्यादिना आकाशादेरपि विकारत्वावगमात्, तेजःप्रभृतिविभागवचनं सर्वस्य प्रदर्शनार्थमिति निश्चीयते। यथा च लोके दशेमे देवदत्तपुत्रा इत्युक्त्वा तेषु केषाञ्चिदुत्पत्तिवचनम् ॥ ७ ॥

224 एतेन मातरिश्वा व्याख्यातः ॥ *तेजोऽत इत्यादि वक्तुं वायोः पृथगुपादानम् ॥ ८ ॥

225 असंभवस्तु सतोऽनुपपत्तेः ॥ असंभवस्तु परस्य ब्रह्मण एव, इतरस्य *सदेवेत्यवधारणाद्यनुपपत्तेरुत्पत्तिरेव ॥ ९ ॥

आकाशादिव्यवहितकार्याणामपि साक्षाद्ब्रह्मण उत्पत्तिं वक्तुं पूर्वपक्षमाह—

226 तेजोऽतस्तथा ह्याह ॥ तेजः वायोरेवोत्पद्यते, न साक्षाद्ब्रह्मणः; *वायोरग्निरिति आह ॥ १० ॥

227 आपः ॥ *अग्नेरापः इति श्रुतेः आपः अग्नेः ॥ ११ ॥

228 पृथिवी ॥ पृथिवी अद्भ्यः, *अद्भ्यः पृथिवी इति श्रुतेः ॥ १२ ॥

229 अधिकाररूपशब्दान्तरेभ्यः ॥ *ता अन्नमसृजन्तेत्यन्नशब्देन पृथिव्येवाभिधीयते, महाभूतसृष्ट्यधिकारात्; *यत्कृष्णं तदन्नस्येति पृथिवीरूपविधानात्, *अद्भ्यः पृथिवीति पृथिवीशब्दाभिधानाच्च ॥ १३ ॥

राद्धान्तमाह—

230 तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ *तत्तेज ऐक्षत *ता आप ऐक्षन्तेति तदभिध्यानरूपात्, *तदैक्षत बहु स्यामित्येतत्सरूपात् परमात्मकारणत्वलिङ्गात् स एव परमात्मा तेजःप्रभृतिशरीरकस्तत्तच्छब्दैस्साक्षात्कारणत्वेनाभिधीयते ॥ १४ ॥

231 विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ पारम्पर्यक्रमात् विपर्ययेण *एतस्माज्जायते प्राणः खं वायुर्ज्योतिरापः* इत्यादिवाक्यात् यस्साक्षाद्ब्रह्मणस्सृष्टेरुपक्रमः, सोऽपि अतः—तेजःप्रभृतिशरीरकब्रह्मण एव सृष्टेः उपपद्यते ॥ १५ ॥

232 अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ भूतप्राणयोरन्तराले इन्द्रियग्राममनसी क्रमेण उत्पद्येते इत्येतत्परमिदं वाक्यं, *खं वायुर्ज्योतिरापः इत्यादिश्रुतिप्रत्यभिज्ञानरूपात् लिङ्गात्; अत इदमपि पारंपर्यक्रमपरमिति चेन्न, *एतस्माज्जायत इत्यस्य प्राणादि-

पृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात्। अतस्तेजःप्रभृतीनामपि साक्षात्परमात्मैव कारणम् ॥ १६ ॥

*तत्तेज ऐक्षतेति तेजःप्रभृतिशब्दाः लोके तत्तद्वस्तुवाचिनः ब्रह्मणि भाक्ता इत्यत्राह—

233 चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ चराचरवस्तुसंबन्धितत्तद्वाचकशब्दः ब्रह्मणि अभाक्तः—मुख्य एव,*अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तु सर्वस्य वस्तुनो नामरूपभाक्त्वस्यात्मतया ब्रह्मानुप्रवेशभावभावित्वात्। लौकिकास्त्वेवमजानन्तो वाच्यैकदेशे प्रयुञ्जते ॥ १७ ॥

234 नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ नात्मा उत्पद्यते, *न जायते म्रियते इति श्रुतेः; *नित्यो नित्यानामित्यादिश्रुतिभ्यो नित्यत्वावगतेश्च ॥ १८ ॥

235 ज्ञोऽत एव ॥ *अथ यो वेदेदं जिघ्राणीति स आत्मा *मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके* इत्यादिश्रुतेः बद्धो मुक्तश्चात्मा ज्ञातैव। *मनोऽस्य दैवं चक्षुः* इति श्रुतेः स्वधर्मभूतं ज्ञानं मनः ॥ १९ ॥

236 उत्क्रान्तिगत्यागतीनाम् ॥ उत्क्रान्तिगत्यागतीनां श्रुतेरणुर्जीवः ॥ २० ॥

237 स्वात्मना चोत्तरयोः ॥ गत्यागत्योस्स्वात्मनैव संपाद्यत्वादप्यणुत्वं निश्चितम् ॥ २१ ॥

238 नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ *स वा एष महानज आत्मेति श्रुतेः नाणुरिति चेत्, नः *यस्यानुवित्तः प्रतिबुद्ध आत्मेति परमात्माधिकारात् ॥ २२ ॥

239 स्वशब्दोन्मानाभ्यांश्च ॥ एषोऽणुरात्मेत्यणुशब्दात्, *आराग्रमात्रो ह्यवर इत्युद्धृत्य उन्मानशब्दाच्चाणुः ॥ २३ ॥

अणोरपि सकलदेहव्यापिवेदनानुभवे अन्यमतेन हेतुमाह—

240 अविरोधश्चन्दनवत् ॥ यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापि सुखं जनयति तद्वदविरोधः ॥ २४ ॥

241 अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ देहदेशविशेषस्थितेश्चन्दनस्येति चेन्न, आत्मनोऽपि तदभ्युपगमात्; *हृदि ह्ययमात्मा *योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति श्रुतेः ॥ २५ ॥

स्वमतेनाह—

242 गुणाद्वाऽऽलोकवत् ॥ आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यानुभवति, यथा मणिप्रभृतयस्स्वकीयेनालोकेन सकलदेशं व्याप्य प्रकाशयन्ति; *प्रज्ञामात्रास्वर्पिताः इति श्रुतेः ॥ २६ ॥

न ज्ञानात्मनोः व्यतिरेक इत्यत्राह—

243 व्यतिरेको गन्धवत्तथा च दर्शयति ॥ *गन्धवती पृथिवीतिवत् अहं जानामीति गुणवत्त्वेनोपलब्धेः व्यतिरेकोऽस्ति। दर्शयति च श्रुतिर्व्यतिरेकं *जानात्येवायं पुरुष इति ॥ २७ ॥

244 पृथगुपदेशात् ॥ आत्मनः पृथक्त्वेन चोपदिश्यते *न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते इति ॥ २८ ॥

*योऽयं विज्ञानमय इति ज्ञानमात्रव्यपदेशः कथमित्यत्राह—

245 तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः, यथा प्राज्ञस्य विपश्चितोऽपि *सत्यं ज्ञानमिति ॥ २९ ॥

246 यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ आत्मस्वरूपानुबन्धित्वात् ज्ञानस्य तेन व्यपदेशे न दोषः । स्वरूपानुबन्धिधर्मत्वेन गोत्वादीनां खण्डादेः गौरित्यादिव्यपदेशो हि दृश्यते ॥ ३० ॥

सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्यत्राह—

247 पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरादावभिव्यक्तिसंभवात्, स्वरूपानुबन्ध्येव ज्ञानम्; यथा पुंस्त्वासाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः । जीवात्मनो ज्ञातृत्वमणुत्वश्चोक्तम् ॥ ३१ ॥

248 नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ अन्यथा—ज्ञप्तिमात्रसर्वगतात्मवादे तावन्नित्यवत्सर्वदोपलब्धिस्स्यात्; सङ्कोचकाभावाद्विद्यमानाया अनुपलब्धेरपि सैव हेतुरिति साऽपि नित्यवत्स्यात्; ज्ञाने विद्यमानेऽपि हेत्वन्तरेण निवारणासंभवात् । आगन्तुकज्ञानसर्वगतात्मवादेऽपि स एव दोषः; सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूनां मनस्संयोगादीनां सर्वसाधारणत्वात् । अदृष्टहेतूनामपि सर्वसाधारणत्वात् तेनापि न नियमः । अथोपलब्ध्यनुपलब्ध्योर्विरोधादुपलब्धेर्वैते हेतवः स्युः; अनुपलब्धेर्वा । तथा सत्यन्यतरनियमस्स्यात् ॥ ३२ ॥

249 कर्ता शास्त्रार्थवत्त्वात् ॥ ज्ञाता सन्नयमात्मा कर्मसु कर्ता च । आत्मनः अकर्तृत्वे, कुर्यात्, न कुर्यादिति शास्त्रानर्थक्यं स्यात् ॥ ३३ ॥

250 उपादानाद्विहारोपदेशाच्च ॥ *प्राणान् गृहीत्वा स्वे शरीरे यथा कामं परिवर्तते इत्युपादानविहारोपदेशाच्च कर्ता ॥ ३४ ॥

251 व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ *विज्ञानं यज्ञं तनुते इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्च कर्ता । विज्ञानशब्दो बुद्धेः, नात्मन इति चेत्, न । तदा, विज्ञानेनेति निर्देशविपर्ययः स्यात्, बुद्धेः करणत्वात् ॥ ३५ ॥

252 उपलब्धिवदनियमः ॥ प्रकृतेरेव कर्तृत्वे तस्यास्सर्वसाधाणत्वेन पूर्वोपलब्ध्यनियमवत् फलानियमस्स्यात् ॥ ३६ ॥

253 शक्तिविपर्ययात् ॥ प्रकृतेरेव कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यादित्यर्थः॥ ३७ ॥

254 समाध्यभावाच्च ॥ प्रकृतेरेव कर्तृत्वे प्रकृतेरन्योऽस्मीति समाध्यभावप्रसङ्गाच्च ॥ ३८ ॥

255 यथा च तक्षोभयथा ॥ आत्मनः कर्तृत्वे इच्छायां करोति, अन्यथा न करोतीति, व्यवस्था च सिध्यति । यथा तक्षा स्वकार्येषु । बुद्धेरिच्छाभावात् न व्यवस्था; चेतनधर्मत्वादिच्छायाः ॥ ॥ ३९ ॥

256 परात्तु तच्छ्रुतेः ॥ *य आत्मानमन्तरो यमयतीत्यादिश्रुतेरात्मनः कर्तृत्वं परायत्तम्; *सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्चेत्यादिस्मृतेश्च ॥ ४० ॥

257 कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ जीवः स्वेच्छया प्रवृत्तिनिवृत्ति-हेतुभूतं प्रयत्नं करोति, जीवने तु कृतं प्रयत्नं प्रथमप्रवृत्तिहेतुमपेक्ष्य तदनुमतिदानेन परः प्रवर्तयतीति तद्विधिनिषेधावैयर्थ्यनिग्रहानुग्रहेभ्योऽवगम्यते । यथा गुरुतरदार्वादिभरणमबलः प्रबलसहकृतः कुर्वन्नपि स्वीयप्रयत्नेन विधिनिषेधयोग्यो भवति । एवमेव जीवः परमपुरुषानुमतिसहकृतः प्रवर्त-मानोऽपि विधिनिषेधयोग्य इति न कश्चिद्विरोधः ॥ ४१ ॥

258 अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ जीवात्मा परमपुरुषांशः, *पृथगात्मानं प्रेरितारं च मत्वा *स कारणं करणाधिपाधिपः *इत्यादिनाना-व्यपदेशात्; अन्यथा *तत्त्वमसि *अयमात्मा ब्रह्मेति ऐक्योपदेशाच्च । *ब्रह्मदाशाः इत्यादिसर्व-जीवानामप्यैक्यमधीयत एके; अंशत्वाभ्युपगमे ह्युभयं मुख्यं भवति ॥ ४२ ॥

259 मन्त्रवर्णात् ॥ *पादोऽस्य विश्वा भूतानीति मन्त्रवर्णाच्च ॥ ४३ ॥

260 अपि स्मर्यते ॥ *ममैवांशो जीवलोके जीवभूतस्सनातन इत्यादिना ॥ ४४ ॥

261 प्रकाशादिवत्तु नैवं परः ॥ ब्रह्मांशत्वेऽपि जीवस्य, जीवो यत्स्वरूपो यत्स्वभावश्च, नैवं परः—निरवद्यः सर्वज्ञः सत्यसङ्कल्प एव सर्वदा । कथम्? प्रकाशादिवत्– प्रकाशविशिष्टानां मणिप्रभृतीनां प्रकाशः विशिष्टैकदेशत्वेन यथांशः । आदिशब्दाद्विशेषणतैकस्वभावजातिगुणशरीराणि गृह्यन्ते । विशेषणानां विशिष्टैकदेशतया तदंशत्वेऽपि विशेषणविशेष्ययोः स्वरूपस्वभावभेदो न विरुद्धः । *य आत्मनि तिष्ठन्यस्यात्मा शरीरमिति हि श्रुतिः ॥ ४५ ॥

262 स्मरन्ति च ॥ चिदचिदात्मकजगतो ब्रह्मांशत्वं प्रकाशादिवदिति पराशरादयः स्मरन्ति *एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत् ॥ *तत्सर्वं वै हरेस्तनुः *तानि सर्वाणि तद्वपुः* इत्यादिषु ॥ ४६ ॥

263 अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ब्रह्मांशत्वेऽपि सर्वजीवानां कस्यचिद्वे-दाध्ययनादौ अनुज्ञा, कस्यचित् परिहार इत्येतौ ब्राह्मणादिदेहविशेषसंबन्धादुपपद्येते; यथाऽग्न्यादेः श्रोत्रियागारश्मशानादिसंबन्धात् ॥ ४७ ॥

264 असन्ततेश्चाव्यतिकरः ॥ प्रतिदेहं भिन्नत्वात्, अणुत्वेन तत्रतत्र परिच्छिन्नत्वाच्च,

ज्ञानसुखाद्यव्यतिकरः । अज्ञानोपाधिभ्यां ब्रह्मैव संबध्यत इति पक्षद्वयेऽपि न तत्तद्व्यवस्था ॥ ४८ ॥

265 आभासा एव च ॥ पक्षद्वयेऽपि हेतवश्च आभासाः ॥ ४९ ॥

266 अदृष्टानियमात् ॥ सत्यमिथ्योपाधिकृतत्वेऽपि आत्मनां ब्रह्मण एव अज्ञानमुपाधिश्चेति तत्तत्कृतेनादृष्टादिनाऽपि न नियमः ॥ ५० ॥

267 अभिसन्ध्यादिष्वपि चैवम् ॥ अदृष्टहेतुभूताभिसन्ध्यादिष्वपि चैवमेव ॥ ५१ ॥

268 प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ उपाधिसंबन्धिब्रह्मप्रदेशभेदात् व्यवस्थेति चेन्न; उपाधिषु गच्छत्सु सर्वप्रदेशानां तदन्तर्भावात् ॥ ५२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे द्वितीयस्याध्यायस्य तृतीयः पादः ।

---

## द्वितीयाध्याये चतुर्थः पादः

269 तथा प्राणाः ॥ यथा जीवोत्पत्तिः नित्यत्वश्रुतेर्नोपपद्यते; तथेन्द्रियाण्यपि, *असद्वा इदमग्र आसीत्...ऋषयो वा व तेऽग्रे सदासीत् ..प्राणा वा व ऋषयः* इति प्रलयकाले प्राणानां स्थित्युपदेशात् ॥ १ ॥ नैवम्—

270 गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥ तस्य परमात्मन एव सृष्टेः प्रागवस्थानश्रुतेः ऋषिशब्दः प्राणशब्दश्च परमात्मन्येव । बहुत्वासंभवात् बहुवचनश्रुतिर्गौणी ॥ २ ॥

271 तत्पूर्वकत्वाद्वाचः ॥ परमात्मनः सृष्टिपूर्वकत्वात् इतरेषां नामयोगस्य तदानीं प्राणशब्दो नेन्द्रियविषयः ॥ ३ ॥

272 सप्त गतेर्विशेषितत्वाच्च ॥ सप्तैवेन्द्रियाणि *सप्त प्राणाः *यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह, बुद्धिश्च* इति सप्तानामेव सहगतेस्तेषामेव योगे विशेषितत्वाच्च ॥ ४ ॥

273 हस्तादयस्तु स्थितेऽतो नैवम् ॥ हस्तादयोऽपीन्द्रियाणि, जीवे देहान्तरवस्थिते उपकारकत्वाविशेषात् । अतो न सप्तैव, अपि त्वेकादश, *दशेमे पुरुषे प्राणा आत्मैकादशः *इन्द्रियाणि दशैकञ्चेति श्रुतिस्मृतिभ्याम् । बुद्ध्यादयः मनोवृत्तिभेदाः । सप्तानां गतिश्रवणं विशेषणञ्च तेषां प्राधान्यात् ॥ ५ ॥

274 अणवश्च ॥ तानि चाणूनि, *प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति गतिश्रवणात् ॥ ६ ॥

275 श्रेष्ठश्च ॥ श्रेष्ठः पञ्चवृत्तिप्राणोऽप्युत्पद्यते । उत्तरचिन्तार्थोऽयमनुवादः ॥ ७ ॥

276 न वायुक्रिये पृथगुपदेशात् ॥ पञ्चवृत्तिप्राणः न वायुमात्रम्, तत्क्रिया वा, *एतस्माज्जायते प्राणः खं वायुरिति पृथगुपदेशात् ॥ ८ ॥

277 चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ वायोः पृथग्भूतोऽयं नाग्न्यादिवत् भूतान्तरम्; वायुरेव देहधारणयोग्याकारमापन्नः चक्षुरादिवत् जीवोपकरणम्, चक्षुरादिभिस्सहोपदेशतत्तुल्योपकारतन्मुख्यत्वेभ्यः ॥ ९ ॥

278 अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ करणम्—क्रिया; न जीवोपकाररूपक्रियारहितत्वे दोषः; यतः श्रुतिरेव देहेन्द्रियाद्यशैथिल्यकरणं दर्शयति, प्राणोत्क्रमणे देहेन्द्रियादिशैथिल्याभिधानात् ॥ १० ॥

279 पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ प्राण एक एव स्ववृत्तिभिः पञ्चभिः प्राणापानादिनामभाग्भवति; कामादिभिर्यथैकमेव मनः *कामस्सङ्कल्प इत्यारभ्य *एतत्सर्वं मन एवेति ॥११॥

280 अणुश्च ॥ *प्राणोऽनूत्क्रामतीत्युत्क्रान्तेः अणुः ॥ १२ ॥

281 ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ जीवेन सह अग्न्यादेः इन्द्रियाद्यधिष्ठानं परमात्मसङ्कल्पादेव भवति; *योऽग्नौ तिष्ठन्...योऽग्निमन्तरो यमयति, इत्यादिशब्दात् ॥ १३ ॥

282 तस्य च नित्यत्वात् ॥ सर्वस्य तन्नियाम्यत्वनियमात् ॥ १४ ॥

283 त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ श्रेष्ठादन्यत्र ये प्राणाः, त इन्द्रियाणि, तेष्वेवेन्द्रियव्यपदेशात्, *इन्द्रियाणि दशैकश्चेत्यादि ॥ १५ ॥

284 भेदश्रुतेर्वैलक्षण्याच्च ॥ *एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चेति भेदेनोत्पत्तिश्रुतेः, इन्द्रियवृत्त्युपरमेऽपि प्राणवृत्त्यनुपरमवैलक्षण्याच्च ॥ १६ ॥

285 संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ देवादिनामरूपव्यष्टिसृष्टिः चतुर्मुखशरीरकात् परमात्मन एव; न केवलचतुर्मुखात् । *नामरूपे व्याकरवाणि तासां त्रिवृतंत्रिवृतमेकैकां करवाणीति त्रिवृत्करणं कुर्वतो नामरूपव्याकरणोपदेशात् । त्रिवृत्करणं तु केवलचतुर्मुखस्य न संभवति; त्रिवृत्कृतैस्तेजोबन्नैरण्डमुत्पाद्य पश्चाच्चतुर्मुखसृष्टिः, *तदण्डमभवद्धैमं...तस्मिञ्जज्ञे स्वयं ब्रह्मा* इत्यादिस्मृतेः ॥ १७ ॥

286 मांसादि भौमं यथाशब्दमितरयोश्च ॥ *अन्नमशितं त्रेधा विधीयते* इत्यत्र प्रागुक्तत्रिवृत्करणादर्थान्तरभूतः अण्डान्तर्वर्तिपुरुषभुक्तान्नादीनां परिणामप्रकार उच्यते । अन्यथा मांसमनसोः पुरीषादणीयस्त्वेनाप्यत्वतैजसत्वप्रसक्तिः । तथा सति *अन्नमशितं त्रेधेति भूमेरेव त्रिधात्वोपक्रमः, *अन्नमयं हि सोम्य मन इति मनसो भौमत्वञ्च विरुध्यते । तथेतरयोरप्तेजसोः त्रैविध्यं विरुध्यते । तदिदमाह—मांसादि भौमं यथाशब्दमितरयोश्चेति । पुरीषवन्मांसमनसी अपि भौमे इतीहोच्यते । तथा मूत्रवल्लोहितप्राणावप्याप्यौ; तथा अस्थिवन्मज्जावाचौ तैजस्यौ ॥ १८ ॥

पूर्वमेव त्रिवृत्कृतं चेत्, त्र्यात्मकं वस्तु कथमन्नमापस्तेज इत्युच्यत इत्यत्राह—

287 वैशेष्यात्तु तद्वादस्तद्वादः ॥ अन्नादिभूयस्त्वेन वैशेष्यादन्नादिवादः ॥ १९ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्चाध्यायः ॥

---

श्रीमते रामानुजाय नमः

## श्रीवेदान्तसारे तृतीयाध्याये प्रथमः पादः

288 तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ जीवो देहाद्देहान्तरप्राप्तौ भूतसूक्ष्मैस्संपरिष्वक्तो यातीति पञ्चाग्निविद्यायां प्रश्नप्रतिवचनाभ्यामवगम्यते । *वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रश्नः, *इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रतिवचनम् । उत्तरैस्सूत्रैरर्थोऽभिव्यज्यते । स चायमर्थः—जीवो ब्राह्मणादिदेहस्थः स्वाहादानादिकर्मकृत् तत्तत्फलभोगायास्माद्देहादुत्थाय गच्छन्, एतद्देहस्थाभिः भूतान्तरसंसृष्टाभिः सूक्ष्माकाराभिरद्भिः संपरिष्वक्तोऽग्नित्वेन निरूपितं द्युलोकं प्राप्य, ताभिरेवामृतमयदेहाकारपरिणताभिरद्भिः परिष्वक्तो देवानां शेषत्वमुपगम्य, तैस्सह तत्र भोगमनुभूय, कर्मावसाने भुक्तशिष्टब्राह्मणादियोनिःप्रापककर्मणा सह पुनरपीमं कर्मलोकमागम्य, कर्म कर्तुं ताभिः परिष्वक्तोऽग्नित्वरूपितं पर्जन्यं प्राप्य, वर्षधाराभिस्सहाग्नित्वनिरूपितां पृथिवीमुपगम्य, व्रीह्यादिसस्येन संयुज्य, अन्नाकारपरिणतेन तेन सहाग्नित्वनिरूपितं पुरुषं प्राप्य, तत्र शुक्लाकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वनिरूपितां योषितं प्राप्य तत्र गर्भाकारपरिणताभिस्ताभिरद्भिः पुरुषशब्दाभिलपनीयाभिः परिष्वक्तः कर्मानुरूपं ब्राह्मणादिरूपेण जायते—इति ॥ १ ॥

289 त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वात् भूतान्तरसंसृष्टा एवापो भूयस्त्वेनाप्छब्देनोच्यन्ते ॥ २ ॥

290 प्राणगतेश्च ॥ *प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति जीवेन सहेन्द्रियगतेस्तदाश्रयत्वेन देहगमनं प्रतीयते ॥ ३ ॥

291 अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ *अग्निं वागप्येतीतीन्द्रियाणामग्न्यादिगतिश्रुतेर्न जीवेन गमनमिति चेन्न, वागाद्यभिमानिदेवतासु भाक्तत्वात् वागादिशब्दानाम्, *ओषधीर्लोमानीत्यनपियद्भिर्लोमादिभिस्सहपाठात् ॥ ४ ॥

292 प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ प्रथमे—द्युलोकेऽपामश्रवणात् नापो

गच्छन्ति; *एतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति श्रद्धैव श्रुतेति चेन्न, आप एव श्रद्धाशब्देनोच्यन्त इत्यप्सु पृष्टासु तदुत्तरत्वोपपत्तेर्गम्यते। *श्रद्धा वा आपः इति श्रूयते॥ ५॥

293 अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥ अत्र प्रश्नप्रतिवचनयोराप एव प्रतीयन्ते; न तत्परिष्वक्तो जीव इति चेन्न, उत्तरत्र *अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते इत्यादाविष्टादिकारिणां गमनप्रकारवचनात्। द्युलोकाग्निसंबन्ध्यप्छब्दवाच्यस्य *तस्या आहुतेस्सोमो राजा संभवतीति सोमभूतस्यैव *सोमो राजेति प्रत्यभिज्ञानादद्भिः परिष्वक्तस्तच्छरीरक एव आप इत्युच्यत इत्यवगम्यते॥ ६॥

294 भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति॥ *एष सोमो राजा...तं देवा भक्षयन्तीति सोमापन्नस्य देवैर्भक्ष्यमाणत्ववचनं, भाक्तम्—अनात्मवित्त्वेन देवोपकरणत्वाभिप्रायम्। तथा हि दर्शयति श्रुतिः *यथा पशुरेवं स देवानामिति पशुवद्देवोपकरणत्वं दर्शयति। तथाऽऽत्मविदामनात्मविदांच परमपुरुषोपकरणत्वं देवोपकरणत्वं च स्मर्यते *देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपीति॥ ७॥

295 कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च॥ कृतस्य कर्मणोऽन्ते निवर्तमानो भुक्तशिष्टकर्मवान्निवर्तत इति श्रुतिस्मृतिभ्यामवगम्यते। *रमणीयचरणाः...रमणीयां योनिमापद्यन्ते इति श्रुतिः। *ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपमित्यादिका स्मृतिः। आरोहप्रकारेण मार्गैकदेशः, प्रकारान्तरेण चैकदेशः॥ ८॥

296 चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः॥ *रमणीयचरणा इति चरणशब्दान्नानुशयः, चरणशब्दस्य स्मार्ताचारविषयत्वादिति चेन्न, अनुशयोपलक्षणार्था आचारश्रुतिः, तस्यैव सुखसाधनत्वात्॥ ९॥

297 आनर्थक्यमिति चेन्न तदपेक्षत्वात्॥ स्मार्ताचारस्यानुपयोगात् आनर्थक्यमिति चेन्न, तदपेक्षत्वात् सर्वस्य पुण्यकर्मणः, *सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु इति वचनादिति कार्ष्णाजिनिमतम्॥ १०॥

298 सुकृतदुष्कृते एवेति तु बादरिः॥ *रमणीयचरणाः...कपूयचरणा इति चरणशब्देन सुकृतदुष्कृते एवाभिधीयेते; पुण्यं कर्माचरतीति प्रसिद्धेरिति बादरिः। एतदेव स्वीकृतम्; स्मार्ताचारापेक्षं सर्वं पुण्यं कर्मेति च स्वीकृतम्॥ ११॥

299 अनिष्टादिकारिणामपि च श्रुतम्॥ इष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्ति, *ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते *इत्यविशेषात्॥ १२॥

300 संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥ इष्टापूर्ताद्यकुर्वतां यमसदने तत्फलमनुभूयारोहादिः, *वैवस्वतं सङ्गमनमित्यादौ तद्गतिदर्शनात्॥ १३॥

301 स्मरन्ति च ॥ *सर्वे चैते वशं यान्ति यमस्येति ॥ १४ ॥

302 अपि सप्त ॥ सप्त रौरवादीनपि स्मरन्ति ॥ १५ ॥

303 तत्रापि तद्व्यापारादविरोधः ॥ तत्रापि यमव्यापारादेव यमवश्यताया अविरोधः ॥ १६ ॥

304 विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ विद्याकर्मणोः फलं ब्रह्मगमनं चद्रगमनंच । कथम्? *तद्य इत्थं विदुः तेऽर्चिषमभिसंभवन्ति *इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्तीति प्रकृतत्वात् ब्रह्मचन्द्रगमनयोः । अतः पापिनां न तद्गतिप्रसङ्गः ॥ १७ ॥

305 न तृतीये तथोपलब्धेः ॥ न च पापिनां द्युलोकगमनाय चन्द्रलोकगमनापेक्षा, तेषां द्युलोकगमनाभावोपलब्धेः—*अथैतयोः पथोर्न कतरेण चेत्यारभ्य, *एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते* इति । तृतीयस्थानमिति पापकर्माण उच्यन्ते ॥ १८ ॥

306 स्मर्यतेऽपि च लोके ॥ लोके च द्रौपद्यादीनां पुण्यकर्मणामपि पञ्चमाहुत्यनपेक्षदेहारम्भस्स्मर्यते ॥ १९ ॥

307 दर्शनाच्च ॥ तथा श्रुतावपि दृश्यते *भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जमिति । स्वेदजोद्भिज्जयोस्तदनपेक्षत्वम् ॥ २० ॥

308 तृतीयशब्दावरोधस्संशोकजस्य ॥ स्वेदजस्य उद्भिज्जशब्देन सङ्ग्रह इत्यर्थः ॥ २१ ॥

309 तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ *यथेतमाकाशमित्यादिना आकाशसादृश्यापत्तिः प्रत्यवरोहत उपदिश्यते, तत्रतत्र सुखदुःखानुभवाभावोपपत्तेः । तदनुभवार्थं हि तत्तच्छरीरता ॥ २२ ॥

310 नातिचिरेण विशेषात् ॥ व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति, *अतो वै खलु दुर्निष्प्रपतरमिति व्रीह्यादावेव विशेषवचनात् ॥ २३ ॥

311 अन्याधिष्ठिते पूर्ववदभिलापात् ॥ *त इह व्रीहियवाः* इत्यादौ चान्यजीवाधिष्ठिते व्रीहियवादौ संश्लेषमात्रम्, अवरोहतः आकाशादिष्विव जननहेतुविरहिताभिलापात् । *जायन्त इति वचनमौपचारिकम् । यत्र ब्राह्मणादिजन्मास्ति, तत्र *रमणीयचरणाः इति हि हेतुरभिलप्यते ॥ २४ ॥

312 अशुद्धमिति चेन्न शब्दात् ॥ अवरोहतः पूर्वानुष्ठितयागादिषु अग्नीषोमीयादिहिंसागर्भत्वेन अशुद्धं कर्मास्तीति चेन्न, *हिरण्यशरीर ऊर्ध्वस्स्वर्गं लोकमेति *न वा उ वे तन्म्रियसे न रिष्यसि *इति पशुसंज्ञपनस्याहिंसात्वशब्दात् ॥ २५ ॥

313 रेतस्सिग्योगोऽथ ॥ *योयो ह्यन्नमत्ति योयो रेतस्सिञ्चतीति अन्नेन संसृष्टस्य रेतस्सिचा योगमात्रमनन्तरमुच्यते; अतः पूर्वमपि व्रीह्यादियोगमात्रम् ॥ २६ ॥

314 योनेश्शरीरम् ॥ योनिप्राप्तेः पश्चादेवावरोहता शरीरं प्राप्यते ॥ २७ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य प्रथमः पादः

## तृतीयाध्याये द्वितीयः पादः

315 सन्ध्ये सृष्टिराह हि ॥ सन्ध्ये—स्वप्ने *अथ रथान् रथयोगानित्यादिना अभिहिता सृष्टिर्जीवकृता; *पुष्करिण्यस्स्रवन्त्यस्सृजते स हि कर्तेति स्वप्नदर्शं जीवमेव कर्तारमाह श्रुतिः ॥१॥

316 निर्मातारं चैके पुत्रादयश्च ॥ *य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः* इति, एनं जीवं स्वाप्नार्थनिर्मातारम् एके शाखिनोऽधीयते । अत्र कामशब्दनिर्दिष्टाः काम्यमानतया पुत्रादयः; पूर्वत्र *सर्वान् कामाञ् छन्दतः, इत्युक्त्वा *शतायुषः पुत्रपौत्रानिति विवृतत्वात् ॥ २ ॥

317 मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ स्वप्ने या रथादिसृष्टि; तदिदमीश्वरकृतं मायामात्रं—स्वप्नदशैवानुभाव्यं तत्कालमात्रावसानमित्याश्चर्यतया मायेत्युक्तम् । जीवस्य सत्यसङ्कल्पत्वादिकं स्वाभाविकं स्वरूपं संसारदशायां कार्त्स्न्येनानभिव्यक्तमिति न तस्य सङ्कल्पमात्रात् सृष्टिरुपपद्यते । *स हि कर्ता *पुरुषो निर्मिमाणः इति न जीवविषयम्, *तस्मिँल्लोकाश्श्रितास्सर्वे इति वचनात् ॥ ३ ॥

स्वाभाविकस्य अनभिव्यक्तिहेतुमाह—

318 पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानादेव तिरोहितम्; तदपचारात्तदनुवृत्तेर्हि अस्य बन्धविपर्ययौ, *अथ तस्य भयं भवति *अथ सोऽभयङ्गतो भवतीति श्रुतेः ॥ ४ ॥

319 देहयोगाद्वा सोऽपि ॥ सोऽपि तिरोभावः, देवमनुष्यादिदेहाकाराचिद्योगात् सृष्टिवेलायाम्, नामरूपविभागानर्हसूक्ष्माकाराचिद्योगात् प्रलये ॥ ५ ॥

320 सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ *अथ स्वप्ने पुरुषं कृष्णमित्यादिश्रुतेः शुभाशुभसूचकश्च हि स्वप्नः; स्वप्नविदश्चाचक्षते तत् । अतो न जीवस्स्रष्टा स्वाप्नार्थानाम् ॥ ६ ॥

321 तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ स्वप्नाभावः सुषुप्तिः, *आसु तदा नाडीषु सुप्तो भवति *सता सोम्य तदा संपन्नो भवतीति श्रुतेः नाडीषु परमात्मनि, *पुरीतति शेते इति श्रुतेः पुरीतति च; प्रासादखट्वापर्यङ्कवदविरोधः ॥ ७ ॥

322 अतः प्रबोधोऽस्मात् ॥ *सत आगम्य न विदुरिति ब्रह्मणः प्रबोधश्रुतिः अत एव ॥ ८ ॥

323 स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ सता संपन्नोऽपि सुप्त एव प्रबुद्ध उत्तिष्ठति, ज्ञानवैधुर्येण कृतस्य कर्मणस्तेनानुभाव्यत्वात्, पूर्वानुभूतप्रत्यभिज्ञानात्, *त इह व्याघ्रो वा इत्यादि *यद्यद्भवन्ति तथा भवन्तीति शब्दात्, मोक्षोपायविध्यानर्थक्याच्च ॥ ९ ॥

324 मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ मूर्च्छिते पुरुषे या अवस्था, सा मरणायार्धसंपत्तिरिति

हेतुभेदात्, आकारभेदात्, अपुनरुत्थाननियमाभावाच्च ज्ञायते ॥ १० ॥

325 न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ जागरादिषु चतसृष्ववस्थास्वन्तर्यामित्वेन स्थितेरपि परस्य ब्रह्मणो न कश्चन दोषः; यतस्सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोषसंबन्धत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिङ्गं परं ब्रह्म श्रुतम् *अपहतपाप्मा...सत्यसङ्कल्पः *निरवद्यम् *यस्सर्वज्ञस्सर्ववित् *समस्तकल्याणगुणात्मकोऽसौ *सकला न यत्र क्लेशादयः इत्यादिषु ॥ ११ ॥

326 भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ जीवस्य स्वतोऽपहतपाप्मनोऽपि शरीरसंबन्धित्वावस्थाभेदाद्यथा दोषसंबन्धः, तथा परस्यापि *यस्य पृथिवी शरीरमित्यादिशरीरसंबन्धित्वाद्दोष इति चेन्न, *यस्य पृथिवी शरीरमित्यादिषु प्रतिपर्यायं *स त आत्माऽन्तर्याम्यमृतः इति निर्दोषत्ववचनात् ॥ १२ ॥

327 अपि चैवमेके ॥ एकस्मिन् शरीरेऽवस्थितयोर्जीवपरयोर्यो विशेष उक्तः, एवमेके स्वशब्देनाधीयते—*द्वा सुपर्णा इत्यारभ्य, *पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीतीति ॥१३॥

328 अरूपवदेव हि तत्प्रधानत्वात् ॥ मनुष्यादिशरीरेषु शरीरित्वेऽपि रूपरहितवस्तुवदेव वर्तते तत्—ब्रह्म, जीवनामरूपयोरपि निर्वोढृत्वेन प्रधानत्वात् । तथा हि श्रुतिः, *नामरूपयोर्निर्वहिता ते यदन्तरा इति; नामरूपयोरन्तरा—अस्पृष्टो मध्ये वर्तते, अवश्य इत्यर्थः ॥ १४ ॥

329 प्रकाशवच्चावैयर्थ्यात् ॥ यथा *सत्यं ज्ञानमिति वाक्यावैयर्थ्यात् स्वप्रकाशतया ज्ञानस्वरूपं ब्रह्म; तथा *निरवद्यम् *यस्सर्वज्ञः *पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिपरश्शतवाक्यावैयर्थ्यात् निरवद्यं कल्याणगुणाकरश्चेत्युभयलिङ्गमेव ॥ १५ ॥

330 आह च तन्मात्रम् ॥ *सत्यं ज्ञानमिति ज्ञानस्वरूपतामात्रमाह, नान्यन्निवारयति; अविशेषात्, विरोधाभावाच्च ॥ १६ ॥

331 दर्शयति चाथो अपि स्मर्यते ॥ दर्शयति च निर्दोषत्वं कल्याणगुणाकरत्वञ्च वेदान्तगणः *निष्कलं निष्क्रियं शान्तम् *तमीश्वराणामित्यादिः । *यो मामजमनादिमित्यादिना स्मर्यते च तत् ॥ १७ ॥

332 अत एव चोपमा सूर्यकादिवत् ॥ यतः पृथिव्यादौ सर्वत्र स्थितस्यापि निर्दोषत्वं कल्याणगुणाकरत्वञ्च; अत एव शास्त्रेषु जलसूर्यकादिवदित्युपमा *आकाशमेकं हि यथा...जलाधारेष्विवांशुमान् इति ॥ १८ ॥ चोदयति—

333 अम्बुवदग्रहणात्तु न तथात्वम् ॥ अम्बुनि सूर्यो यथा गृह्यते, न तथा परमात्मा पृथिव्यादौ; अत्र परमार्थतस्स्थितः; अतो न निर्दोषत्वमिति ॥ १९ ॥ परिहरति—

334 वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ नेति वर्तते । नैवम्,

पृथिव्यादिष्वन्तर्भावात् परस्य तद्गतवृद्धिह्रासभाक्त्वं दृष्टान्तेन निवर्त्यते इत्युभयदृष्टान्तोपादानसामञ्जस्यादवगम्यते। *आकाशमेकं हि यथेति वस्तुतस्स्थितमाकाशं, वस्तुतोऽनवस्थितश्च सूर्यकमुभयमुपादत्ते; अनवस्थितस्य यथा न दोषस्पर्शः, तथा स्थितस्यापि हेत्वभावादिति ज्ञापयितुम्। विवक्षितधर्मसाम्यज्ञापनाय सिंह इवेति दृष्टान्तो दृश्यते। अथवा दर्शनाच्चेति, *अश्व इव रोमाणि विधूय पापमित्यादौ विवक्षितसाम्यान्वयो दार्ष्टान्तिके हि दृश्यते। अश्वो हि रोमाणि सहजानि स्वावयवभूतानि मूर्तद्रव्याणि स्वशरीरं कम्पयन् कानिचिन्मुञ्चति; आत्मा तु स्वेन कदाचिदनुष्ठितानि क्षणध्वंसितया विनष्टानि कर्माणि भगवदप्रीतिकराणीति भगवता स्वाप्रीतिकृतदुःखानि दातुं प्रवृत्तेन उपासनप्रीतिकृतानुग्रहान्निवर्तितानीति तत्सम्पर्काभावमनुसन्दधाति॥ २०॥

*अथात आदेशो नेति नेतीति सकलविशेषप्रतिषेधान्नोभयलिङ्गमित्यत आह—

335 प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ *द्वे वाव ब्रह्मणो रूपे इत्यारभ्य, कृत्स्नप्रपञ्चस्य ब्रह्मणो रूपत्वेनाप्रज्ञातस्य रूपत्वमुपदिश्य, पुनस्तस्यैव प्रतिषेधासंभवात् प्रकृतैतावन्मात्रं न भवति ब्रह्मेति ब्रह्मणः प्रकृतेयत्तां *नेतिनेतीति प्रतिषेधति। ततः पश्चात् पूर्वमनुक्तं गुणगणं ब्रवीति च *न ह्येतस्मादिति नेत्यन्यत्परमस्तीति। इति नेति निर्दिष्टाद्ब्रह्मणोऽन्यन्न ह्यस्तीत्युत्कृष्टम्; *अथ नामधेयं सत्यस्य सत्यमिति च। तन्निर्वचनम्—*प्राणा वै सत्यं तेषामेष सत्यमिति। प्राणाः—जीवात्मानः वियदादिवदुत्पत्त्यभावात्सत्यम्; तेभ्योऽप्येष सत्यं, ज्ञानसङ्कोचाद्यभावात्। अतः प्रकृतेयत्ताप्रतिषेधादुभयलिङ्गमेव॥ २१॥

प्रत्यक्षेण सन्मात्रं ब्रह्मैव गृह्यते, अन्यत्सर्वं भ्रान्तमिति *नेति नेतीति निषेधार्थ इत्यत आह—

336 तदव्यक्तमाह हि॥ ब्रह्मस्वरूपं न केनापि प्रमाणेन व्यज्यते; तथाऽऽह हि श्रुतिगणः, *न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् इत्यादिः। प्रत्यक्षादिना तु पटादेरेवास्तित्वं गृह्यते; न ब्रह्मणः॥ २२॥

337 अपि संराधने प्रत्यक्षानुमानाभ्याम्॥ अपि चात्यर्थप्रियानुध्यानरूपसम्यक्प्रीणने सति ब्रह्मस्वरूपं गृह्यत इति श्रुतिस्मृतिभ्यामवगम्यते। *नायमात्मा प्रवचनेन लभ्यः इति श्रुतिः। *नाहं वेदैरित्यादिस्मृतिः॥ २३॥

338 प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥ संराधनकर्मण्यभ्यासात् येषां ब्रह्मस्वरूपदर्शनं जातम्; तद्दर्शने ज्ञानानन्दादेरिव जगदैश्वर्यस्यावैशेष्यं प्रतीयते *अहं मनुरभवं सूर्यश्चेत्यादौ॥ २४॥

339 अतोऽनन्तेन तथा हि लिङ्गम्॥ अतः *द्वे वाव ब्रह्मणो रूपे इत्यादिनोपदिष्टेनानन्तेन कल्याणगुणेन योगो ब्रह्मणस्सिद्धः। तथा सत्युभयलिङ्गमेव ब्रह्म॥ २५॥

340 उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ *आत्मैवेदं सर्वम् *अस्मान्मायी सृजते इत्येकत्वनानात्वव्यपदेशात् अहेः कुण्डलभावादिवत् ब्रह्मस्वरूपस्यैव *द्वे वा व ब्रह्मणो रूपे इत्यादिनोक्तः पृथिव्यादिभावः ॥ २६ ॥

341 प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम्; एवमचिद्ब्रह्मणोश्चैकजातियोगेन ॥ २७ ॥

342 पूर्ववद्वा ॥ वाशब्दः पक्षद्वयव्यावृत्त्यर्थः; यथा पूर्वत्र जीवस्य प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वम्; एवमचिद्वस्तुनोऽपि । *आत्मैवेदं सर्वमिति चिदचिदोरेकेनैव शब्देन ऐक्याभिधानमित्यंशत्वमप्येकरूपमिति पूर्ववद्वेत्युक्तम् । इतरपक्षयोर्ब्रह्मणस्सदोषतादि दुर्वारमित्यर्थः । *यस्य पृथिवी शरीरम् *यस्यात्मा शरीरमिति चिदचिद्वस्तुनोश्शरीरतया तद्विशेषणस्वभावता सिद्धा ॥ २८ ॥

343 प्रतिषेधाच्च ॥ *नास्य जरयैतज्जीर्यतीत्यादिनाऽचिद्धर्मप्रतिषेधाच्चैवम् ॥ २९ ॥

344 परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ *जन्माद्यस्य यतः इत्यादिना *प्रतिषेधाच्चेत्येतदन्तेन यत्परमकारणं ब्रह्म प्रतिपादितम्; अतः परमपि किञ्चित्तत्त्वमस्तीति युक्त्याभासेनाशङ्क्यते । *अथ य आत्मा स सेतुः *एतं सेतुं तीर्त्वा *चतुष्पाद्ब्रह्म *अमृतस्यैष सेतुः* इत्यादिभिरस्य ब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्वप्रापकत्वव्यपदेशेभ्यः, *तेनेदं पूर्णं पुरुषेण सर्वम् *ततो यदुत्तरतरमित्येतस्मादर्थान्तरव्यपदेशाच्चान्यत्परमस्तीति ॥ ३० ॥

345 सामान्यात्तु ॥ तुशब्देनैतद्व्यावर्तयति । नैतद्युक्तम्; कुतः? *न ह्येतस्मादिति नेत्यन्यत्परमस्तीति मूर्तामूर्तप्रपञ्चप्रकारतया तद्विशिष्टात्, इति नेति निर्दिष्टात् ब्रह्मणोऽन्यत्परं नास्तीत्यादिनिषेधसहस्रात् । परस्मिन् ब्रह्मणि सेतुत्वव्यपदेशः प्रशासनात् सर्वलोकासङ्करकरत्वेन सेतुसामान्यात्तु । तथाह—*अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेति । *सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यारभ्य उक्तजगन्निमित्तोपादानभूतस्यैव ब्रह्मणः *एतमितः प्रेत्याभिसंभविताऽस्मीति परमप्राप्यत्ववचनात् । तरतिरपि प्राप्तिवचनः ॥ ३१ ॥

346 बुद्ध्यर्थः पादवत् ॥ *चतुष्पादित्युन्मानव्यपदेशोऽपि *वाक्पादः चक्षुः पाद इतिवदुपासनार्थः ॥ ३२ ॥

347 स्थानविशेषात्प्रकाशादिवत् ॥ अपरिमितस्यापि स्थानविशेषसंबन्धादवच्छिद्यानुसन्धानं युज्यते, प्रकाशाकाशादेरिव विततस्यापि वातायनघटादिना ॥ ३३ ॥

348 उपपत्तेश्च ॥ प्राप्यस्यैव परमात्मनः प्रापकत्वोपपत्तेः; यथाह—*यमेवैष वृणुते तेन लभ्य इति ॥ ३४ ॥

349 तथाऽन्यप्रतिषेधात् ॥ *यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति

कश्चित् इत्यस्मिन्वाक्ये पुरुषादन्यस्य ज्यायस्त्वप्रतिषेधादितोऽधिकं नास्ति। *ततो यदुत्तरतरमिति तु यतः पुरुषतत्त्वादन्यदुत्कृष्टं नास्ति; तत उत्तरतरं पुरुषतत्त्वमेवारूपमनामयम्; *य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति* इत्युपक्रमप्रतिज्ञातं सहेतुकमुपसंहृतम्। *तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था इत्युपक्रमे प्रतिज्ञातम्; अन्यथा उपक्रमविरोधश्च ॥ ३५ ॥

350 अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ *अणोरणीयान्महतो महीयान् *तेनेदं पूर्णं पुरुषेण सर्वम् *व्याप्य नारायणस्स्थितः *नित्यं विभुं सर्वगतं सुसूक्ष्ममित्यादिशब्दैरनेन ब्रह्मणा स्वव्यतिरिक्ततत्त्वस्य व्याप्तत्वमवगतम्; तत्तु तस्मात्परं वारयति ॥ ३६ ॥

351 फलमत उपपत्तेः ॥ अतः—परस्माद्ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपफलं सिद्ध्यति; कर्म क्षणध्वंसि न कालान्तरभाविफलायालमिति सर्वज्ञात् परमकारुणिकात् फलसिद्धिरुपपद्यते ॥ ३७ ॥

352 श्रुतत्वाच्च ॥ श्रुतमेव हि *अन्नादो वसुदानः *एष ह्येवानन्दयाति* इति अस्यैव फलदायित्वम् ॥ ३८ ॥

353 धर्मं जैमिनिरत एव ॥ धर्ममेव अतः—उपपत्तेः, श्रुतत्वाच्च, फलदायिनं जैमिनिर्मेने। उपपत्तिस्तु कृष्यादेर्मर्दनादेश्च कर्मणस्साक्षात्परम्परया वा फलसिद्धिदर्शनम्। श्रुतत्वं च कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वद्वारेण तत्तत्फलसाधनमिति निश्चयः ॥ ३९ ॥

354 पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ पूर्वोक्तं परमपुरुषस्यैव फलदायित्वं भगवान् बादरायणो मन्यते, *वायव्यं श्वेतमालभेतेत्यादिषु *स एवैनं भूतिं गमयतीति भगवदात्मकतया वाय्वादेः कर्मविधिष्वेव फलहेतुत्वव्यपदेशात्। वाक्यशेषस्थं विध्यपेक्षितं हि *प्रतितिष्ठन्ति ह वा* इत्यादिषु स्वीक्रियते। *यो वायौ तिष्ठन्निति हि श्रूयते ॥ ४० ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य द्वितीयः पादः।

---

## तृतीयाध्याये तृतीयः पादः

355 सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव, *विद्यात् *उपासीतेति कर्मविधिष्विव चोदनाफलसंयोगरूपाख्यानामविशेषात् ॥ १ ॥

356 भेदान्नेति चेदेकस्यामपि ॥ अविशेषपुनश्श्रुतिर्भेदापादिकेति न विद्यैक्यमिति चेत्, विद्यैक्येऽपि शाखान्तरे प्रतिपत्तृभेदान्न भेदः ॥ २ ॥

357 स्वाध्यायस्य तथात्वेहि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ आथर्वणवेदे

*तेषामेवैतां ब्रह्मविद्यां वदेतेति शिरोव्रतवतां नियमः । शिरोव्रतस्य स्वाध्यायाङ्गत्वेन *नैतदचीर्णव्रतोऽधीयीतेति तस्याध्ययनसंबन्धावगमात्; समाचाराख्यग्रन्थे *इदमपि वेदव्रतेन व्याख्यातमिति वेदव्रतत्वावगमाच्च । *ब्रह्मविद्यामित्यत्र ब्रह्मशब्दो वेदविषयः । यथा सवहोमास्तेषामेव, तथा शिरोव्रतमिति तन्न विद्याभेदलिङ्गम् ॥ ३ ॥

358 दर्शयति च ॥ श्रुतिरेव विद्यैक्यं दर्शयति; छान्दोग्ये दहरविद्योक्तं गुणाष्टकं तैत्तिरीयके केवलं *तस्मिन्यदन्तः इति वदति ॥ ४ ॥

359 उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ एवं सर्वत्र विद्यैक्ये अन्यत्रोक्तानामन्यत्रोपसंहारः तद्विद्योपकाररूपार्थैक्यात्; यथैकविधिशेषतया विहिताङ्गानामिति ॥ ५ ॥

पूर्वकाण्डोक्तं स्वीकृत्यात्र वक्तव्यमाह—

360 अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ वाजिनां छन्दोगानाञ्चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं हि विहितम् । तत्र विद्यैक्यं पूर्वपक्षं हृदि निधाय राद्धान्तच्छायया चोदयति । वाजिनां प्राणदृष्ट्योपासनमुद्गीथकर्तृविषयमितरत्र कर्मविषयमिति शब्दादेव प्रतीयते; *अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य उदगायत्* इत्यादिनोद्गीथकर्तृविषयं वाजिनाम्; छन्दोगानांतु *य एवायंमुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे* इत्युद्गीथविषयमिति चेत्, तदिदमाह—अन्यथात्वं शब्दादिति चेदिति । न, उपक्रमाविशेषात् *हन्तासुरान्यज्ञ उद्गीथेनात्ययामेत्येकत्र । अन्यत्रापि *तद्ध देवा उद्गीथमाजहुरनेनैनानभिहनिष्याम इति ॥ ६ ॥

361 न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ नैवं, प्रकरणं ह्युभयत्र भिद्यते; *ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथावयवभूतप्रणवविषयं छन्दोगानाम् । *हन्तासुरान्यज्ञ उद्गीथेनात्ययामेतितु वाजिनां कृत्स्नोद्गीथविषयमिति रूपभेदाद्विद्याभेदः । यथा एकस्यामपि शाखायामुद्गीथोपासने हिरण्मयपुरुषदृष्टेः परोवरीयस्त्वादिविशिष्टदृष्टिर्भिद्यते ॥ ७ ॥

362 संज्ञातश्चेत्तदुक्तमस्तितु तदपि ॥ उद्गीथविद्येति संज्ञैक्याद्विद्यैक्यमुक्तञ्चेत्; विधेयभेदेऽपि संज्ञैक्यमस्त्येव; यथा नैयमिकाग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे चेत्येवमादिषु ॥ ८ ॥

363 व्याप्तेश्च समञ्जसम् ॥ प्रथमप्रपाठके उपक्रमवदुत्तरास्वपि प्रणवस्योपास्यत्वव्याप्तेः, मध्येच उद्गीथमुपासाञ्चक्रिरे* इति प्रणवविषयत्वमेव समञ्जसम् ॥ ९ ॥

364 सर्वाभेदादन्यत्रेमे ॥ *यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद...प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चेति वाजिनां छन्दोगानां कौषीतकिनाञ्च प्राणविद्यायां वागादिकरणग्रामस्थितेः तत्कार्यस्य च प्राणहेतुकत्वेन तिसृष्वप्येकरूपेण प्राणज्यैष्ठ्यमुपपादितम् । वागादिगतवसिष्ठत्वादिसंबन्धित्वमपि प्राणस्योभयत्रोक्तम् । कौषीतकिनां तु तन्नोक्तम् । तथाऽपि सर्वत्र ज्यैष्ठ्योपपादनप्रकारस्य सर्वस्याभेदाद्विद्यैक्यमिति कौषीतकिप्राणविद्यायामपि वसिष्ठत्वादय उपसंहार्याः ॥ १० ॥

365 आनन्दादयः प्रधानस्य ॥ अभेदादिति वर्तते । ब्रह्मस्वरूपनिरूपणान्तर्गतामलत्वज्ञानानन्दादयो गुणाः सर्वासु परविद्यासूपसंहार्याः, गुणिनो ब्रह्मणस्सर्वत्राभेदात् । ११ ॥

366 प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ *तस्य प्रियमेव शिरः* इति प्रियशिरस्त्वादीनामप्राप्तिः ब्रह्मगुणत्वाभावात्तेषाम् । शिरःपक्षादिभेदेब्रह्मगुणे सति ब्रह्मण उपचयापचयप्रसक्तिः ॥ १२ ॥

367 इतरे त्वर्थसामान्यात् ॥ आनन्दादयः स्वरूपनिरूपणान्तर्गततया ब्रह्मसमाना इत्युपसंहार्या एव ॥ १३ ॥

368 आध्यानाय प्रयोजनाभावात् ॥ प्रियशिरस्त्वाद्युपदेशः ब्रह्मणोऽनुचिन्तनार्थः, प्रयोजनान्तराभावात् ॥ १४ ॥

369 आत्मशब्दाच्च ॥ *अन्योन्तर आत्माऽऽनन्दमयः इत्यात्मशब्दाच्च शिरःपक्षादयो न ब्रह्मगुणाः ॥ १५ ॥

370 आत्मगृहीतिरितरवदुत्तरात् ॥ परमात्मन एवात्मशब्देन ग्रहणमिति *सोऽकामयत बहुस्यां प्रजायेयेत्युत्तरात् बहुभवनसङ्कल्पाभिधायिनो वाक्यादवगम्यते; *आत्मा वा इदमेक एवाग्र आसीदित्यात्मशब्दादिवत् ॥ १६ ॥

371 अन्वयादिति चेत्स्यादवधारणात् ॥ पूर्वत्र प्राणमयादिष्वात्मशब्दान्वयात्कथमुत्तरान्निर्णय इति चेत्, *आत्मन आकाशस्संभूतः इत्यवगतस्यात्मन एव प्राणमयादिष्ववधारणात् स्यादेव परमात्मैवेति निर्णयः ॥ १७ ॥

372 कार्याख्यानादपूर्वम् ॥ *यो ह वै ज्येष्ठञ्च वेद* इति प्राणविद्यां विधाय, अपां प्राणवासस्त्वमुक्त्वा, *तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते* इत्याचमनस्य सदाचारप्राप्तत्वादाचमनमनूद्य आचमनीयानामपां प्राणवासस्त्वानुसंधानमप्राप्तं विधीयत इति युक्तम्, अप्राप्तस्यैव विधेयतया ख्यापनात् । अत्रानुवादसरूपो विधिः कल्प्यत इत्यर्थः ॥ १८ ॥

373 समान एवं चाभेदात् ॥ अग्निरहस्ये, बृहदारण्यके चाम्नाता शाण्डिल्यविद्या । एकत्र *स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानमिति । इतरत्र *मनोमयोऽयं पुरुषो भास्सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति* इति । उभयत्र मनोमयत्वादिके समानेऽपि वशित्वादेस्सत्यसङ्कल्पत्वविततिरूपेणाभेदादैक्यम् ॥ १९ ॥

374 संबन्धादेवमन्यत्रापि ॥ *य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् इत्युपक्रम्य, सत्यस्य ब्रह्मणः आदित्यमण्डले अक्षिणि चोपास्यत्वमुक्त्वा, *तस्योपनिषदहरित्यधिदैवतम्

*तस्योपनिषदहमित्यध्यात्मम्* इति द्वेनामन्याम्नायेते; उभयत्रैकस्यैवोपास्यस्य संबन्धाद्विद्यैक्यमित्युभयत्रोभे नामनी ॥ २० ॥

375 नवा विशेषात् ॥ नैतत्। आदित्याक्षिस्थानसंबन्धभेदादुपास्यस्य विद्याभेद इति तत्र नियते नामनी ।' २१ ॥

376 दर्शयति च ॥ दर्शयति च श्रुतिर्विद्याभेदं *तस्यैतस्य तदेव रूपं यदमुष्य रूपम् इति रूपातिदेशं ब्रुवती ॥ २२ ॥

377 संभृतिद्युव्याप्त्यपि चातः ॥ *ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान* इत्यादि ज्येष्ठानां वीर्याणां ब्रह्मणि संभृतिः द्युव्याप्तिश्च ब्रह्मण इत्येतदनारभ्याधीतमपि न सर्वोपासनशेषभूतम्। अतो द्युव्याप्तिसामर्थ्यादल्पस्थानव्यतिरिक्तेषूपासनेषु प्राप्नोति। संभृत्याद्यपि द्युव्याप्तिसहपठितं तत्रैव ॥ २३ ॥

378 पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ छान्दोग्ये तैत्तिरीयके चाम्नाता पुरुषविद्या भिन्ना, यजमानपत्न्यादीनां यज्ञावयवानामितरेषां सवनत्रयादीनाञ्चैकत्राम्नातानामन्यत्रानाम्नानात्, फलभेदाच्च; तैत्तिरीयके आत्मादीनां यजमानत्वकल्पनं सायंप्रातर्मध्यंदिनानां सवनत्वकल्पनं ब्रह्ममहिम प्राप्तिफलम्। अत्र फलस्याश्रवणात् पूर्वप्रस्तुतफलं ब्रह्मविद्याङ्गम्। छान्दोग्ये चाशिशिषादीनां दीक्षात्वकल्पनं त्रेधाविभक्तपुरुषायुषस्य च सवनत्रयकल्पनं शतं जीवतीति च फलम् ॥ २४ ॥

379 वेधाद्यर्थभेदात् ॥ उपनिषदारम्भेष्वधीत *शुक्रं प्रविध्य हृदयं प्रविध्येत्यादिमन्त्रवत्, महाव्रतादिमन्त्रवच्च, *शन्नोमित्रः *सह नाववतु इति मंत्रावपि मन्त्रसामर्थ्येन प्रयोजनभेदावगमात् अध्ययनशेषभूताविति न विद्याङ्गभूतौ ॥ २५ ॥

380 हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम् ॥ विदुषो ब्रह्मप्राप्नुवतः पुण्यपापयोर्विमोचनमेकस्यां शाखायां विदुषस्तच्चिन्तनार्थमधीतम्। विमुक्तयोः प्रवेशस्थानमेकस्यां शाखायां पुण्यप्रवेशस्थानं सुहृदः, दुष्कृतस्य शत्रव इति। एकस्यां शाखायां विमोचनं प्रवेशस्थानञ्चेत्युभयमाम्नातम्। सर्वे तच्चिन्तनार्थम्। हानाविति प्रदर्शनार्थम्। हानावुपायने चेत्यर्थः। हानिः—विमोचनम्, उपायनं—प्रवेशनम्। केवलहानावाम्नातायां केवले चोपायने आम्नाते इतरेतरसमुच्चयो न्याय्यः, न विकल्पः; उपायनशब्दस्य हानिवाक्यशेषत्वात्। तच्छेषत्वञ्च त्यक्तयोः प्रवेशस्थानवाचित्वेन तदपेक्षत्वात्। यथा *वानस्पत्याः कुशाः इत्येतद्वाक्यशेषभूतं* औदुम्बर्यः कुशा इति प्रदेशान्तरस्थम्; यथा च देवासुराणां छन्दोभिरित्येतद्वाक्यशेषभूतं *देवच्छन्दांसि पूर्वमिति प्रदेशान्तरस्थम्; यथा च *हिरण्येन षोडशिनस्स्तोत्रमुपाकरोतीत्येतद्वाक्यशेषभूतं *समयाविषिते सूर्ये षोडशिनस्स्तोत्रमिति; यथा च *ऋत्विज उपगायन्तीत्येतच्छेषभूतं *नाध्वर्युरुपगायेदिति। एवमुपायनवाक्यस्य हानिवाक्यशेषतया संभवन्त्यां गतौ न विकल्पो न्याय्यः। तदुक्तम्—अपि तु

वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य* इत्यादिना ॥ २६ ॥

381 साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॥ सुकृतदुष्कृतयोर्हानिः *अश्व इव रोमाणि विधूय...धूत्वा शरीरमिति देहवियोगकाले श्रुता। शाखान्तरे *स आगच्छति विरजां नदीं तत्सुकृतदुष्कृते धूनुते* इत्यध्वन्यपि श्रुताऽपि साम्पराये—चरमदेहवियोगकाल एव चिन्तनीया; देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण तरितव्यभोगाभावात्। तथा ह्यन्ये शाखिनः *तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इति देहवियोगसमनन्तरं ब्रह्मप्राप्तिमधीयते ॥ २७ ॥

382 छन्दत उभयाविरोधात् ॥ देहवियोगकाले पुण्यपापविमोचनश्रुतेः देहवियोगादूर्ध्वं ब्रह्मप्राप्तिश्रुतेश्चेत्युभयश्रुत्यविरोधाद्धेतोः *सुकृतदुष्कृते धूनुते* इत्ययं श्रुतिखण्डः छन्दतो नेतव्यः—*एतं देवयानं पन्थानमापद्यत इति वाक्यखण्डात् प्रागनुगमयितव्य इत्यर्थः॥२८॥ चोदयति—

383 गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ देवयानगतिश्रुतेरर्थवत्वमुभयत्र चिन्तायामेव। अन्यथा देहवियोगकाल एव चिन्तायां तस्मिन्नेव सर्वकर्मक्षयाद्देहाभावेन गतिर्नोपपद्यत इति हि गतिश्रुतिविरोधः ॥ २९ ॥ परिहरति—

384 उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिरुपपन्नः; ब्रह्मोपासीनानामकर्मलभ्यार्थोपलब्धेः *स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति* इत्यादौ; यथा लोके राजानमुपासीनानामितरपुरुषासाधारणसर्वार्थसिद्धिः ॥ ३० ॥

385 यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ वसिष्ठादीनां ज्ञानिनामपि देहपातादूर्ध्वं फलान्तरानुभवः प्रारब्धाधिकारहेतुकर्मविनाशाभावात्। यावदधिकारसमाप्ति तद्धेतुकर्मफलानुभवाय तेषां तत्रैव स्थितिः, नार्चिरादिप्राप्तिः। ज्ञानिनामपि प्रारब्धकर्म अनुभवेनैव नश्यतीति वक्ष्यते ॥ ३१ ॥

386 अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ येषूपकोसलादिषूपासनेष्वर्चिरादिगतिराम्नाता तन्निष्ठानामेव तया प्राप्तिरिति तच्चिन्तनमपि तेषामेवेति नियमाभावः; अपि तु सर्वोपासननिष्ठानाम्। तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः। श्रुतिस्तावत् पञ्चाग्निविद्यायां *ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति* इत्यविशेषेण श्रुता। स्मृतिरपि *अग्निर्ज्योतिरहश्शुक्ल इत्यादिका ॥ ३२ ॥

387 अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ *एतद्वै तदक्षरम् *अथ परा यया तदक्षरम्* इत्यारभ्य *अस्थूलमनण्वह्रस्वमदीर्घमलोहितं यत्तदद्रेश्यमग्राह्यम्* इत्याद्यस्थूलत्वाद्रेश्यत्वादिविषयाणामक्षरब्रह्मसंबन्धिनीनां धियां सर्वासु परविद्यासु संग्रहः; गुणिनो ब्रह्मणस्सर्वत्रैकत्वात्, एतैर्गुणैर्विना सकलेतरव्यावृत्तब्रह्मानुसन्धानानुपपत्तेश्च। हेयसंबन्धानर्हानन्दादयोऽपि प्रत्यगात्मनो ब्रह्मव्यावर्तकाः। प्रधानानुवर्तित्वं हि गुणस्वभावः। यथा जामदग्न्यचतूरात्र-

पुरोडाश्युपसद्गुणभूतमन्त्रस्य प्रधानभूतोपसदनुवर्तित्वेनोपांशुगुणकत्वम् । तदुक्तम् *गुणमुख्यव्यतिक्रमे* इत्यादिना ॥ ३३ ॥

नैतावता सर्वत्र सर्वोपसंहारव्याप्तिरित्याह—

388 इयदामननात् ॥ आमननम्—आभिमुख्येन मननम् । इयदेव गुणजातं सर्वत्रोपसंहार्यम्, येन गुणजातेन सकलेतरव्यावृत्तब्रह्ममननम् ॥ ३४ ॥

389 अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ *य आत्मेत्युषस्तिप्रश्नः भूतग्रामवत्प्रत्यगात्मविषयः; अन्यथा *यः प्राणेन प्राणिति स त आत्मेति प्रतिवचनस्य कहोलविषयादशनायाद्यतीतत्वादेः भेदानुपपत्तिरिति चेत्, न । *य आत्मा सर्वान्तर इत्युभयत्र प्रश्नैकरूप्यात् परमात्मैवोभयत्र प्रतिवचनगतः। प्राणनादिहेतुत्वमशनायाद्यतीतत्वं च परमात्मन्येवोपपद्येते । प्राणनादिहेतुत्वं हि परमात्मन एव; *को ह्येवान्यात्कः प्राण्यादित्यादिश्रुतेः । सद्विद्योपदेशवत् प्रश्नप्रतिवचनावृत्तिरेकविषया ॥ ३५ ॥

प्रष्टृभेदोऽपि न भेदक इत्याह—

390 व्यतिहारो विशिंपन्ति हीतरवत् ॥ अर्थैक्ये निश्चिते सति प्रष्ट्रोर्बुद्धिव्यतिहारः कार्यः । उषस्तिना अशनायाद्यतीतत्वधीः कार्या; कहोलेनापि प्राणनादिहेतुत्वधीः कार्या । उभयत्र प्रकरणगतवाक्यानि हि परमात्मानमेव विशिंषन्ति; यथा इतरत्र सद्विद्यायामपि ॥ ३६ ॥

प्रश्नाद्यावृत्तौ कथमैक्यमित्यत्राह—

391 सैव हि सत्यादयः ॥ *सेयं देवतैक्षतेति प्रस्तुता देवतैव सर्वत्र प्रश्नगता; प्रतिवचनेषु च *तत्सत्यं स आत्मा* इत्यादय इत्यैक्यम् ॥ ३७ ॥

392 कामादीतरत्र तत्र चायतनादिभ्यः ॥ *दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमित्युक्त्वा, *एष आत्माऽपहतपाप्मेत्यारभ्य *सत्यकामस्सत्यसंकल्प इति छान्दोग्ये, वाजिनां च *य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः* इत्युभयत्र हृदयायतनत्वसत्यसंकल्पत्वतद्विशेषरूपवशित्वादिभिर्दहरविद्याप्रत्यभिज्ञानात् सत्यसंकल्पत्वसहचारिणोऽपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यन्ताः उभयत्रोपसंहार्याः ॥ ३८ ॥

393 आदरादलोपः ॥ *नेह नानास्ति किंचन, *स एष नेतिनेत्यात्मा* इति निषेधो न वशित्वादिगुणविषयः; *सर्वस्य वशी सर्वस्येशान इति तेषामज्ञातानामादरेण विधानात् । अतो न लोपः । सर्वस्य ब्रह्मकार्यतयैक्यात् *नेह नानास्तीत्यब्रह्मात्मकनानात्वं प्रतिषिध्यते । *स एष नेति नेत्यात्मेत्यादि च प्राकृतविशेषविषयम् ॥ ३९ ॥

394 उपस्थितेऽतस्तद्वचनात् ॥ उपस्थिते—ब्रह्मोपसंपन्ने, अतः— उपसंपत्तेरेव हेतोः,

*जक्षत्क्रीडन्रममाण इत्यादिना छन्दतो ज्ञात्यादिप्राप्त्यभिधानात् साक्षान्मोक्षफलं तत् न सांसारिकफलमिति परविद्यैवैषा सगुणा ॥ ४० ॥

395 तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ उद्गीथाद्युपासनस्य क्रतुषु गोदोहनादिवदुपादानानियमः *तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदेत्युद्गीथोपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात् । *यदेव विद्यया करोति...तदेव वीर्यवत्तरमिति वर्तमाननिर्देशेऽपि क्रतुवीर्यवत्तरत्वसाधनतयोपासनविधिः कल्प्यते । वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबन्धेनाविलम्बितफलत्वम् । अतः क्रतुफलात्पृथक्फलमुद्गीथोपासनमित्यनियमः ॥ ४१ ॥

396 प्रदानवदेव तदुक्तम् ॥ दहरविद्यायामपहतपाप्मत्वादिगुणविशिष्टोपासने तत्तद्गुणविशिष्टस्वरूपभेदात् प्रतिगुणं गुण्यावृत्तिः; *इन्द्राय राज्ञे* इत्यादिषु विशिष्टस्वरूपभेदात्प्रदानावृत्तिवत् । तदुक्तम् *नाना वा देवता पृथक्त्वादिति ॥ ४२ ॥

397 लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ *सहस्रशीर्षं देवमित्यत्र नारायणशब्देन प्रकृतदहरविद्योपास्यमात्रं न विशेष्यते, अपि तु सर्वपरविद्यासूपास्यम्; तच्चिह्नभूतवाक्यभूयस्त्वादेव । अक्षरशिवशम्भुपरब्रह्मादिशब्दैस्सर्वोपास्याननूद्य नारायणत्वं हि विधीयते । प्रकरणाद्धि वाक्यं बलीयः । तदपि *श्रुतिलिङ्गेत्यादिनोक्तम् ॥ ४३ ॥

398 पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ *मनश्चितो वाक्चितः प्राणचितः इत्यादिसांपादिकाग्नीनाम् *असद्वा इदमग्र आसीत् इत्यादिना पूर्वप्रकृतेष्टकचिताग्निशेषिभूतक्रियामयक्रत्वनुप्रवेशस्स्यात् । एषामग्नित्वेनेष्टकचिताग्निना विकल्पः द्वादशाहाङ्गभूतमानसग्रहवत् । एषां मानसानामपि क्रियामयक्रत्वङ्गत्वं न विरुद्धम् ॥ ४४ ॥

399 अतिदेशाच्च ॥ तेषामेकैक एव तावान्यावानसौ पूर्वः* इतीष्टकचिताग्निकार्यातिदेशाच्च तदङ्गत्वम् ॥ ४५ ॥

400 विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ विद्यैव एते, विद्यामयक्रत्वङ्गभूता इत्यर्थः । सांपादिकाग्नित्वेनैषां विद्यामयत्वे सिद्धेऽपि *ते हैते विद्याचित एवेति निर्धारणं हि विद्यामयक्रत्वन्वयेन विद्यामयत्वख्यापनाय । दृश्यते चात्र विद्यामयः क्रतुः *मनसषु ग्रहा अगृह्यन्तेत्यादौ ॥ ४६ ॥

401 श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ *ते हैते विद्याचित एव विद्यया हैवैते एवं विदश्चिता भवन्ति* इति श्रुत्या वाक्येन चावगतविद्यामयक्रत्वन्वयस्य दुर्बलप्रकरणेन न बाधः ॥ ४७ ॥

402 अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ *मनसैषु ग्रहा अगृह्यन्तेत्यादिक्रत्वनुबन्धैः *ते हैते विद्याचित एवेति श्रुत्यादिभिश्चात्र विद्यामयक्रतुविधिः कल्प्यत इति दहरविद्यादीनां क्रियामयत्वात् पृथक्त्ववत्, अस्यापि विद्यामयक्रतोस्सानुबन्धैः पृथक्त्वमवगम्यते। दृष्टश्चानुवादसरूपेऽपि विधिः *यदेव विद्यया करोतीत्यादौ । तदुक्तम् *वचनानि त्वपूर्वत्वादिति ॥४८॥

403 न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ तेषामेकैक एव तावान्यावानसौ* इतीष्टकचिताग्निफलसामान्येनातिदेशः इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलम् तदेवैषां विद्यामयक्रत्वनुप्रवेशेन फलमिति; न पुनरिष्टकचितातिदेशत्वमप्येषामिति, केनापि सामान्येनातिदेशोपलब्धेः। यथा *स एष एव मृत्युः य एष एतस्मिन्मण्डले पुरुषः* इति सर्वहरत्वमात्रेण; न हि तत्र मण्डलपुरुषस्य मृत्युदेशत्वम् ॥ ४९ ॥

404 परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ परेण च ब्राह्मणेनास्य मनश्चितादिवाचिनश्शब्दस्य विद्यामयप्रतिपादित्वमवगम्यते *अयं वा व लोक एषोऽग्निचितस्तस्याप एवेत्यादिना पृथक्फला विद्यैव विधीयते। क्रियाप्रकरणे अग्निरहस्ये मनश्चितादीनामनुबन्धस्तु संपादनीयानामग्न्यङ्गानां भूयस्त्वात् ॥ ५० ॥

405 एक आत्मनश्शरीरे भावात् ॥ शरीरे वर्तमानत्वादुपासितुः तस्य च कर्तृत्वभोक्तृत्वादिस्वरूपत्वात्, तथाऽवस्थितस्यात्मतया परविद्यासु परमात्मोपास्य इत्येके मन्यन्ते ॥ ५१ ॥

406 व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ नैवम्, यत् कर्तृत्वादिस्वरूपस्यैवोपासितुरात्मतया परमात्माऽनुसन्धेय इति। अपि तूपासितुस्सांसारिकस्वभावान्मुक्तस्वरूपस्य यो व्यतिरेकः अपहतपाप्मत्वादिगुणकस्वरूपः, सोनुसन्धेयः, तथाऽनुसन्धानभावभावित्वात् तत्स्वरूपोपलब्धेः। यथावस्थितस्वरूपब्रह्मानुसन्धानभाविनी हि ब्रह्मोपलब्धिः। तद्वत्, *यथाक्रतुरस्मिन् लोके पुरुषः* इत्यादिश्रुतेः ॥ ५२ ॥

407 अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ उद्गीथादिक्रत्वङ्गाश्रया उपासनाः यासु शाखासु श्रूयन्ते, तास्वेव कार्या इति न ह्यस्ति नियामकम्। अतः उद्गीथानुबन्धित्वात् प्रतिशाखं कार्याः ॥ ५३ ॥

408 मन्त्रादिवद्वाऽविरोधः ॥ वाशब्दोऽवधारणे। यथा क्रत्वङ्गभूतानां मन्त्राणामेकैकशाखागतानामपि सर्वशाखागतक्रत्वन्वयेनाविरोधः ॥ ५४ ॥

409 भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ वैश्वानरविद्यायां त्रैलोक्यशरीरतयोपास्यस्य स्वर्लोकादिपृथिव्यन्तानां वैश्वानरात्मनो मूर्धादिपादपर्यन्तावयवत्वमभिधाय,* यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु* इत्यादिना ब्रह्मानुभवः फलं चाभिहितम्। तत्र मूर्धाद्यवयवोपासनात् भूम्नः—समस्तोपासनस्य ज्यायस्त्वं—प्रामाणिकत्वमस्ति; तत्रैव ब्रह्मानुभवफलाभिधानात्। तत्रावयवोपासनं तत्रतत्र फलकीर्तनं च क्रताविव द्रष्टव्यम्। यथा *वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते* इत्युक्त्वा *यदष्टाकपालो भवतीत्यादौ। तथा समस्तोपासनस्यैव श्रैष्ठ्यं दर्शयति श्रुतिः *दिवमेव भगवो राजन्नित्यवयवोपासनेऽभिहिते *मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यादिनाऽनर्थं ब्रुवती ॥ ५५ ॥

410 नाना शब्दादिभेदात् ॥ सद्विद्याभूमविद्यादीनां ब्रह्मण एकस्यैवोपास्यत्वे तत्प्राप्तेरेव फलत्वेऽप्युपास्यत्वप्रकारभेदाद्विद्याभेदः। प्रकारभेदश्च शब्दान्तराद्यनुबन्धभेदादवगम्यते। पूर्वकाण्डोदितमपि ज्ञानस्याविधेयत्वं ब्रुवतां निरसनाय पुनरारब्धम् ॥ ५६ ॥

411 विकल्पोऽविशिष्टफलत्वात् ॥ एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्पः; अपरिच्छिन्नानन्दरूपब्रह्मानुभवफलस्याविशिष्टत्वात् ॥ ५७ ॥

412 काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ब्रह्मव्यतिरिक्तविद्याफलस्य परिमितत्वात् भूयस्त्वापेक्षया समुच्चयस्संभवतीति यथाकामं समुच्चीयेरन् विकल्पेरन् वा ॥ ५८ ॥

413 अङ्गेषु यथाश्रयभावः ॥ *उद्गीथमुपासीतेत्युद्गीथाद्यङ्गेषु आश्रितानामुद्गीथादिवत् क्रत्वङ्गभाव एव; गोदोहनादिवत् स्ववाक्ये फलान्तराश्रवणात् उद्गीथादिसंबन्धितया क्रत्वङ्गभावो न विरुध्यत इति ॥ ५९ ॥

414 शिष्टेश्च ॥ *उद्गीथमुपासीतेति विधेः *यदेव विद्यया करोतीत्यत्र विध्यभावाचाङ्गभावो न विरुद्धः ॥ ६० ॥

415 समाहारात् ॥ *उद्गीथमनुसमाहरतीति वेदनहानावन्येन समाधानं ब्रुवत् वेदनस्याङ्गतां द्योतयति ॥ ६१ ॥

416 गुणसाधारण्यश्रुतेश्च ॥ प्रकृतोपासनस्यैव *ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति* इति सर्वत्र संचरतः प्रणवस्य गुणत्वेनोपासनस्यापि संचारादुपासनोपादाननियमो गम्यते। अतः पूर्वोक्तोपादाननियमो न संभवति ॥ ६२ ॥

417 न वा तत्सहभावाश्रुतेः ॥ नैतत्; अङ्गभावाश्रुतेः। अङ्गभावो हि सहभावः। *यदेव विद्यया करोति......तदेव वीर्यवत्तरमिति फलान्तरसाधनतयाऽवगतस्योपासनस्याङ्गभावासंभवात् *उद्गीथमुपासीतेत्युद्गीथाश्रयतामात्रप्रतिपादनात् ॥ ६३ ॥

418 दर्शनाच्च ॥ *एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति* इति ब्रह्मणो वेदनेन सर्वरक्षणं ब्रुवन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानङ्गतां दर्शयतीति उपासनोपादानानियमस्सिद्धः ॥ ६४ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य तृतीयः पादः।

---

## तृतीयाध्याये चतुर्थः पादः।

419 पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ विद्यातः पुरुषार्थ इति भगवान् बादरायणो मेने;* ब्रह्मविदाप्नोति परम् *यो वेद...सोऽश्नुते सर्वान्कामान्सहेत्यादिशब्दात् ॥ १ ॥

420 शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥*तत्त्वमसीत्यादिसामानाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वावगमात्, तद्वेदनस्य तत्संस्कारतया कर्मशेषत्वात्, द्रव्यादिष्विव फलश्रुतिरर्थवादः ॥ २ ॥

421 आचारदर्शनात् ॥ *यक्ष्यमाणो ह वै भगवन्तोऽहमित्यादौ ब्रह्मविदः कर्मप्रधानाचारदर्शनात् विद्या कर्माङ्गम् ॥ ३ ॥

422 तच्छ्रुतेः ॥ *यदेव विद्यया करोतीति श्रुत्यैव विद्यायाः कर्मसु विनियोगात्। *यत्करोति तद्विद्ययेति हि श्रुतिः। यद्विद्यया साधनभूतया कर्म करोति, तत्कर्म वीर्यवत्तरमिति वा ॥४॥

423 समन्वारम्भणात् ॥ *तं विद्याकर्मणी समन्वारभेते* इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यदर्शनाच्च, विद्या कर्माङ्गम् ॥ ५ ॥

424 तद्वतो विधानात् ॥ *आचार्यकुलाद्वेदमधीत्य...अभिसमावृत्य कुटुम्बे* इत्यादावर्थज्ञानपर्यन्ताध्ययनवतः कर्मविधानाच्च; अध्ययनं ह्यर्थज्ञानपर्यन्तम् ॥ ६ ॥

425 नियमात् ॥ *कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः* इत्यात्मविदो जीवस्य कर्मसु विनियोगाच्च ॥ ७ ॥

426 अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ न विद्या कर्माङ्गम्, अपि तु विद्यातः पुरुषार्थ इत्येवमेव भगवतो बादरायणस्य मतम्। कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्यैव वेद्यतयोपदेशात्। तत्कथम्? *बहु स्यां प्रजायेयेति *स कारणं करणाधिपाधिपः* इत्यादिवाक्येषु वेद्यस्याधिकत्वदर्शनात् ॥ ८ ॥

427 तुल्यं तु दर्शनम् ॥ विद्यायाः प्राधान्येऽपि तुल्यमाचारदर्शनम् *ऋषयः कावषेयाः किमर्था वयमध्येष्यामह इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते। अनुष्ठानं तु फलाभिसन्धिरहितस्य विद्याङ्गत्वेन ॥ त्यागस्तु फलाभिसन्धियुक्तस्येति न विरोधः ॥ ९ ॥

428 असार्वत्रिकी ॥ *यदेव विद्यया करोतीति न सार्वत्रिकी विद्योच्यते, *यदेव विद्येति प्रसिद्धवन्निर्देशात्। प्रसिद्धिश्चोद्गीथविद्यायाः। *यदेव विद्यया करोति...तदेव वीर्यवत्तरं भवतीति प्रकृतोद्गीथविद्यायुक्तस्य कर्मणो हि वीर्यवत्तरत्वसाधनभावो विधीयते ॥ १० ॥

429 विभागश्शतवत् ॥ *तं विद्याकर्मणी समन्वरभेते* इति विद्याकर्मणोर्भिन्नफलत्वेन स्वस्मै फलायान्वेतीति विभागः। यथा क्षेत्ररत्नविक्रयिणे शतद्वयमन्वेतीत्यत्र क्षेत्रार्थं शतम्, रत्नार्थं शतमिति ॥ ११ ॥

430 अध्ययनमात्रवतः ॥ *वेदमधीत्येत्यध्ययनमात्रवतः कर्मविधानान्न विद्या कर्माङ्गम् ॥ अध्ययनविधिर्हि अक्षरराशिग्रहणमात्रे पर्यवस्यतीत्युक्तम्। अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता *विद्यात् *उपासीतेति विहिता विद्या प्रत्ययावृत्तिरूपा ॥ १२ ॥

431 नाविशेषात् ॥ *कुर्वन्नेवेह कर्माणीत्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोग इति विशेषहेत्वभावात् *ईशावास्यमिदं सर्वमिति प्रकरणाच्च विद्याङ्गभूतमेव च तत्कर्मेति ज्ञायते । अतो न विद्या कर्माङ्गम् ॥ १३ ॥

432 स्तुतयेऽनुमतिर्वा ॥ विद्यास्तुतये कर्मानुमतिर्वा । विद्यामाहात्म्यात्सर्वदा कर्म कुर्वन्नपि तैर्न लिप्यत इति हि विद्या स्तुता स्यात् । *न कर्म लिप्यते नर इति च वाक्यशेषः ॥ १४ ॥

433 कामकारेण चैके ॥ *किं प्रजया करिष्याम इत्यादिना कामकारेण गार्हस्थ्यत्यागमधीयत एके; अतश्च विद्यैव प्रधानभूता ॥ १५ ॥

434 उपमर्दं च ॥ विद्यया सर्वकर्मोपमर्दं चाधीयते *क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे *इत्यादिना ॥ १६ ॥

435 ऊर्ध्वरेतस्सु च शब्दे हि ॥ ऊर्ध्वरेतस्स्वाश्रमेषु विद्यादर्शनात्, तेषु चाग्निहोत्राद्यभावान्न विद्या कर्माङ्गम् । ते चाश्रमास्सन्त्येव; *त्रयो धर्मस्कन्धा इति वैदिके शब्दे हि दृश्यते ॥१७॥

436 परामर्शं जैमिनिरचोदनाचापवदति हि ॥ *त्रयो धर्मस्कन्धा इत्यत्र चोदनाभावादुपासनस्तुत्यर्थमनुवाद एवेति जैमिनिर्मेने । *वीरहा वा एष देवानां योऽग्निमुद्वासयते *इत्यपवदति चाश्रमान्तरम् ॥ १८ ॥

437 अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयमिति बादरायणमतम्, *त्रयो धर्मस्कन्धा इति सर्वाश्रमसाम्यश्रुतेः ॥ १९ ॥

438 विधिर्वा धारणवत् ॥ *उपरि हि देवेभ्यो धारयतीत्यप्राप्तत्वेन यथा विधिः तद्वत् ॥२०॥

439 स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ उद्गीथादिषु रसतमत्वादिदृष्टिविधिर्न संभवति; *इयमेव जुहूस्स्वर्गो लोक आहवनीयः* इतिवत्, कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्ववचनं तत्स्तुतिमात्रमिति चेत्, नैतत्, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात् । रसतमत्वादेश्चाप्राप्तत्वाद्रसतमत्वादिदृष्टिविधिरेव ॥ २१ ॥

440 भावशब्दाच्च ॥ *उद्गीथमुपासीतेति विधिप्रत्ययाच्च ॥ २२ ॥

441 पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ वेदान्तेषु तत्तद्विद्यारम्भेऽधीताः *प्रतर्दनो ह वै इत्याद्याख्यायिकाः पारिप्लवार्थाः, *आख्यानानि शंसन्तीति तत्र विनियोगादिति चेत्, न; तत्रैव *मनुर्वैवस्वतः इत्याद्याख्यानानां विशेषितत्वात् तेषामेव तत्र विनियोगः ॥ २३ ॥

442 तथा चैकवाक्योपबन्धात् ॥ विद्याविधिनैकवाक्यत्वाच्च *सोऽरोदीदित्यादिवत् विद्यास्तुत्यर्था एताः ॥ २४ ॥

443 अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ऊर्ध्वरेतसाम् *एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादिश्रुतेरेव विद्यावत्त्वात् तेष्वाधानाद्यनपेक्षा विद्या ॥ २५ ॥

444 सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ कर्मवत्सु गृहस्थेष्वग्निहोत्रादिसर्वकर्मापेक्षा विद्या, *ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादिश्रुतेः; यथाचाश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने । ऊर्ध्वरेतस्सु च स्वाश्रमकर्मापेक्षा ॥ २६ ॥

445 शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ गृहस्थो विहितकर्मण्याप्रृतोऽपि *शान्तो दान्तः इत्यादिना शमदमादिविधेस्तद्युक्तस्स्यात्; विद्यानिष्पत्तये शमदमादीनामवश्यानुष्ठेयत्वात्, शान्त्युपरतिप्रभृतिभिर्विना विद्यानिष्पत्त्यनुपपत्तेः ॥ २७ ॥

446 सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ प्राणविद्यानिष्ठस्य *न ह एवंविदि किञ्चनानन्नं भवतीति सर्वान्नानुमतिर्न सर्वदा, अपितु प्राणात्ययापत्तावेव; अतिशयितशक्तेर्ब्रह्मविदोऽप्युच्छिष्टभक्षणादिः प्राणात्ययापत्तावेवेति दर्शनात् ॥ २८ ॥

447 अबाधाच्च ॥ *आहारशुद्धौ सत्त्वशुद्धिरित्याहारशुद्धिविधेरबाधाच्च प्राणसंशय एव ॥ २९ ॥

448 अपि स्मर्यते ॥ *प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः इत्यादिना स्मर्यते च प्राणसंशय एवेति ॥ ३० ॥

449 शब्दश्चातोऽकामकारे ॥ *तस्माद्ब्राह्मणस्सुरां न पिबेदिति कामकारनिवृत्तिशब्दश्चात एव; यतः प्राणसंशय एव सर्वान्नानुमतिः ॥ ३१ ॥

450 विहितत्वाच्चाश्रमकर्मापि ॥ यज्ञादिकर्म *यावज्जीवमग्निहोत्रमित्यादिना विहितत्वात् विद्यारहितकेवलाश्रमिणामप्यनुष्ठेयम् ॥ ३२ ॥

451 सहकारित्वेन च ॥ *तमेतं वेदानुवचनेनेत्यादिश्रुतेर्विद्याङ्गतया विधेर्विद्यासहकारित्वेन विदुषा चानुष्ठेयम् ॥ ३३ ॥

452 सर्वथाऽपि त एवोभयलिङ्गात् ॥ उभयत्र विनियोगेऽपि यज्ञादयस्त एव, उभयत्र प्रत्यभिज्ञानाख्याल्लिङ्गात् । कर्मस्वरूपैक्येऽपि विनियोगपृथक्त्वेन न विरोधः ॥ ३४ ॥

453 अनभिभवं च दर्शयति ॥ *धर्मेण पापमपनुदतीति विद्योत्पत्तिप्रतिबन्धकपापनिवर्तनेन विद्याया अनभिभवं कर्मानुष्ठानकार्यञ्च दर्शयति ॥ ३५ ॥

454 अन्तरा चापि तु तद्दृष्टेः ॥ आश्रमानन्तरा वर्तमानो विधुरादिरनाश्रमी । तस्यापि विद्याधिकारोऽस्ति, रैक्वादिष्वनाश्रमिषु ब्रह्मविद्याधिकारदर्शनात् ॥ ३६ ॥

455 अपि स्मर्यते ॥ अनाश्रमिणोऽपि जपादिना विद्यानुग्रहः स्मर्यते *जप्येनापि च संसिद्ध्येदिति ॥ ३७ ॥

456 विशेषानुग्रहश्च ॥ आश्रमानियतधर्मविशेषेण विद्यानुग्रहश्च श्रूयते *तपसा ब्रह्मचर्येण श्रद्धया विद्यया चाऽऽत्मानमित्यादिना ॥ ३८ ॥

457 अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ अनाश्रमित्वादाश्रमित्वं ज्यायः, धर्मभूयस्त्वात्, *अनाश्रमी न तिष्ठेत्तु *इति स्मृतेश्च ॥ ३९ ॥

458 तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ नैष्ठिकादिनिष्ठस्य प्रच्युत्य स्थितिर्न संभवत्येव, नियमात् तद्रूपनिवृत्तिभ्यः । यथा नियच्छन्ति हि *अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति *अरण्यमियात्ततो न पुनरेयादितिच, *सन्नयस्याग्निं न पुनरावर्तयेदिति च । अतस्तेषां प्रच्युत्य स्थित्यभावाद्विद्यानधिकारः । जैमिनेरप्येवम् ॥ ४० ॥

459 नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ *अवकीर्णिपशुश्च तद्वदित्यधिकारलक्षणोक्तं प्रायश्चित्तमपि तस्य न संभवति, तस्य प्रायश्चित्तानधिकारस्मृतेः तदसंभवात्, *आरूढो नैष्ठिकं धर्ममित्यारभ्य *प्रायश्चित्त न पश्यामीत्यादिस्मृतेः ॥ ४१ ॥

460 उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ उपपातकत्वात् प्रायश्चित्तमेके मध्वशननिषेधतत्प्रायश्चित्तवदिति । तदुक्तम् *उत्तरेषाश्चैतदविरोधीति ॥ ४२ ॥

461 बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ उपपातकत्वेऽपि अन्यथाऽपि कर्माधिकारबहिष्कृता एते । तथा स्मृतेः *प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा* इति, शिष्टबहिष्काराच्च ॥ ४३ ॥

462 स्वामिनः फलश्रुतेरित्यात्रेयः ॥ उद्गीथाद्युपासनं यजमानेनानुष्ठेयम्, तस्यैव क्रतुवीर्यवत्तरत्वादिफलश्रुतेरित्यात्रेयः ॥ ४४ ॥

463 आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ कर्मस्वरूपवत्तदङ्गाश्रयमप्यार्त्विज्यम्; साङ्गफलसाधनकर्मानुष्ठानाय हि ऋत्विक्परिक्रियते ॥ ४५ ॥

464 सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ *तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येत्यारभ्य *अथ मुनिरित्यत्र विद्यावतो यज्ञादिवत् बाल्यपाण्डित्ययोस्तृतीयं सहकार्यन्तरं मौनं विधीयते, पक्षेण प्रकृष्टमननशीले मुनिशब्दप्रयोगात्; विद्याभ्यासरूपमननमिदमप्राप्तमेव ॥ ४६ ॥

465 कृत्स्नभावात्तु गृहिणोपसंहारः ॥ कृत्स्नेष्वाश्रमिषु विद्यासद्भावात् छान्दोग्ये *अभिसमावृत्य कुटुम्बे इत्यारभ्य *स खल्वेवं वर्तयन्यावदायुषमिति गृहिणोपसंहारस्सर्वेषां प्रदर्शनार्थः । तुशब्दो हि गृहिण एवेति शङ्काव्यावृत्त्यर्थः ॥ ४७ ॥

466 मौनवदितरेषामप्युपदेशात् ॥ *अथ मुनिरित्यत्रापि *अथ भिक्षाचर्यं चरतीति पारिव्राज्येनोपसंहारः प्रदर्शनार्थः, मौनभिक्षाचर्यवदितराश्रमधर्माणां यज्ञादीनामप्युपदेशात् ॥ ४८ ॥

467 अनाविष्कुर्वन्नन्वयात् ॥ *पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदिति बाल्यमित्यविशेषेण श्रुतावपि बालकर्म स्वमाहात्म्यानाविष्काररूपं विद्यान्वययोग्यतया विधीयते ॥ ४९ ॥

468 ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ अभ्युदयफलमुपासनं स्वसाधनभूतपुण्यकर्मा-

नन्तरमुत्पद्यत इति नायं नियमः, प्रबलकर्मान्तरप्रतिबन्धाभावे तदनन्तरं, प्रतिबन्धे तु तस्मिन्समाप्ते, *तदेव वीर्यवत्तरमिति प्रतिबन्धाभावे फलदर्शनात् ॥ ५० ॥

469 एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ एवं मुक्तिफलोपासनस्यापि प्रतिबन्धभावाभावयोरित्यनियमः, प्रतिबन्धाभाव एवेति फलोदयावस्थावधृतेः ॥ ५१ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चाध्यायः ॥

---

श्रीमते रामानुजाय नमः

## श्रीवेदान्तसारे चतुर्थाध्याये प्रथमः पादः

470 आवृत्तिरसकृदुपदेशात् ॥ *ब्रह्मविदाप्नोति परमित्यादिषु मोक्षसाधनं वेदनमसकृदावृत्तम्, *विद्यात् *उपासीतेति विद्युपास्योरुपक्रमोपसंहारयोर्व्यतिकरेणोपदेशात् ॥ १ ॥

471 लिङ्गाच्च ॥ लिङ्गं—स्मृतिः; *मां ध्यायन्त उपासते, तेषामहं समुद्धर्ता *तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्स्पृहा, तद्ध्यानम्* इत्यादिस्मृतेश्च ॥ २ ॥

472 आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ यद्यपि *अधिकंतु भेदनिर्देशात् *अधिकोपदेशादित्यादिषु प्रत्यगात्मनोऽर्थान्तरत्वं ब्रह्मणः प्रतिपादितम् । तथाप्युपासिता *अहं ब्रह्मास्मीत्येवोपासीत । यतः पूर्वे उपासितारः *त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते* इत्यात्मेत्येवोपगच्छन्ति । उपासितुरर्थान्तरमपि ब्रह्म तानुपासितॄन् स्वात्मभूतं ग्राहयन्ति शास्त्राणि *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा* इत्यादीनि । यथा मनुष्योऽहमिति मनुष्यशरीरस्य स्वात्मप्रकारतैकस्वभावतया प्रकारिणि स्वात्मनि अहंशब्दस्य तद्बुद्धेश्च पर्यवसानम्; तथा स्वात्मनोऽपि परमात्मशरीरतया तत्प्रकारस्वभावत्वेन अहंशब्दतद्बुद्ध्योः परमात्मनि पर्यवसानमिति *अहं ब्रह्मेत्येवोपास्यमिति ॥३॥

473 न प्रतीके न हि सः ॥ *मनो ब्रह्मेत्यादिप्रतीके तु नात्मेति ग्रहणम्; न हि तत्र सः—परमात्मोपास्यः, परमात्मदृष्ट्या हि मनःप्रभृतीति ॥ ४ ॥

474 ब्रह्मदृष्टिरुत्कर्षात् ॥ ब्रह्मण उत्कृष्टत्वात्तदृष्ट्या मनआद्युपासनं ह्यभ्युदयाय भवतीति ॥ ५ ॥

475 आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ *य एवासौ तपति तमुद्गीथमुपासीतेत्यादावप्यादित्यादेरेवोत्कृष्टत्वात् उद्गीथादौ तदृष्टयः कार्याः ॥ ६ ॥

476 आसीनस्संभवात् ॥ आसीन उपासनं कुर्यात्, तस्यैवैकाग्र्यसंभवात् ॥ ७ ॥

477 ध्यानाच्च ॥ *निदिध्यासितव्यः इत्युपासनस्य ध्यानरूपत्वाच्चासीनः ॥ ८ ॥

478 अचलत्वं चापेक्ष्य ॥ पृथिव्यादेरचलत्वं चापेक्ष्य *ध्यायतीव पृथिवी इति प्रयोगात् मनसो निश्चलत्वमासीनस्यैव ॥ ९ ॥

479 स्मरन्ति च ॥ *उपविश्यासने युञ्ज्यादित्यादिना ॥ १० ॥

480 यत्रैकाग्रता तत्राविशेषात् ॥ यत्रैकाग्रता, तत्र देशे तत्र काले उपासीतेति देशकालविशेषाश्रवणात् ॥ ११ ॥

481 आप्रयाणात्तत्रापि हि दृष्टम् ॥ आप्रयाणादहरहरुपासनं कार्यम्, *स खल्वेवं वर्तयन्यावदायुषमिति दर्शनात् ॥ १२ ॥

482 तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वकृताघनाशः उत्तराघाश्लेषश्च भवति, *एवं हास्य सर्वे पाप्मानः प्रदूयन्ते *एवमेवंविदि पापं कर्म न श्लिष्यते इति श्रुतेः ॥ १३ ॥

483 इतरस्याप्येवमसंश्लेषः पाते तु ॥ विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादेवमश्लेषविनाशौ । वृष्ट्यन्नायुरारोग्यादिविद्यानुगुणफलस्य कर्मणः शरीरपातादूर्ध्वमफलत्वम् ॥ १४ ॥

484 अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ विद्याधिगतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः; *तस्य तावदेव चिरमिति शरीरपातावधिश्रुतेः ॥ १५ ॥

485 अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ अग्निहोत्राद्याश्रमकर्म, विद्योत्पत्त्याख्यकार्यायैव आप्रयाणादनुष्ठेयं *तमेतं वेदानुवचनेनेत्यादिना विद्योत्पत्तिकार्यत्वं ह्याश्रमधर्मस्य दृष्टम् ॥ १६ ॥

486 अतोऽन्यापि ह्येकेषामुभयोः ॥ *तस्य पुत्रा दायमुपयन्ति *द्विषन्तः पापकृत्यां सुहृदस्साधुकृत्यामित्यादिवचनस्याग्निहोत्रादेरन्याऽप्यनादिकालप्रवृत्ता साधुकृत्या प्रबलकर्मप्रतिबद्धफला, उत्तरा वृष्ट्यन्नादिविद्यानुगुणफला प्रतिबद्धा चेति पूर्वोत्तरकृतयोरुभयोरप्यस्यैव विषयः ॥१७॥

487 यदेव विद्ययेति हि ॥ *यदेव विद्ययेत्यत्र फलप्रतिबन्धोऽस्तीति ह्युक्तम् ॥ १८ ॥

488 भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ आरब्धकार्ययोः पुण्यपापयोर्यत्फलम्, तत् एकशरीरावसानमनेकशरीरावसानं वा भुक्त्वैव तदनन्तरं ब्रह्म प्राप्नोति ॥ १९ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## चतुर्थाध्याये द्वितीयः पादः

489 वाङ्मनसि दर्शनाच्छब्दाच्च ॥ *अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते इति शब्दात्; उत्क्रान्तौ मनसः प्रागेव वाच उपरतिदर्शनाच्च वाङ्मनसि संपद्यते–युज्यत इति ॥१॥

490 अत एव सर्वाण्यनु ॥ अतः *इन्द्रियैर्मनसि संपद्यमानैरिति शब्दात्, उपरतिदर्शनाच्च, वाचमनु सर्वाणीन्द्रियाणि मनसि च संयुज्यन्ते ॥ २ ॥

491 तन्मनः प्राण उत्तरात् ॥ उत्तरात् *मनः प्राणे इति शब्दात् सर्वेन्द्रिययुक्तं मनः प्राणे संयुज्यते ॥ ३ ॥

492 सोऽध्यक्षे तदुपगमादिभ्यः ॥ सः–प्राणः अनन्तरं जीवेन संयुज्यते, *एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति* इति प्राणस्य जीवोपगमादिश्रुतेः ॥ ४ ॥

493 भूतेषु तच्छ्रुतेः ॥ *प्राणस्तेजसीति भूतान्तरसंसृष्टे तेजोऽभिधीयत इति प्राणा भूतेषु संयुज्यन्ते ॥ ५ ॥

494 नैकस्मिन् दर्शयतो हि ॥ *तेजसीति न तेजोमात्रे, त्रिवृत्करणश्रुतिस्मृतिभ्यां केवलस्य तेजसोऽनवस्थानात् ॥ ६ ॥

495 समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ अर्चिरादिगत्युपक्रमात्प्रागुत्क्रान्तिः विद्वदविदुषोस्समाना, विदुषोऽर्चिरादिगत्या ब्रह्मप्राप्तिश्रुतेः । *यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ इति अत्रैव अमृतत्वब्रह्मप्राप्तिवचनं शरीरेन्द्रियादिसंबन्धमदग्ध्वैवोपासनारम्भाभिप्रायमित्युपगन्तव्यमित्यर्थः ॥ ७ ॥

496 तदापीतेस्संसारव्यपदेशात् ॥ अर्चिरादिगमनेन ब्रह्मप्राप्तेः प्राक् शरीरसंबन्धव्यपदेशात्तदमृतत्वादिवचनमुक्तप्रकारमेव ॥ ८ ॥

497 सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते; अन्यथा गत्यनुपपत्तेः । न केवलं गत्यनुपपत्तिमात्रं सूक्ष्मशरीरवत्त्वे प्रमाणम्, चन्द्रमसा संवादादिप्रमाणान्तरतश्च सूक्ष्मशरीरवत्त्वोपलब्धेः— *तं प्रति ब्रूयात् *सत्यं ब्रूयादिति ॥ ९ ॥

498 नोपमर्देनातः ॥ अतः–उक्ताद्धेतोः, *अथ मर्त्योऽमृतो भवतीत्याद्यमृतत्ववचनं न देहसंबन्धोपमर्देन ॥ १० ॥

499 अस्यैव चोपपत्तेरूष्मा ॥ अस्य–सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न तदुपमर्देन । उपलभ्यते ह्युत्क्रामतो विदुषस्सूक्ष्मदेहगुण ऊष्मा । अन्यत्रानुपलम्भान्न स्थूलगुणः ॥ ११ ॥

500 प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ *अथाकामयमानो न तस्य प्राणा उत्क्रामन्ति* इति विदुष उत्क्रान्तिप्रतिषेधादत्रैव साक्षाद्ब्रह्मप्राप्तिरिति चेत्, नैतत्; विदुष उत्क्रम-

माणस्यार्चिरादिकया गमनाय प्राणा न विश्लिष्यन्ते इति ह्युच्यते *न तस्य प्राणा उत्क्रामन्तीति । अयमर्थो माध्यन्दिनानां पाठे स्पष्टोऽभिधीयते *योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात्प्राणा उत्क्रामन्तीति ॥ १२ ॥

501 स्मर्यते च ॥ विदुषोऽपि मूर्धन्यनाड्या गमनं स्मर्यते च *ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ इति ॥ १३ ॥

502 तानि परे तथा ह्याह ॥ *तेजः परस्यां देवतायामिति श्रुतेः परदेवतासंपत्तिरुत्क्रममाणस्य विश्रमस्थानमिति तानि—भूतानि जीवसंयुक्तानि परदेवतायां संपद्यन्ते ॥ १४ ॥

503 अविभागो वचनात् ॥ परदेवतासंपत्तिवचनमविभागमात्रपरम्, *वाङ्मनसि संपद्यते इति संपत्तिपदस्यैवात्रानुषक्तस्यार्थान्तरपरत्वे प्रमाणाभावात्; मनःप्रभृतिषु हि प्रलयासंभवादविभागमात्रपरम् ॥ १५ ॥

504 तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात्, तदङ्गगतिचिन्तनेन च प्रीतपरमपुरुषानुगृहीतः, तदनुग्रहतः प्रकाशिततद्द्वारो जीवः शताधिकया मूर्धन्यनाड्या गच्छति । तदनुग्रहादेव जीवस्थानमग्रे प्रकाशवद्भवति । हार्दः-परमात्मा परमपुरुषः । *तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः *सर्वस्य चाहं हृदि सन्निविष्टः इति हि श्रुतिस्मृती ॥ १६ ॥

505 रश्म्यनुसारी ॥ *अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते इति श्रुतेः विद्वान् रश्म्यनुसार्येव गच्छति । निश्यपि रश्मयस्संभवन्त्येव, निदाघादावूष्मोपलब्धेः । हेमन्तेऽनुपलब्धिस्तु हिमाभिभवकृता ॥ १७ ॥

506 निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ *दिवा च शुक्लपक्षश्चेत्यारभ्य *विपरीतं तु गर्हितमिति निशामरणनिन्दनात्, निशि मृतस्य न ब्रह्मप्राप्तिरिति चेत् न, कर्मसंबन्धस्य यावद्देहभावित्वात्, प्रारब्धस्य यावच्चरमदेहावसानभावित्वाच्च, ब्रह्मप्राप्तिविघ्नहेत्वभावात् । दर्शयति च *तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये इति । निशानिन्दा इतरपुरुषार्थविषया ॥ १८ ॥

507 अतश्चायनेऽपि दक्षिणे ॥ अतः—बन्धहेत्वभावादेव दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

508 योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ *यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः इति न मरणकालस्स्मर्यते; अपितु योगिनः— विद्यानिष्ठान्प्रति अर्चिरादिका तद्विपरीता चेति एते-स्मार्ते—स्मृतिविषयभूते स्मर्येते, *नैते सृती पार्थ जानन्योगी मुह्यति कश्चनेति वचनात् ॥ २० ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

## चतुर्थाध्याये तृतीयः पादः

509 अर्चिरादिना तत्प्रथितेः ॥ अर्चिरादिनैकेन विद्वान् गच्छति, सर्वासु श्रुतिषु तच्चिह्नैस्तत्प्रत्यभिज्ञानात् ॥ १ ॥

510 वायुमब्दादविशेषविशेषाभ्याम् ॥ *मासेभ्यस्संवत्सरं संवत्सरादादित्यमित्यब्दादित्ययोर्मध्ये द्वयोः प्रकरणान्तरयोः एकत्र देवलोकः श्रुतः, इतरत्र वायुशब्दः । तत्र देवलोकशब्दोऽपि देवानां लोक इति वायोरविशेषेण वाचकः, वायुशब्दश्च तस्यैव विशेषेण वाचक इति अविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एव विहित इत्यब्दादूर्ध्वमादित्यात्पूर्वं वायुमेव निवेशयेत् ॥ २ ॥

511 तटितोऽधि वरुणस्संबंधात् ॥ तटितोऽनन्तरं वरुणो निवेश्यः, मेघोदरवृत्तित्वाद्विद्युतः, मेघस्थलजलात्मकत्वेन लोकवेदयोर्वरुणस्य विद्युत्संबन्धावगमात् । तदनन्तरमिन्द्रप्रजापती पाठक्रमात्, प्रबलविशेषाभावाच्च ॥ ३ ॥

512 आतिवाहिकास्तल्लिङ्गात् ॥ अर्चिराद्यभिमानिदेवताविशेषाः विदुषामातिवाहिकत्वेन परमपुरुषनियुक्ता इति विज्ञायते, *स एनान् ब्रह्म गमयतीति तेष्वेकत्र गमयितृत्वदर्शनात् लिङ्गात् ॥ ४ ॥

513 वैद्युतेनैव ततस्तच्छ्रुतेः ॥ *चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयतीति श्रुतेः वैद्युतपुरुषात्परस्तात्स एव ब्रह्म गमयिता । वरुणेन्द्रप्रजापतीनां तदनुग्राहकत्वमेव ॥ ५ ॥

514 कार्यं बादरिरस्य गत्युपपत्तेः ॥ कार्यं—हिरण्यगर्भमुपासीनानर्चिरादिर्नयति, अस्यैव गत्युपपत्तेः । न हि सर्वगतं परं ब्रह्मोपासीनानां गतिरस्तीति बादरिः मेने ॥ ६ ॥

515 विशेषितत्वाच्च ॥ *पुरुषो मानस एत्य ब्रह्मलोकान् गमयति *प्रजापतेस्सभां वेश्म प्रपद्ये इति च विशेषितत्वात् हिरण्यगर्भमेव ॥ ७ ॥

516 सामीप्यात्तु तद्व्यपदेशः ॥ *ब्रह्म गमयतीति ब्रह्मव्यपदेशस्तत्सामीप्यात्; अस्य *यो ब्रह्माणं विदधाति पूर्वमिति सामीप्यमस्ति हि ॥ ८ ॥

517 कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिश्रुत्यविरोधः, हिरण्यगर्भलोकात्यये तदध्यक्षेण सहातः परं गच्छति, *ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे* इति श्रुतेः ॥ ९ ॥

518 स्मृतेश्च ॥ *ब्रह्मणा सह ते सर्वे इत्यारभ्य *प्रविशन्ति परं पदमिति स्मृतेश्च ॥ १० ॥

519 परं जैमिनिर्मुख्यत्वात् ॥ परमुपासीनानिति जैमिनिः, *ब्रह्म गमयतीति तत्रैव मुख्यत्वात् ॥ ११ ॥

520 दर्शनाच्च ॥ *अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्येति श्रुतेश्च ॥ १२ ॥

521 नच कार्ये प्रत्यभिसन्धिः ।। *प्रजापतेस्सभामिति प्रत्यभिसन्धिश्च न कार्ये; प्रजापतिशब्दस्य *पतिं विश्वस्येत्यादिश्रुतेः परस्मिन्नेव मुख्यत्वात् ब्रह्मलोकशब्दश्च कर्मधारयवृत्त्या तत्रैवेत्यभिप्रायः। *ते ब्रह्मलोके इति तु श्रुतिः ब्रह्मैव लोक इति परब्रह्मविषयैव। *ब्रह्मणा सह ते सर्वे, इति स्मृतिश्च *तदुपर्यपीति न्यायेन चतुर्मुखलोकस्थोपासनविषया ।। १३ ।।

522 अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ।। प्रतीकालम्बना हि नामादिप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपपर्यन्तं सर्वं चिदचिद्वस्तुजातं ब्रह्मदृष्ट्या स्वरूपेण वा ये उपासते, ते; अप्रतीकालम्बनाः तद्व्यतिरिक्ताः, ये पञ्चाग्निविदः, ये च परं ब्रह्मोपासते; तान्नयत्यर्चिरादिरिति भगवान् बादरायणो मन्यते। कार्यमिति पक्षे, परमेवेति च पक्षे सकलोपनिषद्विरोधरूपदोषः प्रसज्यते। कार्यपक्षे *ब्रह्म गमयति *परं ज्योतिरुपसंपद्येत्याद्याः प्रकुप्येयुः। परमेवेति पक्षे *य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवतीति श्रुतिः प्रकुप्येत। कार्यपक्षे तत्क्रतुन्यायश्च विरुध्यते। अर्चिरादिना गतानां हि ब्रह्मप्राप्तिरपुनरावृत्तिश्च श्रूयते। पञ्चाग्निविदस्तु प्रकृतिवीयुक्तात्मस्वरूपं *य आत्मनि तिष्ठन्नित्यादिनाऽवगतब्रह्मात्मकत्वमुपासत इति ह्यप्रतीकालम्बनत्वम्, तत्क्रतुन्यायाविरोधश्च; उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन—स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे इति ।। १४ ।।

523 विशेषश्च दर्शयति ।। कार्यमुपासीनानां ब्रह्मप्राप्तिव्यतिरिक्तपरिमितदेशकालफलविशेषश्च दर्शयति श्रुतिः* यावन्नाम्नो गतमित्यादिका ।। १५ ।।

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे चतुर्थस्याध्यायस्य तृतीयः पादः

---

## चतुर्थाध्याये चतुर्थः पादः

524 संपद्याविर्भावस्स्वेनशब्दात् ।। *एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते* इति सिद्धस्यैव प्रत्यगात्मस्वरूपस्य अनादिकर्मणा तिरोहितस्य परं ज्योतिरुपसंपद्याविर्भाव उच्यते; *स्वेन रूपेणेति विशिष्याभिधानात् ।। १ ।।

525 मुक्तः प्रतिज्ञानात् ।। आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि कर्मबन्धविनिर्मुक्तापरिच्छिन्नज्ञानादिस्वरूपस्य ह्यत्राविर्भाव उच्यते। *एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति जागरिताद्यवस्थातिरोधानविनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ।। २ ।।

526 आत्मा प्रकरणात् ।। *भूयोऽनुव्याख्यास्यामीति प्रकृतापहतपाप्मत्वादिगुणक आत्मेति प्रकरणादवगम्यते; *य आत्माऽपहतपाप्मा* इत्यारभ्य *सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यः* इति प्रकृत्य *एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्युक्तम् ।। ३ ।।

527 अविभागेन दृष्टत्वात् ॥ आविर्भूतस्वरूपोऽयं मुक्तात्मा स्वात्मशरीरकं परं ब्रह्म स्वात्मनोऽप्यात्मतया अहं ब्रह्मास्मीत्यविभागेनैवानुभवति, *आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति तथारूपोपासनेन तथाविधस्वरूपस्य दृष्टत्वात् । *य आत्मनि तिष्ठन्...यस्याऽत्मा शरीरं स त आत्मा *तत्त्वमसीत्यादिशास्त्रसिद्धमेव ह्युपासितम् ॥ ४ ॥

528 ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ अस्य स्वरूपाविर्भावः ब्राह्मेण—अपहतपाप्मत्वादिगुणकस्वरूपेण; ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि गुणाः स्वाभाविका इति *य आत्माऽपहतपाप्मा इत्यारभ्य उपन्यासादिभ्यः अवगम्यते । त एव *जक्षत्क्रीडन् रममाणः इत्यादिनोच्यन्ते । इति जैमिनेर्मतम् ॥ ५ ॥

529 चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ *विज्ञानघन एवेत्यवधारणात् विज्ञानमात्रस्वरूप इत्यौडुलोमिः ॥ ६ ॥

530 एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ *विज्ञानघन एवेति स्वप्रकाशस्वात्मस्वरूप इत्यवगतेऽपि *य आत्माऽपहतपाप्मेत्युपन्यासादिना पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावावगमादुभयश्रुत्यवगतोभयस्वरूपस्य परस्परविरोधाभावद्रूपद्वयं नान्योन्यपरिहारीत्युभयरूपसमुच्चयं भगवान् बादरायणो मेने ॥ ७ ॥

531 सङ्कल्पादेव तच्छ्रुतेः । *स यदि पितृलोककामः* इत्यादिनाऽवगताः पित्रादयः *सङ्कल्पादेवास्येति श्रुतेः सङ्कल्पादेव भवन्ति । यथा परमपुरुषस्य लीलाप्रवृत्तस्य दशरथवसुदेवादयस्सङ्कल्पादेव भवन्ति । एवमेव परमपुरुषलीलान्तर्गतस्य मुक्तस्यापि तदुपकरणभूताः पित्रादयस्सङ्कल्पादेव भवन्तीत्यर्थः ॥ ८ ॥

532 अत एव चानन्याधिपतिः ॥ अत एव *अपहतपाप्मा...सत्यसङ्कल्पः इत्यादिश्रुतेः न कदाचिदपि कर्माधीनोऽयम् ॥ ९ ॥

533 अभावं बादरिराह ह्येवम् ॥ तस्य देहेन्द्रियाद्युपकरणाभावं बादरिर्मेने; *नह वै सशरीरस्येत्यादिर्हि तदभावमाह ॥ १० ॥

534 भावं जैमिनिर्विकल्पामननात् ॥ *एकधा भवतीत्यादिना देहेन्द्रियादिभिर्विविधताश्रुतेः देहाद्युपकरणसद्भावं जैमिनिर्मेने ॥ ११ ॥

535 द्वादशाहवदुभयविधं बादरायणोऽतः ॥ उभयश्रुतेस्सशरीरत्वमशरीरत्वञ्चेच्छातः; यथा द्वादशाहे उभयश्रुतेस्सत्रमहीनश्च भवति ॥ १२ ॥

536 तन्वभावे सन्ध्यवदुपपत्तेः ॥ स्वेनैव सृष्टतन्वाद्यभावे स्वप्ने *अथ रथान् रथयोगान् पथस्सृजते* इति परमपुरुषसृष्टैर्भोगवत् मुक्तोऽपि परमपुरुषसृष्टैरेव लीलारसं भुङ्क्ते ॥ १३ ॥

537 भावे जाग्रद्वत् ॥ स्वेनैव सृष्टोपकरणभावे जाग्रत्पुरुषवत् भुङ्क्ते ॥ १४ ॥

538 प्रदीपवदावेशस्तथाहि दर्शयति ॥ एकदेशस्थितस्यापि स्वप्रभारूपज्ञानव्याप्त्या सर्वानुभवस्सिद्ध्यति । *वालाग्रशतभागस्येत्यारभ्य *स चानन्त्याय कल्पते इति हि दर्शयति ॥१५॥

539 स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ *प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षमित्युक्तम् । *नाह स्वल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति* इत्यादिना सुषुप्त्यादावकिञ्चिज्ज्ञत्वमाविष्कृतं हि ॥१६॥

540 जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तं मुक्तस्य जगज्जन्मादिकारणत्ववर्जम्; *यतो वा इमानि भूतानि जायन्ते इत्यारभ्य *तद्ब्रह्मेत्यादि जगत्सृष्ट्यादि परस्यैवेति प्रकरणादवगम्यते; सृष्ट्यादिप्रकरणेषु मुक्तस्यासन्निहितत्वाच्च । मुक्तस्यातिरोहितस्वमाहात्म्यस्यानवधिकातिशयानन्दपरिपूर्णब्रह्मानुभव एव । ब्रह्मणोऽपि जगद्व्यापारो लीलामात्रमिति *लोकवत्तु लीलाकैवल्यमित्युक्तम् ॥ १७ ॥

541 प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ *इमाल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्नित्युपदेशाज्जगद्व्यापारोऽस्तीति चेत्, न, हिरण्यगर्भाद्याधिकारिकमण्डलस्थभोगोक्तेः । नहि तत्र नियमनं श्रुतम् ॥ १८ ॥

542 विकारावर्ति च तथाहि स्थितिमाह ॥ विकारासंसृष्टपरिपूर्णपरब्रह्मानुभव एव तस्य सुखम्; तथाऽस्य स्थितिं *रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्याह ॥ १९ ॥

543 दर्शयतश्चैवं प्रत्याक्षानुमाने ॥ उक्तमर्थं श्रुतिस्मृती च दर्शयतः *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः *एतस्य वा अक्षरस्य प्रशासने इत्यादिका श्रुतिः । स्मृतिरपि *अहं सर्वस्य प्रभवः मत्तस्सर्वं प्रवर्तते* इति ॥ २० ॥

544 भोगमात्रसाम्यलिङ्गाच्च ॥ *सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चितेति ब्रह्मानुभवरूपभोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

545 अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ *स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते* इतिशब्दात् निवृत्तसमस्ततिरोधानः, आविर्भूतापहतपाप्मत्वादिगुणगणः अनवधिकातिशयानन्दं परं ब्रह्मानुभवति; न च पुनरावर्तते इति निश्चीयत इति सर्वं समञ्जसम् ॥ २२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तसारे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चाध्यायः ॥ ४ ॥

श्रीमते रामानुजाय नमः

# श्रीशारीरकमीमांसाभाष्योपात्तप्रमाणसूचिका

( संख्या– पृष्ठ संख्या )

# ब्रह्मसूत्राणामकारादिसूची

[ संख्या सूत्रसंख्या ]

# ब्रह्मसूत्राधिकरणनामकारादिसूची ।

[ संख्या — अध्याय—पाद—अधिकरणसंख्या ]

॥ श्रीरस्तु ॥

श्रियः कान्ताय नमः ।

श्रीमते रामानुजाय नमः ।

## श्रीभगवद्रामानुजग्रन्थमालायां

# श्रीवेदान्तदीपः ॥

श्रियःकान्तोऽनन्तो वरगुणगणैकास्पदवपुः हताशेषावद्यः परमकपदो वाङ्मनसयोः ।

अभूमिर्भूमिर्यो नतजनदृशामादिपुरुषो मनस्तत्पादाब्जे परिचरणसक्तं भवतु मे ॥

प्रणम्य शिरसाऽऽचार्यांस्तदादिष्टेन वर्त्मना । ब्रह्मसूत्रपदान्तस्स्थवेदान्तार्थः प्रकाश्यते ॥

अत्रेयमेव हि वेदविदां प्रक्रिया— अचिद्वस्तुन स्वरूपतः स्वभावतश्चात्यन्तविलक्षणः तदात्मभूतः चेतनः प्रत्यगात्मा । तस्मात् बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया कल्याणगुणैकताननतया च, सर्वावस्थचिदचिद्व्यापकतया धारकतया नियन्तृतया शेषितया च अत्यन्तविलक्षणः परमात्मा । यथोक्तं भगवता—

* द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ * इति । श्रुतिश्च— * प्रधानक्षेत्रज्ञपतिर्गुणेशः * पतिं विश्वस्याऽऽत्मेश्वरम् * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः * इत्यादिका । कूटस्थः— मुक्तस्वरूपम्, * ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ इत्यादिव्यपदेशात् । सूत्रकारश्चैवमेव वदति— * नेतरोऽनुपपत्तेः * भेदव्यपदेशात् * अनुपपत्तेस्तु न शारीरः * कर्मकर्तृव्यपदेशाच्च * शब्दविशेषात् * संभोगप्राप्तिरितिचेन्न वैशेष्यात् * न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च * उभयेऽपि हि भेदेनैनमधीयते * विशेषणभेदव्यपदेशाभ्यां च नेतरौ * मुक्तोपसृप्यव्यपदेशाच्च * स्थित्यदनाभ्यां च * इतरपरामर्शात्स इति चेन्नासंभवात् * उत्तराच्चेदाविर्भूतस्वरूपस्तु * सुषुप्त्युत्क्रान्त्योर्भेदेन * पत्यादिशब्देभ्यः * अधिकं तु भेदनिर्देशात् * अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् * जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च * भोगमात्रसाम्यलिङ्गाच्च * इत्यादिभिः ।

न चाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशाः, * इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति * मुक्तोपसृप्यव्यपदेशाच्च * उत्तराच्चेदाविर्भूतस्वरूपस्तु * संपद्याविर्भावस्स्वेनशब्दात् * जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च * भोगमात्रसाम्यलिङ्गाच्च * इति सर्वाविद्योपाधिविनिर्मुक्तमधिकृत्यैव भेदोपपादनात् ।

श्रुतिस्मृतिसूत्रेषु सर्वत्र भेदे निर्दिष्टे चिदचिदीश्वरस्वरूपभेदः स्वाभाविको विवक्षित इति निश्चीयते । * सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत * वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, * तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत * सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः * ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो * क्षेत्रज्ञं चापि मां विद्धि * तदनन्यत्वमारम्भणशब्दादिभ्यः * इति परस्य ब्रह्मणः कारणत्वम्, कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य कार्यत्वम्, कारणात्कार्यस्यानन्यत्वं चोच्यमानमेवमेवोपपद्यते । सर्वावस्थस्य चिदचिद्वस्तुनः परमात्मशरीरत्वम्, परमात्मनश्चाऽऽत्मत्वम्, * यः पृथिव्यां तिष्ठन्....यस्य पृथिवी शरीरम्, * य आत्मनि तिष्ठन्....यस्याऽऽत्मा शरीरं....य आत्मानमन्तरो यमयति * यस्याव्यक्तं शरीरं–यस्याक्षरं शरीरं–यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः * अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा * इत्यादिश्रुत्यैवोपदिष्टमिति सूक्ष्मचिदचिद्वस्तु(विशिष्टः)शरीरः परमात्मा कारणम्, स एव परमात्मा स्थूलचिदचिद्वस्तुशरीरः कार्यमिति कारणावस्थायां कार्यावस्थायां च चिदचिद्वस्तुशरीरकतया तत्प्रकारः परमात्मैव सर्वशब्दवाच्य इति परमात्मशब्देन सर्वशब्दसामानाधिकरण्यं मुख्यमेवोपपन्नतरम् । * अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि * तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत् * इत्यादि श्रुतिरेवेममर्थमुपपादयति । सर्वमात्मतयाऽनुप्रविश्य तच्छरीरत्वेन सर्वप्रकारतया स एव सर्वशब्दवाच्यो भवतीत्यर्थः । * बहु स्यामिति बहुभवनसङ्कल्पोऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतयैकधाऽवस्थितस्य विभक्तनामरूपचिदचिच्छरीरकतया बहुप्रकारताविषय इति ( वेदवित्प्रक्रिया) ॥

ये पुनः निर्विशेषकूटस्थस्वप्रकाशनित्यचैतन्यमात्रं ब्रह्म ज्ञातव्यतयोक्तमिति वदन्ति, तेषां * जन्माद्यस्य यतः * शास्त्रयोनित्वात् * तत्तु समन्वयात् * ईक्षतेर्नाशब्दम् * इत्यादेः, * जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च * भोगमात्रसाम्यलिङ्गाच्च * अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् * इत्यन्तस्य सूत्रगणस्य ब्रह्मणो जगत्कारणत्वबहुभवनसङ्कल्परूपेक्षणाद्यनन्तविशेषप्रतिपादनपरत्वात्सर्वं सूत्रजातम्, सूत्रकारोदाहृताः * यतो वा इमानि भूतानि जायन्ते * तदैक्षत बहु स्यां प्रजायेयेति * इत्याद्यास्सर्वश्रुतयश्च न सङ्गच्छन्ते । अथोच्येत— * येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय * यथा सोम्यैकेन मृत्पिण्डेनेत्येकमृत्पिण्डारब्धघटशरावादीनां तन्मृत्पिण्डादनन्यद्रव्यतया तज्ज्ञानेन तेषां ज्ञाततेव, ब्रह्मज्ञानेन तदारब्धस्य

कृत्स्नस्य चिदचिदात्मकस्य जगतस्तस्मादनतिरिक्तवस्तुतया ज्ञातता संभवतीत्युपपाद्य, * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितीदंशब्दवाच्यस्य चिदचिदात्मकप्रपञ्चस्य सृष्टेः प्राक् निखिलभेदप्रहाणेन सच्छब्दवाच्यैकतापत्तिं घटशरावाद्युत्पत्तेः प्रागुत्पादकमृत्पिण्डैकतापत्तिवदभिधाय, * तदैक्षत बहु स्यामिति तदेव सच्छब्दवाच्यं ब्रह्म चिदचिदात्मकप्रपञ्चरूपेणात्मनो बहुभवनमेकमृत्पिण्डस्य घटशरावादिरूपेण बहुभवनवत्सङ्कल्प्यात्मानमेव तेजःप्रभृतिजगदाकारेणासृजतेति चाभिधाय, * ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि * इत्यभिधानात् ब्रह्मैकमेवाविद्याकृतेन पारमार्थिकेन वा उपाधिना सबद्धं देवादिरूपेण बहुभूतमिति वेदविद्भिरभ्युपगन्तव्यमिति ; तदयुक्तम् ; * ज्ञाज्ञौ द्वावजावीशनीशौ * नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् * इत्यादिश्रुतिभिः जीवानामजत्वनित्यत्वबहुत्ववचनात् । यदि घटशरावादेरुत्पत्तेः प्रागेकीभूतस्य मृद्द्रव्यस्योत्पत्त्युत्तरकालभाविबहुत्ववत् सृष्टेः प्रागेकीभूतस्यैव ब्रह्मणस्सृष्ट्युत्तरकालीनं नानाविधजीवरूपेण बहुत्वमुच्येत ; तदा जीवानामजत्वनित्यत्वबहुत्वादि विरुध्येत ; सूत्रविरोधश्च, * इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति ब्रह्मैव देवमनुष्यादिजीव(स्व)रूपेण बहुभूतं चेदात्मनो हिताकरणादिदोषप्रसक्तिरित्युक्त्वा, * अधिकं तु भेदनिर्देशादिति जीवाद्ब्रह्मणोऽर्थान्तरत्वमुक्तम् । तथा च * वैषम्यनैर्घृण्ये न सापेक्षत्वात् * इति देवादिविषमसृष्टिप्रयुक्तपक्षपातनैर्घृण्ये जीवानां पूर्वपूर्वकर्मापेक्षत्वाद्विषमसृष्टेरिति परिहृते । तथा * न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च * इति, * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् * इति सृष्टेः प्रागविभागवचनात् सृष्टेः प्राग्जीवानामभावात्तत्कर्म न संभवतीति परिचोद्य, जीवानां तत्कर्मप्रवाहाणां चानादित्वादिति परिहृतम् । * नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः * इत्यात्मन उत्पत्त्यभावश्चोक्तो नित्यत्वं च स्वाभ्युपगमविरोधश्च । आमोक्षाज्जीवभेदस्यानादित्वं सर्वैरेव हि वेदान्तिभिरभ्युपगम्यते । अतश्श्रुतिविरोधात्सूत्रविरोधात्स्वाभ्युपगमविरोधाच्च सृष्टेः प्रागेकत्वावधारणं नामरूपविभागाभावाभिप्रायम् , नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशक्तिभेदसहं चेति सर्वैरभ्युपगम्यते । इयांस्तु विशेषः— अविद्यापरिकल्पनेऽप्युपाधिपरिकल्पनेऽपि ब्रह्मव्यतिरिक्तस्याविद्यासंबन्धिनश्चोपाधिसंबन्धिनश्चेतनस्याभावादविद्योपाधिसंबन्धौ, तत्कृताश्च दोषा ब्रह्मण एव भवेयुः— इति ।

सन्मात्रब्रह्मवादेऽपि प्राक्सृष्टेस्सन्मात्रं ब्रह्मैकमेव सृष्ट्युत्तरकालं भोक्तृभोग्यनियन्तृरूपेण त्रिधा भूतं चेत् , घटशरावमणिकवज्जीवेश्वरयोरुत्पत्तिमत्त्वमनित्यत्वञ्च स्यात । अथैकत्वापत्तिवेलायामपि भोक्तृभोग्यनियन्तृशक्तित्रयमवस्थितमिति चेत , किमिदं शक्तित्रयशब्दवाच्यमिति विवेचनीयम् । यदि सन्मात्रस्यैकस्यैव भोक्तृभोग्यनियन्तृरूपेण परिणामसामर्थ्यं शक्तित्रयशब्दवाच्यम् ; एवं तर्हि मृत्पिण्डस्य घटशरावादिपरिणामसमर्थस्य तदुत्पादकत्वमिव ब्रह्मण ईश्वरादीनामुत्पादकत्वमिति तेषामनित्यत्वमेव । अथेश्वरादीनां सूक्ष्मरूपेणावस्थितिरेव शक्तिरित्युच्येत ; तर्हि तदतिरिक्तस्य सन्मात्रस्य ब्रह्मणः, प्रमाणाभावात्तदभ्युपगमे च तदुत्पाद्य-

तयेश्वरादीनामनित्यत्वप्रसङ्गाच्च त्रयाणां नामरूपविभागानर्हसूक्ष्मदशापत्तिरेव प्राक्सृष्टेरेकत्वावधारणावसेयेति वक्तव्यम्। न तदा तेषां ब्रह्मात्मकत्वादेकत्वावधारणं विरुध्येत। अतस्सर्वावस्थावस्थितस्य चिदचिद्वस्तुनः ब्रह्मशरीरत्वश्रुतेस्सर्वदा सर्वशब्दैर्ब्रह्मैव तत्तच्छरीरकतया तत्तद्विशिष्टमेवाभिधीयत इति स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्मैव कार्यभूतं जगत्, नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म कारणमिति तदेव मृत्पिण्डस्थानीयं * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् * इत्युच्यते; तदेव विभक्तनामरूपचिदचिद्वस्तुविशिष्टं ब्रह्म कार्यमिति सर्वं समञ्जसम्। श्रुतिन्यायविरोधस्तु तेषां भाष्ये प्रपञ्चित इति नेह प्रतन्यते॥

भाष्योदितोऽधिकरणार्थस्ससूत्रविवरणस्सुखग्रहणाय संक्षेपेणोपन्यस्यते। तत्र प्रथमे पादे प्रधानपुरुषावेव जगत्कारणतया वेदान्ताः प्रतिपादयन्तीत्याशङ्क्य सर्वज्ञं सत्यसङ्कल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम्। द्वितीयतृतीयचतुर्थपादेषु कानिचिद्वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम्। तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये निरूपितानि; स्पष्टलिङ्गकानि तृतीये; चतुर्थे तु प्रधानानादिप्रतिपादनच्छायानुसारीणीति विशेषः। अतः प्रथमेऽध्याये सर्वं वेदान्तवाक्यजातं सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तं ब्रह्मैव जगत्कारणतया प्रतिपादयतीति स्थापितम्। द्वितीयेऽध्याये तस्यार्थस्य दुर्धर्षणत्वप्रतिपादनेन द्रढिमोच्यते। तत्र प्रथमे पादे साङ्ख्यादिस्मृतिविरोधान्न्यायविरोधाच्च प्रसक्तो दोषः परिहृतः। द्वितीये तु साङ्ख्यादिवेदबाह्यपक्षप्रतिक्षेपमुखेन तस्यैवादरणीयता स्थिरीकृता। तृतीयचतुर्थयोर्वेदान्तवाक्यानामन्योन्यविप्रतिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्यताप्रकारो विशोध्यते। तत्र तृतीये पादे च चिदचित्प्रपञ्चस्य ब्रह्मकार्यत्वे सत्यप्यचिदंशस्य स्वरूपान्यथाभावेन कार्यत्वम्; चिदंशस्य स्वभावान्यथाभावेन ज्ञानसङ्कोचविकासरूपेण कार्यतोदिता; चतुर्थे तु जीवोपकरणानामिन्द्रियादीनामुत्पत्तिप्रकारः। इति प्रथमेनाध्यायद्वयेन मुमुक्षुभिरुपास्यं निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासङ्ख्येयकल्याणगुणगणं, निखिलजगदेककारणं ब्रह्मेति प्रतिपादितम्। उत्तरेण द्वयेन ब्रह्मोपासनप्रकारस्तत्फलभूतमोक्षस्वरूपञ्च चिन्त्यते। तत्र तृतीयस्य प्रथमे पादे ब्रह्मोपासिसिषोत्पत्तये जीवस्य संसरतो दोषाः कीर्तिताः। द्वितीये च उपासिसिषोत्पत्तय एव ब्रह्मणो निरस्तनिखिलदोषताकल्याणगुणाकरतारूपोभयलिङ्गता प्रतिपाद्यते। तृतीये तु ब्रह्मोपासनैकत्वनानात्वविचारपूर्वकमुपासनेषूपसंहार्यानुपसंहार्यगुणविशेषाः प्रपञ्चिताः। चतुर्थे तूपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वमुक्तम्। चतुर्थेऽध्याये ब्रह्मोपासनफलचिन्ता क्रियते। तत्र प्रथमे पादे ब्रह्मोपासनफलं वक्तुम् उपासनस्वरूपपूर्वकोपासनानुष्ठानप्रकारो विद्यामाहात्म्यं चोच्यते। द्वितीये तु ब्रह्मोपासीनानां ब्रह्मप्राप्तिगत्युपक्रमप्रकारश्चिन्तितः। तृतीये तु अर्चिरादिगतिस्वरूपम्, अर्चिरादिनैव ब्रह्मप्राप्तिरिति च प्रतिपाद्यते। चतुर्थे तु मुक्तस्य ब्रह्मानुभवप्रकारश्चिन्त्यते। अतो मुमुक्षुभिः ज्ञातव्यं निरस्तनिखिलदोषगन्धम्, अनवधिकातिशयासङ्ख्येयकल्याणगुणगणाकरं, निखिलजगदेककारणं परं ब्रह्म; तज्ज्ञानञ्च मोक्षसाधनमसकृदा-

वृत्तस्मृतिसन्तानरूपमुपासनात्मकम् उपासनफलं च अर्चिरादिना परं ब्रह्मोपसंपद्य स्वस्वरूपभूतज्ञानादिगुणाविर्भावपूर्वकानन्तमहाविभूत्यनवधिकातिशयानन्दब्रह्मानुभवोऽपुनरावृत्तिरूप इति शारीरकशास्त्रेणोक्तं भवति ॥

१. ॐ अथातो ब्रह्मजिज्ञासा। ब्रह्ममीमांसा विषयः, सा किमारम्भणीया? उतानारम्भणीया? इति संशयः। तदर्थं परीक्ष्यते— वेदान्ताः किं ब्रह्मणि प्रमाणम्? उत न? इति। तदर्थं परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्यावधारणं संभवति नेति। न संभवतीति पूर्वः पक्षः। संभवतीति राद्धान्तः। यदा न संभवति, तदा परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्याभावात्सिद्धरूपे ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाराकारा ब्रह्ममीमांसा नारंभणीया। यदा संभवति, तदा सिद्धेऽप्यर्थे शब्दस्य बोधजननसामर्थ्यसंभवाद्वेदान्ताः ब्रह्मणि प्रमाणमिति सा चारम्भणीया स्यात्। अत्र पूर्वपक्षवादी मन्यते— वृद्धव्यवहारादन्यत्र व्युत्पत्त्यसंभवात्, व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्य एवार्थे शब्दशक्त्यवधारणात्, परिनिष्पन्नेऽर्थे ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाररूपा ब्रह्ममीमांसा नारम्भणीयेति। सिद्धान्तस्तु— बालानां मातापितृप्रभृतिभिरम्बातातमातुलशशिपशुपक्षिमृगादिषु अङ्गुल्या निर्दिश्य तत्तदभिधायिनश्शब्दान्प्रयुञ्जानैः क्रमेण बहुशः शिक्षितानां तत्तच्छब्दश्रवणसमनन्तरं स्वात्मानमेव तदर्थबुद्ध्युत्पत्तिदर्शनात्, शब्दार्थयोस्संबन्धान्तरादर्शनात्, सङ्केतयितृपुरुषाज्ञानाच्च, बोध्यबोधकभाव एव शब्दार्थयोस्संबन्ध इति निश्चिन्वानानां परिनिष्पन्नेऽर्थे शब्दस्य बोधकत्वावधारणं संभवतीति ब्रह्मणि वेदान्तवाक्यानां प्रामाण्यात्तदर्थविचाराकारा ब्रह्ममीमांसा आरम्भणीयेति ॥

सूत्रार्थस्तु— अथेत्यानन्तर्ये। अतः इति च वृत्तस्य हेतुभावे। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ज्ञातुमिच्छा जिज्ञासा। इच्छायाः इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिहाभिप्रेतम्। पूर्ववृत्तादल्पास्थिरफलकेवलकर्माधिगमादनन्तरं तत एव हेतोरनन्तस्थिरफलब्रह्माधिगमः कर्तव्य इति ॥ १ ॥ इति जिज्ञासाधिकरणम् ॥ १ ॥

२. जन्माद्यस्य यतः। तैत्तिरीयके "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म" इत्येतद्वाक्यं विषयः। किमेतज्जिज्ञास्यतया प्रतिज्ञातं ब्रह्म जगज्जन्मादिकारणतया लक्षणतः प्रतिपादयितुं शक्नोति न वेति संशयः। न शक्नोतीति पूर्वः पक्षः। कुतः? जगज्जन्मादीनामुपलक्षणतया विशेषणतया वा ब्रह्मलक्षणत्वासंभवात्। उपलक्षणत्वे ह्युपलक्ष्यस्याकारान्तरयोगोऽपेक्षितः। न चेह तदस्ति। अतः उपलक्षणत्वं न संभवति। विशेषणत्वेऽप्यनेकविशेषणविशिष्टतया अपूर्वस्यैकस्य प्रतिपादकत्वं न संभवति; विशेषणानां व्यावर्तकत्वेन विशेषणबहुत्वे ब्रह्मबहुत्वप्रसक्तेः। राद्धान्तस्तु— एकस्मिन्नविरुद्धानां विशेषणानामनेकत्वेऽपि श्यामत्वयुवत्वादिविशिष्टदेवदत्तवज्जगज्जन्मादिविशिष्टं

ब्रह्मैकमेव विशेष्यं भवति। उपलक्षणत्वे जन्मादिभिरुपलक्ष्यस्य ब्रह्मशब्दावगतबृहत्त्वाद्याकाराश्च सन्तीति जगज्जन्मादिकारणं ब्रह्मेति लक्षणतः प्रतिपादयितु शक्नोतीति। सूत्रार्थः— अस्य विविधविचित्रभोक्तृभोग्यपूर्णस्य जगतः यतः जन्मादि, तद्ब्रह्मेति प्रतिपादयितुं शक्नोत्येतद्वाक्यमिति ॥ २ ॥ इति जन्माद्यधिकरणम् ॥ २ ॥

३. **शास्त्रयोनित्वात्**। * यतो वा इमानीत्यादिवाक्यमेव विषयः। तत्किं जगत्कारणे ब्रह्मणि प्रमाणम्? उत नेति संशयः। नैतत्प्रमाणमिति पूर्वः पक्षः। अनुमानसिद्धब्रह्मविषयत्वात्। प्रमाणान्तराविषये हि शास्त्रं प्रमाणम्। जगतस्सावयवत्वेन कार्यत्वात, कार्यस्य स्वोपादानोपकरणसंप्रदानप्रयोजनाद्यभिज्ञकर्तृकत्वात, जगन्निर्माणकार्यचतुरः कर्मपरवशपरिमितशक्त्यादिक्षेत्रज्ञविलक्षणस्सर्वज्ञस्सर्वशक्तस्सर्वेश्वरोऽनुमानसिद्ध इति तस्मिन् * यतो वा इमानि भूतानीत्यादिवाक्यं न प्रमाणमिति ॥ राद्धान्तस्तु – जगतः कार्यत्वेऽपि एकदैवैकेनैव कृत्स्नं जगन्निर्मितमित्यत्र प्रमाणाभावात्: क्षेत्रज्ञानामेव विलक्षणपुण्यानां ज्ञानशक्तिवैचित्र्यसंभावनया कदाचित् कस्यचिज्जगदेकदेशनिर्माणसामर्थ्यसंभवात्, तदतिरिक्तपुरुषानुमानं न संभवतीति शास्त्रैकप्रमाणकत्वात् ब्रह्मणस्तत्प्रतिपादकत्वेन तस्मिन् * यतो वा इमानि भूतानीत्यादिवाक्यं प्रमाणमिति। शास्त्रं योनिः यस्य कारणं प्रमाणं तत् ब्रह्म शास्त्रयोनि, प्रमाणान्तराविषयत्वेन शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः तस्मिन् * यतो वा इमानीत्यादि वाक्यं प्रमाणमिति सूत्रार्थः ॥ ३ ॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

४. **तत्तु समन्वयात्**। ब्रह्मणश्शास्त्रप्रमाणकत्वं सम्भवति, नेति विचार्यते। न संभवतीति पूर्वः पक्षः। कुतः? प्रवृत्तिनिवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेण पुरुषार्थत्वात् पुरुषार्थावबोधकत्वेन च शास्त्रस्य प्रामाण्यान्मोक्षसाधनब्रह्मध्यानविधिपरत्वेऽसत्यपि ब्रह्मणि तद्ध्यानविधानसंभवात् न ब्रह्मसद्भावे तात्पर्यमिति ब्रह्मणश्शास्त्रप्रमाणकत्वं न सभवतीति। राद्धान्तस्तु— अतिशयितगुणपितृपुत्रादिजीवनज्ञानवत अनवधिकातिशयानन्दस्वरूपब्रह्मज्ञानस्य निरतिशयपुरुषार्थत्वात्तस्य शास्त्रप्रमाणकत्वं संभवति, * आनन्दो ब्रह्म * यदेष आकाश आनन्दो न स्यात् * यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् * इत्यादिभिरनवधिकातिशयानन्दस्वरूप ब्रह्मेति हि प्रतिपाद्यते। अतो ब्रह्म स्वेन परेण वाऽप्यनुभूयमानं निरतिशयानन्दस्वरूपमेवेति तत्प्रतिपादनपरस्यैव साक्षात्पुरुषार्थान्वयः। प्रवृत्तिनिवृत्तिपरस्य तु तत्साध्यफलसंबन्धात्पुरुषार्थान्वयः— इति ॥

सूत्रार्थः— तुशब्दः प्रसक्ताशङ्कानिवृत्त्यर्थः। तत्— पूर्वसूत्रोदितं ब्रह्मणश्शास्त्रयोनित्वं सिद्ध्यति। समन्वयात्— सम्यक् पुरुषार्थतयाऽन्वयः समन्वयः। वेदितुर्निरतिशयानन्दस्वरूपत्वेन परमपुरुषार्थरूपे परे ब्रह्मणि वेदकतया शास्त्रस्यान्वयात् ब्रह्मणश्शास्त्रप्रमाणकत्वं सिद्ध्यत्येवेति ॥ ४ ॥ इति समन्वयाधिकरणम् ॥

५. **ईक्षतेर्नाशब्दम्** । * येनाश्रुतं श्रुतं भवतीत्यादि जगत्कारणवादिवेदान्तवेद्यं विषयः । तत्किं साङ्ख्योक्तं प्रधानम्, उतानवधिकातिशयानन्दं ब्रह्मेति संशयः । प्रधानमिति पूर्वः पक्षः । कुतः ? प्रतिज्ञादृष्टान्तान्वयेनानुमानाकारवाक्यवेद्यत्वात् * येनाश्रुतं श्रुतं भवतीत्यादिना एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय * यथा सोम्यैकेन मृत्पिण्डेनेति दृष्टान्तेन ह्युपपाद्यते । एवमानुमानिकमेवैतद्वाक्यवेद्यमिति निश्चीयते । * सदेव सोम्येदमिति सच्छब्दः प्रधानविषयः । * तदैक्षत बहु स्यामिति च गौणमीक्षणं भवितुमर्हति, * तत्तेज ऐक्षतेत्यादिगौणेक्षणसाहचर्याच्च । राद्धान्तस्तु— * तदैक्षत बहु स्यामिति बहुभवनसङ्कल्परूपेक्षणान्वयात् * सदेव सोम्येति कारणवाचिसच्छब्दविषयो नाचेतनं प्रधानम्; अपि तु सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तं परं ब्रह्मैवेति निश्चीयते । न चानुमानाकारमेतद्वाक्यम् । हेत्वनुपादानात् । अन्यज्ञानेनान्यज्ञानासंभवपरिजिहीर्षया तु दृष्टान्तोपादानम्, न च मुख्येक्षणसंभवे गौणपरिग्रहसंभवः । तेजःप्रभृतिष्वपि न गौणमीक्षणम्, तेजआदिशब्दानां तेजःप्रभृतिशरीरकस्यान्तर्यामिणो वाचकत्वादिति परमेव ब्रह्म जगत्कारणवादिवेदान्तवेद्यमिति ॥

सूत्रार्थः— ईक्षतेरिति ईक्षतिधात्वर्थः ईक्षणम् । शब्दः प्रमाणं यस्य न भवति तत्, अशब्दं परोक्तमानुमानिकं प्रधानम् । * सदेव सोम्येदमिति जगत्कारणतया प्रतिपादितान्वयिनः ईक्षणव्यापारान्नाचेतनमशब्दं तत्; अपि तु सर्वज्ञं सत्यसङ्कल्पं ब्रह्मैव जगत्कारणमिति निश्चीयते — इति ॥ ५ ॥

६. **गौणश्चेन्नात्मशब्दात्** । * तत्तेज ऐक्षतेत्यचेतनगतगौणेक्षणसाहचर्यात् * तदैक्षतेत्यत्र ईक्षतिर्गौण इति चेन्न; आत्मशब्दात्, सच्छब्दाभिहिते ईक्षितरि * ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा * इति श्रूयमाणाच्चेतनवाचिनः, आत्मशब्दादयमीक्षतिर्मुख्य एवेति प्रतीयते । * ऐतदात्म्यमिदं सर्वमिति तेजःप्रभृतीनामपि तदात्मकत्वावगमात् तेजःप्रभृतीक्षणमपि मुख्यमेवेत्यभिप्रायः ॥ ६ ॥

७. **तन्निष्ठस्य मोक्षोपदेशात्** । इतश्च सच्छब्दाभिहितं न प्रधानम् । अपि तु परमेव ब्रह्म । * तत्त्वमसीति सदात्मकतया प्रत्यगात्मानुसन्धाननिष्ठस्य * तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये * इति मोक्षोपदेशात्तत्कारणं परमेव ब्रह्म ॥ ७ ॥

८. **हेयत्वावचनाच्च** । यदि प्रधानमिह कारणतया विवक्षितम्, तदा तस्य मोक्षविरोधित्वाद्धेयत्वमुच्येत । न चोच्यते । अतश्च न प्रधानम् ॥ ८ ॥

९. **प्रतिज्ञाविरोधात्** । प्रधानवादे प्रतिज्ञा च विरुध्यते । * येनाश्रुतं श्रुतमिति वक्ष्यमाणकारणविज्ञानेन चेतनाचेतनमिश्रकृत्स्नप्रपञ्चज्ञानं हि प्रतिज्ञातम् । चेतनांशं प्रति प्रधानस्याकारणत्वात्, तज्ज्ञानेन चेतनांशो न ज्ञायत इति न प्रधानं कारणम् ॥ ९ ॥

१०. **स्वाप्ययात्**। * स्वमपीतो भवति....सता सोम्य तदा संपन्नो भवति * इति जीवस्य सुषुप्तस्य स्वाप्ययश्रुतेः। स्वकारणे ह्यप्ययः स्वाप्ययः। जीवं प्रति प्रधानस्याकारणत्वात्स्वाप्ययश्रुतिर्विरुध्यते। अतश्च न प्रधानम्। अपि तु ब्रह्मैव ॥ १० ॥

११. **गतिसामान्यात्**। इतरोपनिषद्गतिसामान्यादस्यां चोपनिषदि न प्रधानं कारणं विवक्षितम्। इतरासु चोपनिषत्सु— * यस्सर्वज्ञस्सर्ववित् ...तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते * परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च * स कारणं करणाधिपाधिपः * आत्मनि खल्वरे विदिते सर्वमिदं विज्ञातं भवति * तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदः * पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् * तस्माद्विराडजायत * आत्मा वा इदमेक एवाग्र आसीत्....स इमांल्लोकानसृजत * एको ह वै नारायण आसीत्... स एकाकी न रमेत * इति सर्वज्ञः पुरुषोत्तम एव कारणतया प्रतिपाद्यते। अस्याश्च तद्गतिसामान्यादत्रापि स एव कारणतया प्रतिपादनमर्हतीति च न प्रधानम् ॥ ११ ॥

१२. **श्रुतत्वाच्च**। श्रुतमेव ह्यस्यामुपनिषदि— * आत्मत एवेदं सर्वम् * इति। अतश्च * सदेव सोम्येत्यादिजगत्कारणवादिवेदान्तवेद्यं न प्रधानम्; सर्वज्ञं सत्यसङ्कल्पं परमेव ब्रह्मेति स्थितम् ॥ १० ॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥

१३. **आनन्दमयोऽभ्यासात्**। तैत्तिरीयके— * तस्माद्वा एतस्मादात्मन आकाशस्संभूतः * इति प्रकृत्य * तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः * इत्यत्र जगत्कारणतयाऽवगत आनन्दमयः किं प्रत्यगात्मा, उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः। कुतः? * तस्यैष एव शारीर आत्मा * इति आनन्दमयस्य शारीरत्वश्रवणात्। शारीरो हि शरीरसंबन्धी। स च प्रत्यगात्मैव। तस्य चेतनत्वेनेक्षापूर्विका च सृष्टिरुपपद्यत इति। राद्धान्तस्तु— * सैषाऽऽनन्दस्य मीमांसा भवति * इत्यारभ्य, * यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् * इति निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः प्रत्यगात्मनोऽर्थान्तरभूतस्य परस्यैव ब्रह्मण इति निश्चीयते। शारीरात्मत्वञ्च परमात्मन एव, * तस्माद्वा एतस्मादात्मन आकाशस्संभूतः * इत्याकाशादिजगत्कारणतयाऽवगत एवान्नमयस्य शारीर आत्मेति प्रतीयते, आत्मान्तरानिर्देशात्। श्रुत्यन्तरेषु पृथिव्यक्षरादीनां शरीरत्वं परमात्मन आत्मत्वञ्च श्रूयते * यस्य पृथिवी शरीरमित्यारभ्य, * एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः * इति। अन्नमयस्यात्मैव प्राणमयादिषु * तस्यैष एव शारीर आत्मा, यः पूर्वस्य * इत्यनुकृष्यत इति प्रत्यगात्मनो विज्ञानमयस्य च स एव शारीर आत्मा। आनन्दमये तु * तस्यैष एव शारीर आत्मा, यः पूर्वस्य * इति निर्देशः आनन्दमयस्यानन्यात्मत्वप्रदर्शनार्थः। अतो जगत्कारणतया निर्दिष्ट आनन्दमयः परमात्मैवेति ॥

सूत्रार्थस्तु— आनन्दमयशब्दनिर्दिष्टः आकाशादिजगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा। कुतः? तस्यानन्दस्य निरतिशयत्वप्रतीतिबलात्। * स एको मानुष आनन्दः, ते ये शतम् * इत्याद्यभ्यासात्, तस्य च प्रत्यगात्मन्यसंभावितस्य तदतिरिक्ते परमात्मन्येव संभवात् ॥ १३ ॥

१४. **विकारशब्दान्नेति चेन्न प्राचुर्यात्।** आनन्दमय इति विकारार्थान्मयट्छब्दान्नायमविकृतः परमात्मा। अस्य च विकारार्थत्वमेव युक्तम्, * अन्नमयः इति विकारोपक्रमादिति चेन्न; प्रत्यगात्मन्यपि * न जायते म्रियते वा * इत्यादिविकारप्रतिषेधात्प्राचुर्यार्थ एवात्र मयडिति निश्चयात्। अस्मिंश्चानन्दे, * यतो वाचो निवर्तन्ते * इत्यादि वक्ष्यमाणात्प्राचुर्यादयमानन्दप्रचुरः परमात्मैव। न ह्यनवधिकातिशयरूपः प्रभूतानन्दः प्रत्यगात्मनि संभवति ॥ १४ ॥

१५. **तद्धेतुव्यपदेशाच्च।** * एष ह्येवानन्दयाति * इति जीवान्प्रत्यानन्दयितृत्वव्यपदेशाच्चायं परमात्मैव ॥ १५ ॥

१६. **मान्त्रवर्णिकमेव च गीयते।** * सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णोदितं ब्रह्मैव, * तस्माद्वा एतस्मादात्मनः * इत्यारभ्य * आनन्दमयः * इति च गीयते; ततश्चानन्दमयो ब्रह्म ॥ १६ ॥

प्रत्यगात्मनः परिशुद्धं स्वरूपं मन्त्रवर्णोदितमित्याशङ्क्याह—

१७. **नेतरोऽनुपपत्तेः।** परस्माद्ब्रह्मणः इतरः प्रत्यगात्मा न मन्त्रवर्णोदितः, तस्य * विपश्चिता ब्रह्मणेति विपश्चित्त्वानुपपत्तेः; विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम्; तच्च * सोऽकामयत, बहु स्यां प्रजायेय * इत्यादिवाक्योदितनिरुपाधिकबहुभवनसङ्कल्परूपं सर्वज्ञत्वम्। तत्तु प्रत्यगात्मनः परिशुद्धस्यापि न संभवति, * जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च * इति वक्ष्यमाणत्वात्। अतः परं ब्रह्मैव मान्त्रवर्णिकम् ॥ १७ ॥

१८. **भेदव्यपदेशाच्च।** * भीषाऽस्माद्वातः पवते * इत्यादिना अग्निवायुसूर्यादिजीववर्गस्यानन्दमयात्प्रशासितुः प्रशासितव्यत्वेन भेदो व्यपदिश्यते। अतश्चानन्दमयः परमात्मेति। योजनान्तरम्— * तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः * इति विज्ञानमयाज्जीवादानन्दमयस्य भेदो व्यपदिश्यते। विज्ञानमयो हि जीव एव न बुद्धिमात्रम्, मयट्छ्रुतेः। अतश्चानन्दमयः परमात्मा ॥ १८ ॥

१९. **कामाच्च नानुमानापेक्षा।** * सोऽकामयत * इत्यारभ्य * इदं सर्वमसृजतेति कामादेव जगत्सर्गश्रवणात् अस्यानन्दमयस्य जगत्सर्गे नानुमानगम्यप्रकृत्यपेक्षा प्रतीयते। प्रत्यगात्मनो यस्यकस्यचिदपि सर्गे प्रकृत्यपेक्षाऽस्ति। अतश्चायं प्रत्यगात्मनोऽन्यः परमात्मा ॥ १९ ॥

२०. **अस्मिन्नस्य च तद्योगं शास्ति।** * रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति * इति अस्मिन्— आनन्दमये रसशब्दनिर्दिष्टे, अस्य- अयंशब्दनिर्दिष्टस्य जीवस्य, तल्लाभादानन्दयोगं शास्ति शास्त्रम्। प्रत्यगात्मनो यल्लाभादानन्दयोगः स तस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्म ॥ २० ॥
इति आनन्दमयाधिकरणम् ॥ 6 ॥

२१. **अन्तस्तद्धर्मोपदेशात्।** छान्दोग्ये * य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते * य एषोऽन्तरक्षिणि पुरुषो दृश्यते * इत्यक्ष्यादित्याधारतया श्रूयमाणः पुरुषः किं जीवविशेषः, उत परमपुरुष इति संशयः। जीवविशेष इति पूर्वः पक्षः। कुतः? सशरीरत्वात्। शरीरसंयोगो हि कर्मवश्यस्य जीवस्य स्वकर्मफलभोगायेति। राद्धान्तस्तु * स एष सर्वेभ्यः पाप्मभ्य उदित * इत्यादिना अपहतपाप्मत्वपूर्वकसर्वलोककामेशत्वोपदेशात्, तेषां च जीवेष्वसंभवात्, अयमक्ष्यादित्याधारः पुरुषोत्तम एव। स्वासाधारणविलक्षणरूपवत्त्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवत् तस्य संभवति। श्रूयते च तद्रूपस्याप्राकृतत्वम् * आदित्यवर्णं तमसस्तु पारे * इत्यादौ। सूत्रार्थस्तु— आदित्याद्यन्तश्श्रूयमाणः पुरुषः परं ब्रह्म। तदसाधारणादपहतपाप्मत्वादिधर्मोपदेशात् ॥ २१ ॥

२२. **भेदव्यपदेशाच्चान्यः।** * य आदित्ये तिष्ठन्नादित्यादन्तरः * य आत्मनि तिष्ठन्नात्मनोऽन्तरः * इत्यादिभिः जीवाद्भेदव्यपदेशाच्चायं जीवादन्यः परमात्मैव ॥ २२ ॥ इति अन्तरधिकरणम् ॥ 7 ॥

२३. **आकाशस्तल्लिङ्गात्।** छान्दोग्ये * अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति * इत्यत्र आकाशशब्दनिर्दिष्टं जगत्कारणं किं प्रसिद्धाकाशः, उत समस्तचिदचिद्वस्तुविलक्षणं ब्रह्मेति संशयः। प्रसिद्धाकाश इति पूर्वः पक्षः। कुतः? आकाशशब्दस्य लोके तत्रैव व्युत्पत्तेः, * यतो वा इमानि भूतानीत्यादिसामान्यलक्षणस्य सदादिशब्दानामपि साधारणत्वेन * आकाशादेव समुत्पद्यन्ते * इति विशेषे पर्यवसानात्; ईक्षणादयोऽपि आकाश एव जगत्कारणमिति निश्चिते सति गौणा वर्णनीया इति। राद्धान्तस्तु— * सर्वाणि ह वा इमानि भूतानीति प्रसिद्धवन्निर्देशात्, प्रसिद्धेश्चेक्षापूर्वकत्वात्, चिदचिद्वस्तुविलक्षणं सर्वज्ञं ब्रह्माकाशशब्दनिर्दिष्ट-

मिति। सूत्रार्थस्तु— आकाशशब्दनिर्दिष्टं परमेव ब्रह्म, प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादि-लिङ्गात् ॥ २३ ॥ इति आकाशाधिकरणम् ॥ ८ ॥

२४. अत एव प्राणः। छान्दोग्ये * प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ※ इति प्रस्तुत्य ※ कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता * इत्यत्र निखिलजगत्कारणतया प्राणशब्दनिर्दिष्टः किं प्रसिद्धः प्राणः, उतोक्तलक्षणं ब्रह्मेति संशयः। प्रसिद्धप्राण इति पूर्वः पक्षः। कुतः? सर्वस्य जगतः प्राणायत्तस्थितिदर्शनात् स एव निखिलजगदेककारणतया निर्देशमर्हतीति। राद्धान्तस्तु— शिलाकाष्ठादिष्वचेतनेषु चेतनस्वरूपेषु च प्राणायत्तस्थित्यभावात्, * सर्वाणि ह वा इमानि भूतानीति प्रसिद्धवन्निर्देशादेव हेतोः प्राणशब्दनिर्दिष्टं परमेव ब्रह्म। सूत्रमपि व्याख्यातम् ॥ २४ ॥ इति प्राणाधिकरणम् ॥ ९ ॥

२५. ज्योतिश्चरणाभिधानात्। छान्दोग्ये * अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः * इत्यत्र जगत्कारणत्व-व्याप्तनिरतिशयदीप्तियुक्ततया ज्योतिश्शब्दनिर्दिष्टं किं प्रसिद्धादित्यादि ज्योतिः, उत परमेव ब्रह्मेति संशयः, प्रसिद्धज्योतिरिति पूर्वः पक्षः। कुतः? * इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः * इति कौक्षेयज्योतिषा प्रसिद्धेनैक्यावगमात्, स्ववाक्ये तदतिरिक्तपरब्रह्मासाधारणलिङ्गादर्शनाच्च। राद्धान्तस्तु— प्रसिद्धज्योतिषोऽन्यदेवं परं ब्रह्म इह निरतिशयदीप्तियुक्तं ज्योतिश्शब्दनिर्दिष्टम्। कुतः? * पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि * इति पूर्ववाक्ये द्युसंबन्धितया निर्दिष्टस्यैव चतुष्पदो ब्रह्मणः * अथ यदतः परो दिवो ज्योतिरित्यत्र प्रत्यभिज्ञानात्। तच्च परमेव ब्रह्मेति विज्ञातम्, सर्वेषां भूतानां तस्य पादत्वेन व्यपदेशात्। एवं परब्रह्मत्वे निश्चिते कौक्षेयज्योतिषः तदात्मकत्वानुसन्धानं फलायोपदिश्यत इति ज्ञायते। सूत्रार्थस्तु— ज्योतिश्शब्दनिर्दिष्टं परं ब्रह्म; अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानात्। सर्वभूतपादत्वञ्च परस्यैव ब्रह्मण उपपद्यते ॥ २५ ॥

२६. छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम्। * गायत्री वा इदं सर्वम् * इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात्, सर्वभूतपादत्वेन गायत्र्या एवाभिधानान्न ब्रह्मेति चेत्; नैतत्। तथा चेतोर्पणनिगमात्— गायत्री यथा भवति, तथा ब्रह्मणि चेतोर्पणोपदेशात्। गायत्रीसादृश्यं चतुष्पात्त्वं ब्रह्मण्यनुसन्धेयमित्युपदिश्यते; गायत्र्यास्सर्वात्मकत्वानुपपत्तेरित्यर्थः। तथा हि दर्शनम्— तथा ह्यन्यत्रापि अच्छन्दस एव सादृश्याच्छन्दश्शब्देनाभिधानं दृश्यते * ते वा एते पञ्चान्ये पञ्चान्ये दश संपद्यन्ते * इत्यारभ्य * सैषा विराडन्नादिति ॥ २६ ॥

२७. भूतादिपादव्यपदेशोपपत्तेश्चैवम्। भूतपृथिवीशरीरहृदयानि निर्दिश्य * सैषा चतुष्पदेति भूतादीनां पादत्वव्यपदेशश्च ब्रह्मण्येवोपपद्यत इति ब्रह्मैव गायत्रीशब्दनिर्दिष्टमिति गम्यते ॥ २७ ॥

२८. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्। * पादोऽस्य सर्वा भूतानि, त्रिपाद्स्यामृतन्दिवि * इति पूर्ववाक्योदितं परं ब्रह्मैवास्तु, तथाऽपि * अथ यदतः परो दिवो ज्योतिः * इति द्युसंबन्धमात्रेण नेह तत्प्रत्यभिज्ञायते; तत्र चात्र च उपदेशप्रकारभेदात्। तत्र हि दिवीति द्यौस्सप्तम्या निर्दिश्यते। इह च * दिवः परो ज्योतिरिति पञ्चम्या। ततो न प्रतिसन्धानमिति चेन्न; उभयस्मिन्नपि व्यपदेशे उपरिस्थितिरूपार्थैक्येन प्रतिसन्धानाविरोधात्। यथा वृक्षाग्रे श्येनः, वृक्षाग्रात्परतश्श्येनः इति ॥ २८ ॥ इति ज्योतिरधिकरणम् ॥ 10 ॥

२९. प्राणस्तथाऽनुगमात्। कौषीतकीब्राह्मणे प्रतर्दनविद्यायां * त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे * इति प्रतर्दनेनोक्त इन्द्रः * प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व * इत्याह। अत्र हिततमोपासनकर्मतया निर्दिष्ट इन्द्रप्राणशब्दाभिधेयः, किं जीवः, उत परमात्मेति संशयः। जीव इति पूर्वः पक्षः। कुतः? इन्द्रशब्दस्य जीवविशेषे प्रसिद्धेः, प्राणशब्दस्यापि तत्समानाधिकरणस्य स एवार्थ इति * तं मामायुरमृतमित्युपास्स्व * इति तस्यैवोपास्यत्वोपदेशात् इति। राद्धान्तस्तु — इन्द्रप्राणशब्दनिर्दिष्टं जीवादर्थान्तरभूतं परं ब्रह्म, * स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः * इतीन्द्रप्राणशब्दनिर्दिष्टस्यैव जीवेष्वसंभावितानन्दत्वाजरत्वामृतत्वादिश्रवणात्। सूत्रार्थस्तु— उपास्यतयोपदिष्टम् इन्द्रप्राणशब्दाभिधेयं परं ब्रह्म; तथेति प्रकारवचनः, परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्यानुगमात् ॥ २९ ॥

३०. न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्। नायमुपास्यः परमात्मा— * मामेव विजानीहि * तं मामायुरमृतमित्युपास्स्व * इति प्रज्ञातजीवभावस्येन्द्रस्य वक्तुस्स्वात्मन उपास्यत्वोपदेशात्, उपक्रमे जीवभावनिश्चये सति उपसंहारस्य तदनुगुणतया नेयत्वादिति चेन्न; अध्यात्मसंबन्धभूमा ह्यस्मिन्— आत्मनि संबन्धः अध्यात्मसंबन्धः, तस्य भूमा बहुत्वम्। जीवादर्थान्तरभूतात्मासाधारणधर्मसंबन्धबहुत्वमस्मिन् प्रकरणे उपक्रमप्रभृत्योपसंहारादुपलभ्यते। उपक्रमे तावत् * यं त्वं मनुष्याय हिततमं मन्यसे * इति ह्यनेनोच्यमानमुपासनं परमात्मोपासनमेव, तस्यैव हिततमत्वात्। तथा * एष एव साधु कर्म कारयति * इत्यादिनाऽध्वसाधुकर्मणोः कारयितृत्वं परमात्मन एव धर्मः। तथा * तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः * इति सर्वाधारत्वञ्च तस्यैव धर्मः। आनन्दादयश्च, * एष लोकाधिपतिरेष सर्वेशः * इति च। हीति हेतौ। अतः परं ब्रह्मैवायमित्यर्थः ॥ ३० ॥

परमात्मैवोपास्यश्चेत्; कथमिन्द्रः * मामुपास्स्वेत्युपदिदेश ? इत्यत आह—

३१. **शास्त्रदृष्ट्या तूपदेशो वामदेववत्।** इन्द्रस्य जीवस्यैव सतः स्वात्मत्वेनोपास्यभूत-परमात्मोपदेशोऽयं शास्त्रदृष्ट्या। * अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा * तत्त्वमसि * य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः * एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः * इत्यादीनि हि शास्त्राणि परमात्मानं जीवात्मन आत्मतयोपदिदिशुः। अतो जीवात्मवाचिनश्शब्दाः जीवात्मशरीरकं परमात्मानमेव वदन्तीति शास्त्र-दृष्टार्थस्य तस्य * मामेव विजानीहि * मामुपास्स्वेति स्वात्मशब्देन परमात्मोपदेशो न विरुध्यते। यथा वामदेवश्शास्त्रदृष्ट्या स्वात्मशरीरकं परमात्मानं पश्यन् अहमिति परमात्मानमवोचत्, * तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र * इति ॥ ३१ ॥

३२. **जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्।** * त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम् * यावदस्मिन् शरीरे प्राणो वसति तावदायुः * इति जीवमुख्यप्राणलिङ्गात् नाध्यात्मसंबन्धभूम्ना परमात्मत्वनिश्चय इति चेन्न; परमात्मन एव स्वाकारेण, जीव-शरीरकत्वेन, प्राणशरीरकत्वेन चोपासात्रैविध्याद्धेतोः तत्तच्छब्देनाभिधानमिति निश्चीयते। अन्यत्रापि ब्रह्मो-पासनात्रैविध्यस्याश्रितत्वात्— * सत्यं ज्ञानमनन्तं ब्रह्म * आनन्दो ब्रह्मेति स्वाकारेणोपास्यत्वम्, * सच्च त्यच्चाभवदित्यादिना भोक्तृशरीरकत्वेन, भोग्यशरीरकत्वेन च। इह प्रतर्दनविद्यायामपि तस्य त्रैविध्यस्य संभवात्। अतः इन्द्रप्राणशब्दनिर्दिष्टः परमात्मा ॥ ३२ ॥ इति इन्द्रप्राणाधिकरणम् ॥ 11 ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य प्रथमः पादः ॥

# ॥ अथ प्रथमाध्याये द्वितीयः पादः ॥

३३. **सर्वत्र प्रसिद्धोपदेशात्।** छान्दोग्ये श्रूयते, * सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत. अथ खलु क्रतुमयोऽयं पुरुषः यथा क्रतुरस्मिंल्लोके पुरुषो भवति, तथेतःप्रेत्य भवति, स क्रतुं कुर्वीत मनोमयः प्राणशरीरः * इति। अत्र, * सर्वं खल्विदं ब्रह्मेति सर्वात्मकत्वेन निर्दिष्टं ब्रह्म, किं प्रत्यगात्मा, उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः। सर्वत्र तादात्म्योपदेशो हि तस्यैवोपपद्यते। परस्य तु ब्रह्मणः सकलहेयप्रत्यनीककल्याणैकतानस्य समस्तहेयाकारं सर्वतादात्म्यं विरोधादेव न संभवति। प्रत्यगा-

त्मनो हि कर्मनिमित्तो ब्रह्मादिस्तम्बपर्यन्तसर्वभाव उपपद्यते । सृष्ट्यादिहेतुत्वञ्च तत्तत्कर्मनिमित्तत्वेन सृष्ट्यादे-रुपपद्यते । ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन * तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते * इतिवत्त्रैव वर्तते । राद्धान्तस्तु— * तज्जलानिति, * सर्वं खल्विदं ब्रह्मेति तज्जन्मस्थितिलयहेतुकं तदात्मकत्वं प्रसिद्धवन्निर्दिश्यमानं परस्यैव ब्रह्मण उपपद्यते । परस्माद्ब्रह्मण एव हि जगज्जन्मस्थितिलयाः प्रसिद्धाः * सोऽकामयत बहु स्यां प्रजा-येयेति * इदं सर्वमसृजत * इत्यादिषु । तथा सर्वात्मकत्वञ्च जन्मादिहेतुकं परस्यैव ब्रह्मणः प्रसिद्धम्, * सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः * ऐतदात्म्यमिदं सर्वमिति । हेयप्रत्यनीककल्याणैक-तानात्मनश्च परस्य हेयाकरसर्वभूतात्मत्वमविरुद्धम्; * यः पृथिव्यां तिष्ठन्...यस्य पृथिवी शरीरम् * य आत्मनि तिष्ठन्....यस्यात्मा शरीरं स त आत्माऽन्तर्याम्यमृतः * इत्यादिना शरीरात्मभावेन सर्वात्मत्वोप-पादनात्; शरीरात्मनोश्च स्वभावव्यवस्थानात् । सर्वं ब्रह्मेति सामानाधिकरण्यनिर्देशश्च सर्वशब्दस्य सर्वशरीरे ब्रह्मण्येव प्रवृत्तेरुपपद्यते । शरीरवाची हि शब्दः शरीरिण्यात्मन्येव पर्यवस्यति; देवमनुष्यादिशब्दवत् । सूत्रार्थस्तु– सर्वत्र— * सर्वं खल्विदं ब्रह्मेति निर्दिष्टे वस्तुनि सर्वशब्दवाच्ये सामानाधिकरण्येन तदा-त्मतया निर्दिष्टं परं ब्रह्मैव । कुतः? प्रसिद्धोपदेशात्; * तज्जलानिति, सर्वमिदं ब्रह्म खल्विति प्रसिद्धवत्तस्यो-पदेशात्, सर्वात्मकत्वस्योपदेशाच्च । तदेव हि जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तेषु प्रसिद्धम् ॥ १ ॥

३४. **विवक्षितगुणोपपत्तेश्च ।** मनोमयत्वादिकास्सत्यसङ्कल्पत्वमिश्रा विवक्षिता गुणाः परस्मि-न्नेवोपपद्यन्ते ॥ २ ॥

३५. **अनुपपत्तेस्तु न शारीरः ।** एतेषां गुणानामनन्तदुःखमिश्रपरिमितसुखलवभागिनि अज्ञे कर्मपरवशे शारीरे प्रत्यगात्मन्यनुपपत्तेश्चायं न शारीरः, अपि तु परमेव ब्रह्म ॥ ३ ॥

३६. **कर्मकर्तृव्यपदेशाच्च ।** * एतमितः प्रेत्याभिसंभविताऽस्मि * इति प्राप्यतयोपास्यो निर्दि-श्यते; प्राप्तृतया च जीवः । अतश्च जीवादन्यदेवेदं परं ब्रह्म ॥ ४ ॥

३७. **शब्दविशेषात् ।** * एष म आत्माऽन्तर्हृदये * इति शारीरष्षष्ठ्या निर्दिष्टः, उपास्यः प्रथमया । अतश्च जीवादन्यः ॥ ५ ॥

३८. **स्मृतेश्च ।** * सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च * इति स्मृतेश्च । अतश्च जीवादन्य उपास्यः परमात्मा ॥ ६ ॥

३९. **अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।** * एष म आत्मा-ऽन्तर्हृदये * इति अल्पस्थानत्वात्, * अणीयान्व्रीहेर्वा यवाद्वा * इत्यल्पत्वव्यपदेशाच्च न परं ब्रह्मेति चेन्न ।

निचाय्यत्वादेवम्, एवमुपास्यत्वाद्धेतोरल्पायतनत्वाल्पत्वव्यपदेशः, न स्वरूपाल्पत्वेन, * ज्यायान्पृथिव्या इत्यादिना सर्वस्माज्ज्यायस्त्वोपदेशात्। ज्यायसोऽप्यस्य हृदयायतनावच्छेदेनाल्पत्वानुसन्धानमुपपद्यते। व्योमवत्— यथा महतोऽपि व्योम्नस्सूचीपथादिष्वल्पत्वानुसन्धानम्। चशब्दोऽवधारणे। तद्वदेवेत्यर्थः। स्वाभाविकं चास्य महत्त्वमत्राभिधीयत इत्यर्थः। * ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः * इति ह्यनन्तरमेवोपदिश्यते ॥ ७ ॥

४०. **संभोगप्राप्तिरिति चेन्न वैशेष्यात्।** यद्युपासकशरीरे हृदयेऽयमपि वर्तते; ततस्तद्वदेवास्यापि शरीरप्रयुक्तसुखदुःखसंभोगप्राप्तिरिति चेन्न, हेतुवैशेष्यात्। न हि शरीरान्तर्वर्तित्वमात्रमेव सुखदुःखोपभोगहेतुः; अपि तु कर्मपरवशत्वम्; तत्त्वपहतपाप्मनः परमात्मनो न संभवति ॥ ८ ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

४१. **अत्ता चराचरग्रहणात्।** कठवल्लीष्वाम्नायते * यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः। इति। अत्रौदनोपसेचनसूचितोऽत्ता किं जीवः, उत परमात्मेति संशयः। जीव इति पूर्वः पक्षः। कुतः? भोक्तृत्वस्य कर्मनिमित्तत्वात्, जीवस्यैव तत्संभवात्। राद्धान्तस्तु— सर्वोपसंहारे मृत्यूपसेचनमदनीयं चराचरात्मकं कृत्स्नं जगदिति तस्यैतस्यात्ता परमात्मैव। न चेदं कर्मनिमित्तं भोक्तृत्वम्, अपि तु जगत्सृष्टिस्थितिलयलीलस्य परमात्मनो जगदुपसंहारित्वरूपं भोक्तृत्वम्। सूत्रार्थः— ब्रह्मक्षत्रौदनस्यात्ता परमात्मा, ब्रह्मक्षत्रशब्देन चराचरस्य कृत्स्नस्य जगतो ग्रहणात्। मृत्यूपसेचनो ह्योदनो न ब्रह्मक्षत्रमात्रम्; अपि तु तदुपलक्षितं चराचरात्मकं कृत्स्नं जगदेव ॥ ९ ॥

४२. **प्रकरणाच्च।** * महान्तं विभुमात्मानं मत्वा धीरो न शोचति * नायमात्मा प्रवचनेन लभ्यो न मेधया " इति परस्यैव हीदं प्रकरणम्, अतश्चायं परमात्मा ॥ १० ॥

नन्वनन्तरम् * ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये * इति द्वयोः कर्मफलादनश्रवणात्, परमात्मनश्च कर्मफलादनानन्वयात्, अन्तःकरणद्वितीयो जीव एव तत्रात्तेति प्रतीयते; अतोऽत्रापि स एव जीवोऽत्ता भवितुमर्हतीत्याशङ्क्याह—

४३. **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्।** गुहां प्रविष्टौ जीवात्मपरमात्मानौ; जीवद्वितीयः परमात्मैव तत्र प्रतीयत इत्यर्थः। स्वयमनश्नतोऽपि परमात्मनः प्रयोजकतया पानेऽन्वयो विद्यते। जीवद्वितीयः परमात्मेति कथमवगम्यते? तद्दर्शनात्— तयोरेव ह्यस्मिन्प्रकरणे गुहाप्रवेशव्यपदेशो दृश्यते— * तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।

इति परमात्मनः, * या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत * इति जीवस्य । कर्मफलान्यत्तीत्यदितिर्जीव. ॥ ११ ॥

४४. **विशेषणाच्च ।** अस्मिन्प्रकरणे ह्युपक्रमप्रभृत्योपसंहाराज्जीवपरमात्मानावेवोपास्यत्वोपासकत्व-प्राप्यत्वप्राप्तृत्वादिभिर्विशेष्येते * महान्तं विभुमात्मानं मत्वा धीरो न शोचति * विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् * इत्यादिषु । अतश्चात्ता परमात्मा ॥ २ ॥ इति अत्त्रधिकरणम् ॥

४५. **अन्तर उपपत्तेः ।** छान्दोग्ये * य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृत-मभयमेतद्ब्रह्म * इत्यत्राक्ष्याधारः पुरुषः किं प्रतिबिम्बात्मजीवदेवताविशेषान्यतमः, उत परमात्मेति संशयः । एष्वन्यतम इति पूर्वः पक्षः । कुतः? * य एष दृश्यत इति प्रसिद्धवत्साक्षात्कारनिर्देशात । राद्धान्तस्तु— परमा-त्मैवायमक्ष्याधारः पुरुषः, अक्षिपुरुषसंबन्धितया श्रूयमाणा हि निरुपाधिकात्मत्वामृतत्वाभयत्वब्रह्मत्वसंयद्वामत्वादयः परमात्मन्येवोपपद्यन्ते । प्रसिद्धवन्निर्देशश्च * यश्चक्षुषि तिष्ठन्नित्यादि श्रुत्यन्तरप्रसिद्धेरुपपद्यते । साक्षात्कारश्च-- तदुपासननिष्ठानां योगिनाम् । सूत्रार्थस्तु— अक्ष्यन्तरः परमात्मा, संयद्वामत्वादीनां गुणानामत्रैवोपपत्तेः ॥ १३ ॥

४६. **स्थानादिव्यपदेशाच्च ।** स्थानं– स्थितिः । परमात्मन एव * यश्चक्षुषि तिष्ठन्नित्यादौ चक्षुषि स्थितिनियमनादीनां व्यपदेशाच्चायं परमात्मा ॥ १४ ॥

४७. **सुखविशिष्टाभिधानादेव च ।** * प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति सुखविशिष्टतया प्रकृतस्य परस्यैव ब्रह्मणोऽक्ष्याधारतया उपास्यत्वाभिधानाच्चायं परमात्मा । एवकारोऽस्यैव हेतोर्नैरपेक्ष्यावगमाय ॥ १५ ॥

* प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यत्र सुखविशिष्टं परमेव ब्रह्माभिहितमिति कथमिदमवगम्यते, यावता नामादिवत्प्रतीकोपासनमेवेत्याशङ्क्याह—

४८. **अत एव च स ब्रह्म ।** यतस्तत्र भवभयभीतायोपकोसलाय ब्रह्मस्वरूपजिज्ञासवे * कं च तु खं च न विजानामि * इति पृच्छते * यद्वा व कं तदेव खं यदेव खं तदेव कम् * इत्यन्योन्यव्यवच्छेदक-तया अपरिच्छिन्नसुखस्वरूपं ब्रह्मेत्यभिधाय, * प्राणं च हास्मै तदाकाशं चोचुः * इत्युक्तम् । अत एव खशब्दा-भिधेयस्स आकाशोऽपरिच्छिन्नसुखविशिष्टं परं ब्रह्मैव ॥ १६ ॥

४९. **श्रुतोपनिषत्कगत्यभिधानाच्च ।** श्रुतोपनिषत्कैः— अधिगतपरब्रह्मयाथात्म्यैः ब्रह्मप्राप्तये या गतिरर्चिरादिकाऽधिगन्तव्यतयाऽवगता श्रुत्यन्तरे, तस्याश्चेहाक्षिपुरुषं श्रुतवतोऽधिगन्तव्यतया * तेऽर्चिषमेवाभि-संभवन्ति * इत्यादिनाऽभिधानादक्षिपुरुषः परमात्मा ॥ १७ ॥

५०. **अनवस्थितेरसंभवाच्च नेतरः ।** परमात्मन इतरो जीवादिकः, तस्याक्ष्णि नियमेनानवस्थितेः, अमृतत्वसंयद्वामत्वादीनां चासंभवान्न सोऽक्ष्याधारः ॥ १८ ॥ इति अन्तराधिकरणम् ॥ 3 ॥

५१. **अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ।** बृहदारण्यके * यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः * इत्यादिषु सर्वेषु पर्यायेषु श्रूयमाणोऽन्तर्यामी किं प्रत्यगात्मा, उत परमात्मेति संशयः । प्रत्यगात्मेति पूर्वः पक्षः ; वाक्यशेषे * द्रष्टा....श्रोता....मन्ता * इति द्रष्टृत्वादिश्रुतेः, * नान्योऽतोऽस्ति द्रष्टा * इति द्रष्ट्रन्तरनिषेधाच्च । राद्धान्तस्तु— पृथिव्याद्यात्मपर्यन्तसर्वतत्त्वानां सर्वैस्तैरदृष्टेनैकेन नियमनं निरुपाधिकामृतत्वादिकञ्च परमात्मन एव धर्म इत्यन्तर्यामी परमात्मा । द्रष्टृत्वादिश्च रूपादिसाक्षात्कारः । स च * पश्यत्यचक्षुरित्यादिना परमात्मनोऽप्यस्ति । * नान्योऽतोस्ति द्रष्टेति च जीवेनादृष्टान्तर्यामिद्रष्टृवत्, अन्तर्यामिणाऽप्यदृष्टद्रष्ट्रन्तरनिषेधपर. । सूत्रार्थः— अधिदैवाधिलोकादिपदचिह्नितेषु श्रूयमाणोऽन्तर्यामी परमात्मा, सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियमनसर्वात्मकत्वामृतत्वादिपरमात्मधर्माणां व्यपदेशात् ॥ १९ ॥

५२. **न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ।** स्मार्तं प्रधानम् , शारीरः प्रत्यगात्मा । स्मार्तं च शारीरश्च नान्तर्यामी, तयोरसंभावितोक्तधर्माभिलापात् । यथा स्मार्तस्याचेतनस्यासंभावनया नान्तर्यामित्वप्रसक्तिः, तथा प्रत्यगात्मनोऽपीत्यर्थः ॥ २० ॥

५३. **उभयेऽपि हि भेदेनैनमधीयते ।** उभये काण्वा माध्यन्दिना अपि, * यो विज्ञाने तिष्ठन् * य आत्मनि तिष्ठन् * इति यतः प्रत्यगात्मनो भेदेन, एनम्— अन्तर्यामिणम् अधीयते : अतोऽयं तदतिरिक्तः परमात्मा ॥ २१ ॥ इति अन्तर्याम्यधिकरणम् ॥ 4 ॥

५४. **अदृश्यत्वादिगुणको धर्मोक्तेः ।** आथर्वणे— * अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम् * इत्यारभ्य, * यद्भूतयोनिं परिपश्यन्ति धीराः * अक्षरात्परतः परः * इत्यादौ किं प्रधानपुरुषौ प्रतिपाद्येते, उत परमात्मैवेति संशयः । प्रधानपुरुषाविति पूर्वः पक्षः । पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात्तज्जातीयाचेतनं प्रधानमेव भूतयोन्यक्षरमिति प्रतीयते । तथा * अक्षरात्परतः परः इति च तस्याधिष्ठाता पुरुष एवेति । राद्धान्तस्तु— उत्तरत्र * यस्सर्वज्ञस्सर्ववित् * इति प्रधानपुरुषयोरसंभावितं सार्वज्ञ्यमभिधाय * तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते * इति सर्वज्ञात्सत्यसङ्कल्पाज्जगदुत्पत्तिश्रवणात्पूर्वोक्तमदृश्यत्वादिगुणकं भूतयोन्यक्षरम् * अक्षरात्परतः परः * इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति विज्ञायते । सूत्रार्थस्तु— अदृश्यत्वादिगुणकः परमात्मा, सर्वज्ञत्वादितद्धर्मोक्तेः ॥

५५. **विशेषणभेदव्यपदेशाभ्यां च नेतरौ ।** विशिनष्टि हि प्रकरणं प्रधानात् भूतयोन्यक्षरम् एकविज्ञानेन सर्वविज्ञानादिना । तथा * अक्षरात्परतः पर इति अक्षरात् अव्याकृतात् परतोऽवस्थितात्पुरुषात् पर इति पुरुषाच्चास्य भूतयोन्यक्षरस्य भेदो व्यपदिश्यते । अतश्च न प्रधानपुरुषौ ; अपि तु परमात्मैवात्र निर्दिष्टः ॥ २३ ॥

५६. **रूपोपन्यासाच्च ।** * अग्निर्मूर्धा * इत्यादिना समस्तस्य चिदचिदात्मकस्य प्रपञ्चस्य भूतयोन्यक्षररूपत्वेनोपन्यासाच्चायमदृश्यत्वादिगुणकः परमात्मा ॥ २४ ॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥ 5 ॥

५७. **वैश्वानरस्साधारणशब्दविशेषात् ।** छान्दोग्ये * आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि * इत्यारभ्य * यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते * इत्यत्र किमयं वैश्वानरः परमात्मेति शक्यनिर्णयः, उत नेति सशयः । अशक्यनिर्णय इति पूर्वः पक्षः ; वैश्वानरशब्दस्य जाठराग्नौ, भूततृतीये, देवताविशेषे परमात्मनि च वैदिकप्रयोगदर्शनात् ; अस्मिन् प्रकरणे सर्वेषां लिङ्गानां दर्शनेश्च । राद्धान्तस्तु— * को न आत्मा किं ब्रह्म * इति सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रक्रमात् , उत्तरत्र च, * आत्मानं वैश्वानरम् * इति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्च, वैश्वानरात्मा सर्वेषां जीवानामात्मभूतं परं ब्रह्मेति विज्ञायते । सूत्रार्थः— वैश्वानरशब्दनिर्दिष्टः परमात्मा, वैश्वानरशब्दस्यानेकार्थसाधारणस्याप्यस्मिन्प्रकरणे परमात्मासाधारणविशेषणैस्सर्वात्मत्वादिभिः विशेष्यमाणत्वात् । विशेष्यत इति विशेषः ॥ २५ ॥

५८. **स्मर्यमाणमनुमानं स्यादिति ।** स्मर्यमाणं— प्रत्यभिज्ञायमानम् , अनुमीयतेऽनेनेति अनुमानम् , इति शब्दः प्रकारवचनः, इत्थं रूपं स्मर्यमाणं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् ; द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिष्टम् * अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ * * द्यां मूर्धानं यस्य विप्रा वदन्ति * इति श्रुतिस्मृतिप्रसिद्धं परमपुरुषरूपमिह प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे लिङ्गं स्यादित्यर्थः ॥

५९. **शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते।** अनिर्णयमाशङ्क्य परिहरति— शब्दादिभ्योऽन्तःप्रतिष्ठानाच्चेति । शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे * स एषोऽग्निर्वैश्वानरः * इति वैश्वानरसमानाधिकरणोऽग्निशब्दः । अस्मिन् प्रकरणे च * हृदये गार्हपत्यः * इत्यारभ्य वैश्वानरस्य हृदयादिस्थानस्याग्नित्रयपरिकल्पनं प्राणाहुत्याधारत्वञ्चेत्यादि प्रतीयते । वाजिनामपि * स यो ह वैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद * इति वैश्वानरस्य शरीरान्तःप्रतिष्ठितत्वं प्रतीयते । अतः एभिर्लिङ्गैर्वैश्वानरस्य जाठराग्नित्वप्रतीतेर्नायं परमात्मेति शक्यनिर्णय इति चेत् ; तन्न ; तथा दृष्ट्युपदेशात् , दृष्टिः— उपासनम् , तथोपासनोपदेशादित्यर्थः । जाठराग्निशरीरतया वैश्वानरस्य परमात्मानं उपासनं ह्यत्रोपदिश्यते * अयमग्निर्वै-

श्वानरः पुरुषेऽन्तः प्रतिष्ठितः * इत्यादौ । कथमवगम्यत इति चेत्, असंभवात्— केवलजाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसंभवात् । पुरुषमपि चैनमधीयते— चशब्दः प्रसिद्धौ ; वाजिनस्तत्रैव * स एषोऽग्निर्वैश्वानरो यत्पुरुषः * इति एनं वैश्वानरं पुरुषमपि ह्यधीयते । पुरुषश्च परमात्मैव * पुरुष एवेदं सर्वम् * पुरुषान्न परं किञ्चित् * इत्यादिषु प्रसिद्धेः ॥ २७ ॥

६०. **अत एव न देवता भूतञ्च** । यतस्त्रैलोक्यशरीरोऽसौ वैश्वानरः, यतश्च निरुपाधिकपुरुषशब्दनिर्दिष्टः ; अत एव नाग्न्याख्या देवता, महाभूततृतीयश्च वैश्वानरश्शङ्कनीयः ॥ २८ ॥

६१. **साक्षादप्यविरोधं जैमिनिः** । अग्निशरीरतया वैश्वानरस्योपासनार्थमग्निशब्दसामानाधिकरण्यनिर्देश इत्युक्तम् । विश्वेषां नराणां नेतृत्वादिना संबन्धेन यथा वैश्वानरशब्दः परमात्मनि वर्तते, तथैवाग्निशब्दस्यापि अग्रनयनादिना योगेन साक्षात्परमात्मनि वृत्तौ न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते ॥

* यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरम् * इति द्युप्रभृतिपृथिव्यन्तप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वमनवच्छिन्नस्य परमात्मनो वैश्वानरस्य कथमुपपद्यत इत्यत्राह—

६२. **अभिव्यक्तेरित्याश्मरथ्यः** । अनवच्छिन्नस्यैव परमात्मनः उपासनाभिव्यक्त्यर्थं द्युप्रभृतिपृथिव्यन्तप्रदेशपरिच्छिन्नत्वमिति आश्मरथ्य आचार्यो मन्यते ॥ ३० ॥

द्युप्रभृतिप्रदेशावच्छेदेनाभिव्यक्तस्य परमात्मनो द्युभ्वादित्यादीनां मूर्धाद्यवयवकल्पनं किमर्थमिति चेत् ; तत्राह—

६३. **अनुस्मृतेर्बादरिः** । अनुस्मृतिः— उपासनम्, ब्रह्मप्राप्तये तथोपासनार्थं मूर्धप्रभृतिपादान्तदेहपरिकल्पनमिति बादरिराचार्यो मन्यते ॥ ३१ ॥

अयं वैश्वानरः परमात्मा त्रैलोक्यशरीरः उपास्य उपदिश्यते चेत्, * उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः * इत्यादिना उपासकशरीरावयवानां गार्हपत्यादिपरिकल्पनं किमर्थमित्यत्राह—

६४. **संपत्तेरिति जैमिनिस्तथा हि दर्शयति** । वैश्वानरविद्याङ्गभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनाय गार्हपत्यादिपरिकल्पनमिति जैमिनिराचार्यो मन्यते । तथा ह्यग्निहोत्रसंपत्तिमेव दर्शयतीयं श्रुतिः प्राणाहुतिं विधाय, * अथ य एवं विद्वानग्निहोत्रं जुहोति * इति । उक्तानामर्थानां पूजितत्वख्यापनायाचार्यग्रहणम् ॥ ३२ ॥

६५. **आमनन्ति चैनमस्मिन्** । एनं परमपुरुषं वैश्वानरं द्युम्वादिदेहम्, अस्मिन् उपासकदेहे प्राणाग्निहोत्रेणाराध्यत्वाय आमनन्ति हि * तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः * इत्यादिना । उपासकमूर्धादिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्धादय इति प्राणाग्निहोत्रवेलायामनुसन्धेया इत्यर्थः ॥ ३२ ॥
इति वैश्वानराधिकरणम् ॥ 11 ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य द्वितीयः पादः ॥



# ॥ अथ प्रथमाध्याये तृतीयः पादः ॥

६६. **द्युभ्वाद्यायतनं स्वशब्दात्** । आथर्वणे * यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः * इत्यत्र द्युपृथिव्यादीनामायतनं किं जीवः, उत परमात्मेति संशयः । जीव इति पूर्वः पक्षः, मनःप्रभृतीन्द्रियाधारत्वश्रुतेः, उत्तरत्र नाडीसंबन्धात्, जायमानत्वश्रुतेश्च । राद्धान्तस्तु— निरुपाधिकात्मत्वामृतसेतुत्वयोः परमात्मधर्मयोश्श्रवणात्परमात्मैवायम् । सर्वं नियन्तृतया आप्नोतीति ह्यात्मा । अमृतस्य प्रापकतया सेतुश्च स एव । नाडीसंबन्धः, बहुधाजायमानत्वं च, * सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम् * अजायमानो बहुधा विजायते * इत्यादिषु सर्वसमाश्रयणीयत्वायाजहत्स्वभावस्यैव परमात्मनोऽपि दृश्यत इति । सूत्रार्थस्तु— द्युपृथिव्यादीनामायतनं परमात्मा, स्वशब्दात् ॥ १ ॥

६७. **मुक्तोपसृप्यव्यपदेशाच्च** । * तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति * तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् * इति च बन्धान्मुक्तस्य प्राप्यतया व्यपदेशाच्चायं परमात्मा ॥ २ ॥

६८. **नानुमानमतच्छब्दात्प्राणभृच्च** । आनुमानम्— अनुमानगम्यं प्रधानम् । यथा तद्वाचिशब्दाभावात्तदिह न गृह्यते ; तथा प्राणभृदपीत्यर्थः । अतश्चायं परमात्मा ॥ ३ ॥

६९. **भेदव्यपदेशात्** । * अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम् * इत्यादिना जीवाद्भेदेन व्यपदेशाच्चायं परमात्मा ॥ ४ ॥

७०. **प्रकरणात्** । * अथ परा यया तदक्षरमधिगम्यते * इत्यादिना परमात्मन एव प्रकृतत्वात् ॥ ५ ॥

७१. **स्थित्यदनाभ्याञ्च**। * तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति * इति कर्मफलमनश्नतः परमात्मनो दीप्यमानतया स्थितेः, जीवस्य कर्मपरवशतया तत्फलादनाच्च, परमात्मनो जीवात् भेदावगमात् अमृतसेतुद्युभ्वाद्यायतनं न जीवः। * अदृश्यत्वादिगुणक इत्यनेन परमात्मत्वे स्थापितेऽपि, नाडीसंबन्धबहुधाजायमानत्वलिङ्गात्, याऽवान्तरप्रकरणविच्छेदाशङ्का, सा निराकृता * द्युभ्वाद्यायतनमिति। वैश्वानरस्य त्रैलोक्यशरीरत्वादिना परमात्मत्वनिर्णय इति मध्ये वैश्वानरविद्या निरूपिता ॥ ६ ॥ इति द्युभ्वाद्यधिकरणम् ॥ 1 ॥

७२. **भूमा संप्रसादादध्युपदेशात्**। छान्दोग्ये * यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा * इत्यत्र भूमशब्दनिर्दिष्टो निरतिशयवैपुल्यविशिष्टसुखस्वरूपः किं प्रत्यगात्मा, उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः। * तरति शोकमात्मविदिति प्रक्रम्य नामादिपरम्परयोत्तरभूयस्त्वेन प्रश्नप्रतिवचनाभ्यां प्रवृत्तस्यात्मोपदेशस्य प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि समाप्तिदर्शनात्, प्रत्यगात्मन एव भूमसंशब्दनमिति निश्चीयते। राद्धान्तस्तु— यद्यपि प्रश्नप्रतिवचनाभ्यामुत्तरोत्तरभूयस्त्ववचनं प्राणे पर्यवस्थितम्; तथापि प्राणवेदिनोऽतिवादित्वमुक्त्वा, * एष तु वा अतिवदति यस्सत्येनातिवदतीति तुशब्देनोपासकभेदं प्रतिपाद्य, तस्य सत्योपासकस्य पूर्वस्मादाधिक्योपदेशात्, सत्यशब्दाभिधेयं परं ब्रह्मैव भूमविशिष्टमिति। सूत्रार्थस्तु— भूमगुणविशिष्टं परं ब्रह्मैव, संप्रसादादध्युपदेशात्— संप्रसादः प्रत्यगात्मा, * एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य * इत्याद्युपनिषत्प्रसिद्धेः; * एष तु वा अतिवदतीति प्रत्यगात्मनोऽधिकतयोपदेशात्। अतिवादित्वं हि स्वोपास्याधिक्यवादित्वम् ॥ ७ ॥

७३. **धर्मोपपत्तेश्च**। स्वाभाविकामृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वोत्पत्तिहेतुत्वादीनां भूम्नि श्रूयमाणानां धर्माणां परस्मिन्नेव ब्रह्मण्युपपत्तेश्च भूमा परं ब्रह्मैव ॥ ८ ॥ इति भूमाधिकरणम् ॥ 2 ॥

७४. **अक्षरमम्बरान्तधृतेः**। वाजिनां गार्गीप्रश्ने * स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम् * इत्यत्राक्षरशब्दनिर्दिष्टं प्रधानम्? जीवो वा? उत परमात्मा? इति संशयः। प्रधानम्, जीवो वा, न परमात्मेति पूर्वः पक्षः। * कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च * इत्युक्ते, आकाशाधारतयोच्यमानमक्षरं प्रधानम्, जीवो वा; प्रधानस्य विकाराधारत्वात्, जीवस्याचिद्वस्त्वाधारत्वात्; न परमात्मा— इति। राद्धान्तस्तु— * यदूर्ध्वं गार्गि दिवः * इत्यारभ्य, कालत्रय वर्तिनः कृत्स्नस्याधारतया निर्दिष्ट आकाशोऽव्याकृतमेव; न वायुमानाकाशः। ततः पश्चात् * कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च * इति पृष्टे, तदाधारतयोच्यमानमेतदक्षरं न प्रधानं भवितुमर्हति। नापि जीवः, * एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः * इत्यारभ्य प्रशासनात्सर्वाधारत्वश्रुतेः।

सूत्रार्थस्तु—* एतद्वै तदक्षरं गार्गि * इति निर्दिष्टमक्षरं परमात्मा, अम्बरान्तधृतेः— अम्बरम्— वायुमानाकाशः, अम्बरान्तः— अम्बरपारभूतम्, अम्बरकारणमिति यावत्; कारणापत्तिरेव हि कार्यस्यान्तः। स चाम्बरान्तः अव्याकृतं प्रधानम्, तस्य धृतेः— धारणात्। अव्याकृतस्यापि धृतेरक्षरं परमात्मैवेत्यर्थः ॥ ९ ॥

एवं तर्हि जीवो भवितुमर्हति, तस्य प्रधानधृत्युपपत्तेरित्याशङ्क्याह—

७५. **सा च प्रशासनात्।** सा च— अम्बरान्तधृतिः * एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ * इति प्रशासनात् श्रूयते। प्रशासनम्— प्रकृष्टं शासनम्, अप्रतिहताज्ञा। न चाप्रतिहताज्ञया कृत्स्नस्य चिदचिदात्मकस्य जगतो धृतिर्जीवे उपपद्यते; अतो न जीवः ॥ १० ॥

७६. **अन्यभावव्यावृत्तेश्च।** अन्यभावः— अन्यत्वम्, अस्याक्षरस्य परमपुरुषादन्यत्वं व्यावर्तयति वाक्यशेषः, * अदृष्टं द्रष्टृ * इत्यादिना सर्वैरदृष्टमेतदक्षरं सर्वस्य द्रष्टृत्वादिप्रधानजीवासंभावनीयार्थप्रतिपादनात् ॥ ११ ॥ इति अक्षराधिकरणम् ॥ 3 ॥

७७. **ईक्षतिकर्मव्यपदेशात्सः।** आथर्वणिकानां सत्यकामप्रश्ने * यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत * इत्यारभ्य, * ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते * इत्यत्र, ध्यायतीक्षतिकर्मतया व्यपदिष्टः परः पुरुषः किं हिरण्यगर्भः, उत परब्रह्मभूतः पुरुषोत्तम इति संशयः। हिरण्यगर्भ इति पूर्वः पक्षः। पूर्वत्रैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिं फलम्, द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिश्च फलमभिधाय, अनन्तरं * यः पुनरेतं त्रिमात्रेण * इति त्रिमात्रं प्रणवमुपासीनस्य फलत्वेनोच्यमानब्रह्मलोकस्थपुरुषेक्षणकर्मभूतश्चतुर्मुख एवेति विज्ञायते, मनुष्यलोकान्तरिक्षलोकसाहचर्यात् ब्रह्मलोकोऽपि क्षेत्रज्ञलोक इति निश्चयात्।

राद्धान्तस्तु— * परात्परं पुरिशयं पुरुषमीक्षते * इतीक्षतिकर्मतया निर्दिष्टपुरुषविषये श्लोके * तमोङ्कारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परञ्च * इति निरुपाधिकशान्तत्वामृतत्वादिव्यपदेशात्परमात्मैवायमिति निश्चीयते। एवं परमात्मत्वे निश्चिते ब्रह्मलोकशब्दश्च तत्स्थानमेवाभिदधातीत्यवगम्यते। तद्विषयतयोदाहृते च श्लोके * यत्तत्कवयो वेदयन्ते * [* तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः *] इत्येवमादिभिः सूरिभिर्दृश्यत्ववचनं तदेव द्रढयति। सूत्रार्थस्तु— ईक्षतिकर्म सः— परमात्मा, ध्यायतीक्षत्योरेकविषयत्वेन ध्यायतिकर्मापि स एवेत्यर्थः; व्यपदेशात्— तद्विषयतया * शान्तमजरममृतमभयं परञ्च * इति परमात्मधर्माणां व्यपदेशात् ॥ १२ ॥ इति ईक्षतिकर्माधिकरणम् ॥ 4 ॥

७८. **दहर उत्तरेभ्यः।** छान्दोग्ये * अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् * इत्यत्र हृदयपुण्डरीकमध्यवर्ती दहरा-

काशश्श्रूयमाण. किं भूताकाशः ? उत जीवः ? अथ परमात्मा— इति संशयः। प्रथमं तावद्भूताकाश इति युक्तमाश्रयितुमिति पूर्वः पक्षः ; आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात्, आकाशान्तर्वर्तिनोऽन्यस्यान्वेष्टव्यताप्रतीतेश्च। राद्धान्तस्तु— * किं तदत्र विद्यते यदन्वेष्टव्यम् * इति चोदिते, * यावान्वा अयमाकाशः * इत्यारभ्य, * एतत्सत्यं ब्रह्मपुरम् * इत्यन्तेन दहराकाशस्यातिमहत्त्वसर्वाश्रयत्वाजरत्वसत्यत्वाद्यभिधाय, * अस्मिन्कामास्समाहिताः * इत्याकाशान्तर्वर्तिनोऽन्वेष्टव्याः कामा इति प्रतिपाद्य, कोऽयं दहराकाशशब्दनिर्दिष्टः ? के तदाश्रयाः कामाः ? इत्यपेक्षायाम्, * एष आत्माऽपहतपाप्मा * इत्यारभ्य, * सत्यसङ्कल्पः * इत्यन्तेन आकाशशब्दनिर्दिष्ट. आत्मा, कामाश्चापहतपाप्मत्वादयस्तद्विशेषणभूता इति प्रतिपादयद्वाक्यमपहतपाप्मत्वादिविशिष्टपरमात्मानमाह। उपक्रमे चान्वेष्टव्यतया प्रतिज्ञात आकाशः आत्मा, एतद्विशेषणभूताः अपहतपाप्मत्वादयः कामा इति [वाक्यं] ज्ञापयत् * अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवति * इत्युपसंहरति। अतोऽयं दहराकाशोऽपहतपाप्मत्वादिविशिष्टः परमात्मेति निश्चीयते, न भूताकाशादिरिति ॥

एवं तर्ह्यस्मिन्वाक्ये * अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थायेति प्रत्यगात्मप्रतीतेः, तस्य चोत्तरत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणकत्वावगमात, प्रत्यगात्मैव दहराकाश इति पूर्वपक्षी मन्यते। राद्धान्ती तु— प्रत्यगात्मा कर्मपरवशतया जागरितस्वप्नसुषुप्त्याद्यवस्थाभिः तिरोहितापहतपाप्मत्वादिकः परमात्मानमुपसंपन्नः तत्प्रसादादाविर्भूतगुणकः प्रजापतिवाक्ये प्रतिपादितः। दहराकाशस्त्वतिरोहितनिरुपाधिकापहतपाप्मत्वादिकः प्रत्यगात्मन्यसंभावनीयजगद्विधरणसमस्तचिदचिद्वस्तुनियमनाद्यनन्तगुणकः प्रतिपन्न इति नायं प्रत्यगात्मा दहराकाशः, अपि तु परमात्मैवेति मन्यते। सूत्रार्थस्तु— दहराकाशः परं ब्रह्म, उत्तरेभ्यः— उत्तरवाक्यगतेभ्योऽपहतपाप्मत्वादिपरमात्मासाधारणधर्मेभ्यो हेतुभ्यः ॥ १३ ॥

७९. **गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च।** अस्मिन्दहराकाशे सर्वासां प्रजानामजानतीनामहरहर्या गतिश्श्रूयते, यश्च दहराकाशावमर्शरूपैतच्छब्दसमानाधिकरणतया प्रयुक्तो ब्रह्मलोकशब्दः, ताभ्यां दहराकाशः परं ब्रह्मेत्यवगम्यते * तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः * इति। तथा हि दृष्टम्— तथा ह्यन्यत्र परस्मिन्ब्रह्मण्येवंरूपं गमनं दृष्टम्— * एवमेव खलु सोम्येमास्सर्वाः प्रजास्सति संपद्य न विदुस्सति सपत्स्यामह इति * सत आगम्य न विदुस्सत आगच्छामह इति * तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मण्येव दृष्टः— * एष ब्रह्मलोकस्सम्राडिति होवाच * इति। लिङ्गञ्च— मा भूदन्यत्र दर्शनम्, अस्मिन् प्रकरणे सर्वासां प्रजानां श्रूयमाणमहरहर्गमनं, ब्रह्मलोकशब्दश्च दहराकाशस्य परमात्मत्वे पर्याप्तं लिङ्गम्। चशब्दोऽवधारणे। एतदेव पर्याप्तमित्यर्थः ॥ १४ ॥

८०. **धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः** । अस्य धृत्याख्यस्य परमात्मनो महिम्नः अस्मिन् दहराकाशे उपलब्धेरयं परमात्मा । धृतिः— जगद्विधरणं परमात्मनो महिमेत्यन्यत्रावगम्यते । * एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय * इति । सा चास्मिन्दहराकाशे उपलभ्यते * अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेति ॥ १५ ॥

८१. **प्रसिद्धेश्च** । * को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, * सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते * इत्यादिष्वाकाशशब्दस्य परस्मिन्ब्रह्मणि प्रसिद्धेः आकाशशब्द एव परमात्मधर्मविशेषितो भूताकाशशङ्कां निवर्तयतीत्यर्थः ॥ १६ ॥

८२. **इतरपरामर्शात्स इति चेन्नासंभवात्** । परमात्मन इतरः जीवः; * अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय * इति जीवस्य परामर्शात्स एव दहराकाश इति चेत्तन्न, पूर्वोक्तानां गुणानां तस्मिन्नसंभवात् ॥ १७ ॥

८३. **उत्तराच्चेदाविर्भूतस्वरूपस्तु** । उत्तरात्— प्रजापतिवाक्यात्, अपहतपाप्मत्वादिगुणको जीवोऽवगम्यत इति चेत्तन्न; जागरिताद्यवस्थाभिरनादिकालप्रवृत्ताभिः पुण्यपापरूपकर्ममूलाभिः तिरोहितगुणकः परब्रह्मोपासनजनिततदुपसंपत्त्याऽऽविर्भूतस्वरूपोऽसौ जीवः तत्र प्रजापतिवाक्येऽपहतपाप्मत्वादिगुणकः कीर्तितः । दहराकाशस्त्वतिरोहितस्वरूपोऽपहतपाप्मत्वादिगुणक इत्यस्मिन्दहराकाशे न जीवशङ्का ॥ १८ ॥

दहरवाक्ये जीवपरामर्शः किमर्थमिति चेत्, तत्राह—

८४. **अन्यार्थश्च परामर्शः** । * अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते * इति परंज्योतिस्स्वरूपदहराकाशोपसंपत्त्याऽस्य जीवस्यानृततिरोहितस्वरूपस्य स्वरूपाविर्भावो भवतीति दहराकाशस्य जगद्विधरणादिवज्जीवस्वरूपाविर्भावापादनरूपसंपद्विशेषप्रतिपादनार्थो जीवपरामर्शः ॥ १९ ॥

८५. **अल्पश्रुतेरिति चेत्तदुक्तम्** । * दहरोऽस्मिन्नन्तराकाशः * इत्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्; तत्र यदुत्तरं वक्तव्यम्, तत्पूर्वमेवोक्तम्— * निचाय्यत्वादित्यनेन ॥ २० ॥

८६. **अनुकृतेस्तस्य च** । अनुकृतिः— अनुकारः; तस्य परमात्मनोऽनुकारो हि जीवस्याविर्भूतस्वरूपस्यापहतपाप्मत्वादिगुणकत्वम् । अतोऽनुकर्तुः जीवादनुकार्यः परब्रह्मभूतो दहराकाशोऽर्थान्तरभूत एव । तदनुकारश्च तत्साम्यापत्तिः श्रूयते * यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ इति ॥ २१ ॥

८७. अपि स्मर्यते । स्मर्यते च तदुपासनात्तत्साम्यापत्तिरूपानुकृतिर्जीवस्य, * इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ इति ॥ २२ ॥ इति दहराधिकरणम् ॥ 5 ॥

८८. शब्दादेव प्रमितः । कठवल्लीष्वाम्नायते * अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वैतत् * उत्तरत्र च * अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः * तथोपरिष्टात्— * अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः * इति । अत्राङ्गुष्ठप्रमितो जीवात्मा, उत परमात्मेति संशयः । जीवात्मेति पूर्वः पक्षः, अन्यत्र स्वीकृतस्पष्टजीवभावे पुरुषे अङ्गुष्ठप्रमितत्वश्रुतेः * प्राणाधिपस्सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः * इति । राद्धान्तस्तु— तत्र * स्वकर्मभिःरिति जीवभावनिश्चयवदत्रापि, * ईशानो भूतभव्यस्येति भूतभव्येशितृत्वदर्शनात् परमात्मैवेति । सूत्रार्थस्तु— शब्दादेव प्रमितः— अङ्गुष्ठप्रमितः परमात्मैव, * ईशानो भूतभव्यस्येति परमात्मवाचिशब्दात् ॥ २३ ॥

कथमनवच्छिन्नस्य परमात्मनोऽङ्गुष्ठप्रमितत्वमित्याशङ्क्याह—

८९. हृद्यपेक्षया तु मनुष्याधिकारत्वात् । उपासनार्थमुपासकहृदये वर्तमानत्वात्, उपासकहृदयस्याङ्गुष्ठमात्रत्वात् तदपेक्षयेदमङ्गुष्ठप्रमितत्वम् । मनुष्याणामेवोपासकत्वसंभावनया मनुष्यानधिकृत्य प्रवृत्तत्वाच्छास्त्रस्य मनुष्यहृदयापेक्षयेदमुक्तम् । स्थितं तावदुत्तरत्र समापयिष्यते ॥ २४ ॥ इति प्रमिताधिकरणभागः ॥

९०. तदुपर्यपि बादरायणस्संभवात् । मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् । तत्प्रसङ्गेन देवादीनामपि ब्रह्मविद्यायामधिकारोऽस्ति नवेति चिन्त्यते । न देवादीनामधिकारोऽस्तीति पूर्वः पक्षः, परिनिष्पन्ने ब्रह्मणि शब्दस्य प्रामाण्यसंभवेऽपि देवादीनां विग्रहादिमत्त्वे प्रमाणाभावात्, मन्त्रार्थवादानामपि विधिशेषतया विग्रहादिसद्भावपरत्वाभावात्, विग्रहवन्निर्वर्त्याहरहरनुष्ठीयमानविवेकादिसाधनसप्तकसंस्कृतमनोनिष्पाद्योपासननिर्वृत्तौ तेषां सामर्थ्याभावात् । राद्धान्तस्तु— जगत्सृष्टिप्रकरणेषु नामरूपव्याकरणश्रुत्यैव देवादीनां विग्रहादिमत्त्वं सिध्यति । देवादीनां देहेन्द्रियादिकरणमेव हि नामरूपव्याकरणम्; मन्त्रार्थवादयोश्च तदुपलब्धेः, तयोरनुष्ठेयप्रकाशनस्तुतिपरत्वेऽपि तदुपपत्तये तत्सद्भावे प्रमाणत्वाद्देवादीनां विग्रहादिमत्त्वसिद्धिः; न हि विग्रहादिमत्तया स्तुतिः प्रकाशनं च तदभावे संभवति । अतस्सामर्थ्यसंभवादस्त्येवाधिकारः । सूत्रार्थस्तु— तदुपर्यपि तेभ्यः मनुष्येभ्यः उपरि वर्तमानानां देवादीनाम्, अप्यधिकारोऽस्ति । यद्वा तत्— ब्रह्मोपासनम्, उपरि-देवादिष्वपि सभवति; तेषामपि ब्रह्मस्वरूपतदुपासनप्रकारज्ञानतदर्थित्वतदुपादानसामर्थ्यसंभवात् । पूर्वोपार्जितज्ञानाविस्मरणात् ज्ञान-

संभवः ; तापत्रयाभिहतिपूर्वकब्रह्मगुणज्ञानाचार्थित्वसंभवः ; सृष्टिवाक्यमन्त्रार्थवादेषु विग्रहवत्त्वादिदर्शनात् सामर्थ्यसंभवश्चेति भगवान् बादरायणो मन्यते ॥ २५ ॥

९१. **विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्।** कर्मणि—यागादौ, विग्रहवत्त्वे सति एकस्य युगपदनेकयागेषु सन्निधानानुपपत्तेर्विरोधः प्रसज्यत इति चेत्; तन्न, शक्तिमतां सौभरिप्रभृतीनां युगपदनेकशरीरप्रतिपत्तिदर्शनात ॥ २६ ॥

९२. **शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्।** विरोध इति वर्तते; माभूत्कर्मणि विरोधः, शब्दे तु वैदिके विरोधः प्रसज्यते, विग्रहवत्त्वे हि तेषां सावयवत्वेनोत्पत्तिविनाशयोगादुत्पत्तेः प्राक् विनाशादूर्ध्वं च, वैदिकानामिन्द्रादिशब्दानामर्थशून्यत्वमनित्यत्वं वा स्यादिति चेत्; तन्न, अतः प्रभवात्—अतः— वैदिकादेव शब्दात् इन्द्रादेः प्रभवात्। पूर्वपूर्वेन्द्रादौ विनष्टे वैदिकादिन्द्राद्याकृतिविशेषवाचिनश्शब्दादिन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं सृजति प्रजापतिरिति वैदिकस्य शब्दस्य न कश्चिद्विरोधः। न हि देवदत्तादिशब्दवदिन्द्रादिशब्दाः व्यक्तिविशेषे संकेतपूर्वकाः प्रवृत्ताः; अपि तु गवादिशब्दवदाकृतिविशेषवाचिन इति तेषामपि नित्य एव वाच्यवाचकभावः। वैदिकादिन्द्रादिशब्दात्तदर्थविशेषं स्मृत्वा कुलालादिरिव घटादिकं प्रजापतिस्सृजतीति कुतोऽवगम्यते? प्रत्यक्षानुमानाभ्यां— श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत्— * वेदेन रूपे व्याकरोत्सतासती प्रजापतिः * तथा * स भूरिति व्याहरत् स भूमिमसृजत * इत्यादिका। स्मृतिरपि— * सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ * नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ इत्यादिका ॥ २७ ॥

९३. **अत एव च नित्यत्वम्।** यतः प्रजापतिः वैदिकाच्छब्दादर्थाकारं स्मृत्वा तदाकारं सर्वं सृजति, अतश्च वसिष्ठविश्वामित्रादीनां मन्त्रसूक्तादिकृत्त्वेऽपि मन्त्रादिमयस्य वेदस्य नित्यत्वं तिष्ठत्येव। प्रजापतिर्हि नैमित्तिकप्रलयानन्तरम् * मन्त्रकृतो वृणीते * विश्वामित्रस्य सूक्तं भवति * इत्यादिवेदशब्देभ्योऽनधीतमन्त्रादिदर्शनशक्तवसिष्ठाद्याकृतिविशेषं स्मृत्वा, वसिष्ठत्वादिपदप्राप्तयेऽनुष्ठितकर्मविशेषांश्चानुस्मृत्य, तदाकारविशेषांस्तान्वसिष्ठादीन् सृजति; ते चानधीत्यैव वेदैकदेशभूतमन्त्रादीन् स्वरतो वर्णतश्चास्खलितान्पठन्ति। तदेषां मन्त्रादिकृत्वेऽपि वेदनित्यत्वमुपपद्यते ॥ २८ ॥

प्रजापतिप्रभृतिषु सर्वेषु तत्त्वेष्वव्याकृतपर्यन्तेषु अव्याकृतपरिणामरूपेषु शब्दमयेषु वेदेषु च विनष्टेष्वव्याकृतसृष्ट्यावृत्तौ कथं वेदस्य नित्यत्वमित्यत आह—

९४. **समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च।** अव्याकृतसृष्ट्यावृत्तावपि सृज्यानां समाननामरूपत्वादेव न कश्चिद्विरोधः। आदिसर्गेऽपि हि परमपुरुषः पूर्वसंस्थानं जगत्स्मरन् तथैव सृजति। वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य हिरण्यगर्भाय ददातीति। पूर्वसंस्थानमेव जगत्सृजतीति कथमवगम्यते? दर्शनात् स्मृतेश्च। दर्शनं श्रुतिः, * अहोरात्राणि विदधद्विश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः * इति, * यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै * इति च। स्मृतिरपि— * यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥ इति। एतदेव वेदस्य नित्यत्वम्— यत्पूर्वपूर्वोच्चारणक्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्, परमपुरुषोऽपि स्वस्वरूपस्वाराधनतत्फलयाथात्म्यावबोधि वेदं स्वस्वरूपवन्नित्यमेव पूर्वानुपूर्वीविशिष्टं स्मृत्वाऽऽविष्करोति। अतो देवादीनां ब्रह्मविद्याधिकारे न कश्चिद्विरोधः॥ २९॥ इति प्रमिताधिकरणगर्भे देवताधिकरणम्॥ 7॥

९५. **मध्वादिष्वसंभवादनधिकारं जैमिनिः।** छान्दोग्ये * असौ वा आदित्यो देवमधु * इत्युपक्रम्य * तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति * इत्युक्त्वा, * स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति * इत्यादिना ऋग्यजुस्सामादिवेदोदितकर्मसंपाद्यरसाधारतया मधुमयस्यादित्यस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वांशान्वसुरुद्रादित्यमरुत्साध्यनाम्नां देवगणानां भोग्यत्वेनाभिधाय, तैर्भुज्यमानाकारेणादित्यांशानुपास्यानुपदिश्य, तानेवादित्यांशान् तथाभूतान्प्राप्यानुपदिशति। एवमादिषूपासनेषु वस्वादित्यादीनामधिकारोऽस्ति, न वेति संशयः। नास्त्यधिकार इति पूर्वः पक्षः, वस्वादीनामुपास्यान्तर्गतत्वेन कर्मकर्तृभावविरोधात्, प्राप्यस्य वसुत्वादेः प्राप्तत्वाच्च। राद्धान्तस्तु— ब्रह्मण एव तदवस्थस्योपास्यत्वाद्वस्वादीनां सतां स्वावस्थब्रह्मानुसन्धानाविरोधात्, कल्पान्तरे वसुत्वादेः प्राप्यत्वाविरोधाच्च वस्वादीनामधिकारस्संभवतीति। सूत्रार्थस्तु— मधुविद्यादिषु वस्वादीनामनधिकारं जैमिनिर्मन्यते, असंभवात्— वस्वादीनामेवोपास्यानामुपासकत्वासंभवात्, वसुत्वादेः प्राप्तत्वादेव प्राप्यत्वासंभवाच्च॥ ३०॥

९६. **ज्योतिषि भावाच्च।** * तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् * इति ज्योतिषि— परस्मिन् ब्रह्मणि देवमनुष्ययोरधिकारसाधारण्ये सत्यपि, ज्योतिषां ज्योतिः परं ब्रह्म देवा उपासते इति विशेषवचनं वस्वादीनां कर्मकर्तृभावविरोधात्तेषु तेषामनधिकारं द्योतयति। देवाः इति सामान्यवचनञ्च वस्वादिविशेषविषयमित्यवगम्यते अन्येषामविरोधात्॥ ३१॥

९७. **भावं तु बादरायणोऽस्ति हि।** तु शब्दः पक्षं व्यावर्तयति। वस्वादीनां मधुविद्यादिष्वधिकारसद्भावं भगवान् बादरायणो मन्यते। अस्ति हि वस्वादीनामेवोपास्यत्वं प्राप्यत्वं च। इदानीं वसूना-

मेव सतां कल्पान्तरे वसुत्वस्य प्राप्यत्वसंभवात्प्राप्यत्वं संभवति । स्वात्मनां ब्रह्मभावानुसन्धानसंभवादुपास्यत्वं च संभवति । * य एतामेव ब्रह्मोपनिषदं वेद * इति हि कृत्स्नाया मधुविद्यायाः ब्रह्मविद्यात्वमवगम्यते ॥ ३२ ॥ इति प्रमिताधिकरणगर्भे मध्वधिकरणम् ॥ ८ ॥

९८. **शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ।** ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति नेति संशयः । अस्तीति पूर्वः पक्षः, अर्थित्वसामर्थ्यसंभवात् ; शूद्रस्यानग्निविद्यत्वेऽपि मनोवृत्तिमात्रत्वादुपासनस्य संभवति हि सामर्थ्यम् । ब्रह्मस्वरूपतदुपासनप्रकारज्ञानं चेतिहासपुराणश्रवणादेव निष्पद्यते । अस्ति हि शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा * श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः * इति । तथा तत्रैव विदुरादीनां ब्रह्मनिष्ठत्वं दृश्यते । उपनिषत्स्वपि * आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः * इति शूद्रशब्देनामन्त्र्य ब्रह्मविद्योपदेशदर्शनाच्छूद्रस्यापीहाधिकारस्सूच्यते । राद्धान्तस्तु— उपासनस्य मनोवृत्तिमात्रत्वेऽप्यनधीतवेदस्य शूद्रस्य उपासनोपायभूतज्ञानासंभवात् न सामर्थ्यसंभवः । कर्मविधिवदुपासनाविधयोऽपि त्रैवर्णिकविषयाध्ययनगृहीतस्वाध्यायोत्पन्नज्ञानमेवोपासनोपायतया स्वीकुर्वते । इतिहासादयोऽपि स्वाध्यायसिद्धमेव ज्ञानमुपबृंहयन्तीति ततोऽपि नास्य ज्ञानलाभः । श्रवणानुज्ञा तु पापक्षयादिफला । विदुरादीनां तु भवान्तरवासनया ज्ञानलाभात् ब्रह्मनिष्ठत्वम् । शूद्रेत्यामन्त्रणमपि न चतुर्थवर्णत्वेन ; अपि तु ब्रह्मविद्यावैकल्याच्छुगस्य संजातेति । अतो न शूद्रस्याधिकारः । सूत्रार्थस्तु— ब्रह्मविद्यावैकल्येन हंसोक्तानादरवाक्यश्रवणात् तदैवाचार्यं प्रत्याद्रवणाच्चाचार्येण तस्य शुश्रूषोर्विद्याऽलाभकृता शुक्सूच्यते । हिशब्दो हेतौ । यस्मादस्य शुक्सूच्यते, अतश्शोचनाच्छूद्र इति कृत्वा आचार्यो रैक्वः जानश्रुतिं शूद्रेत्यामन्त्रयते ; न जातियोगेनेत्यर्थः ॥ ३३ ॥

९९. **क्षत्रियत्वगतेश्च ।** अस्य शुश्रूषोः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् । प्रकरणप्रक्रमे हि * बहुदायी * इत्यादिना दानपतित्वबहुतरपक्वान्नदायित्वक्षत्तृप्रेषणबहुग्रामादिप्रदानैरस्य जानश्रुतेश्शुश्रूषोः क्षत्रियत्वं प्रतीतम् ॥ ३४ ॥

१००. **उत्तरत्र चैत्ररथेन लिङ्गात् ।** उपरिष्टाच्चास्यां विद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते * अथ ह शौनकं च कापेयमभिप्रतारिणञ्च * इत्यादिना । अभिप्रतारी हि चैत्ररथः क्षत्रियः । अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते ; प्रकरणान्तरे हि कापेयसहचारिणः चैत्ररथस्य क्षत्रियत्वञ्चावगतम् * एतेन वै चैत्ररथं कापेया अयाजयन् * इति, * तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत * इति च । अतोऽस्यां विद्यायामन्वितो ब्राह्मणादितरो जानश्रुतिरपि क्षत्रियो भवितुमर्हति ॥ ३५ ॥

१०१. **संस्कारपरामर्शात्तदभावाभिलापाच्च**। विद्योपदेशे * उप त्वा नेष्ये * इत्युपनयनसंस्कारपरामर्शात्, शूद्रस्य तदभाववचनाच्चानधिकारः। * न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति * इति हि निषिध्यते ॥ ३६ ॥

१०२. **तदभावनिर्धारणे च प्रवृत्तेः**। * नैतदब्राह्मणो विवक्तुमर्हति समिधं सौम्याहर * इति शुश्रूषोर्जाबालेश्शूद्रत्वाभावनिश्चय एवोपदेशे प्रवृत्तेर्नाधिकारः ॥ ३७ ॥

१०३. **श्रवणाध्ययनार्थप्रतिषेधात्**। शूद्रस्य श्रवणाध्ययनादीनि हि प्रतिषिध्यन्ते * तस्माच्छूद्रसमीपे नाध्येतव्यमिति। अनुपशृण्वतोऽध्ययनादिर्न संभवति ॥ ३८ ॥

१०४. **स्मृतेश्च**। स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः * अथ ह्यस्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः * इति ॥ ३९ ॥ इति प्रमिताधिकरणगर्भे अपशूद्राधिकरणम् ॥ 9 ॥

प्रासङ्गिकं परिसमाप्य प्रकृतं परिसमापयति -

१०५. **कम्पनात्**। अङ्गुष्ठप्रमितप्रकरणमध्ये * यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतम् * भयादस्याग्निस्तपति * इत्यादौ प्राणशब्दनिर्दिष्टाङ्गुष्ठप्रमितजनितभयनिमित्तादग्निवायुसूर्यप्रभृतिकृत्स्नजगत्कम्पनाच्छ्रूयमाणादङ्गुष्ठप्रमितः परमात्मैवेति निश्चीयते ॥ ४० ॥

१०६. **ज्योतिर्दर्शनात्**। * अस्मिन्नेव प्रकरणे तत्संबन्धितया * न तत्र सूर्यो भाति * इत्यारभ्य * तस्य भासा सर्वमिदं विभाति * इति सर्वेषां छादकस्यानवधिकातिशयस्य भाश्शब्दाभिहितस्य ब्रह्मभूतस्य परस्य ज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमितः परमात्मा ॥ ४१ ॥ इति प्रमिताधिकरणम् ॥ 6 ॥

१०७. **आकाशोऽर्थान्तरत्वादिव्यपदेशात्**। छान्दोग्ये * आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा * इत्यत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा, उत परमात्मेति संशयः। मुक्त इति पूर्वः पक्षः, * धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि * इति मुक्तस्यानन्तरप्रकृतत्वात्। राद्धान्तस्तु— * नामरूपयोर्निर्वहिता ते यदन्तरेति स्वयमस्पृष्टनामरूपतया नामरूपयोर्निर्वोढृत्वेन श्रूयमाणोऽयमाकाशो बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वात्परमात्मैव। सूत्रार्थस्तु— आकाशः परमात्मा, तस्य नामरूपयोर्निर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात्। प्रत्यगात्मनो ह्यर्थान्तरभूत एव नामरूपयोर्निर्वोढा। बद्धावस्थस्तावन्नामरूपाभ्यां स्पृष्टस्तत्परवशश्चेति न निर्वोढा; मुक्तस्यापि जगद्व्यापाररहितत्वान्न निर्वोढृत्वम्।

आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि गृह्यन्ते; तानि निरुपाधिकानि मुक्तस्यापि न संभवन्ति ॥ ४२ ॥

ननु तत्त्वमस्यादिनैक्यव्यपदेशात्, * नेह नानाऽस्ती ति भेदप्रतिषेधाच्च न प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याशङ्कयाह—

१०८. **सुषुप्त्युत्क्रान्त्योर्भेदेन**। *व्यपदेशादिति वर्तते। *प्राज्ञेनात्मना संपरिष्वक्तः *प्राज्ञेनाऽऽत्मनाऽन्वारूढः * इति सुषुप्त्युत्क्रान्त्योः लुप्तसकलविशेषविज्ञानात्प्रत्यगात्मनस्तदानीमेव सर्वज्ञतया भेदव्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूत एव परमात्मा ॥ ४३ ॥

१०९. **पत्यादि शब्देभ्यः**। परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायं प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा, * सर्वस्याधिपतिस्सर्वस्य वशी सर्वस्येशानः * इत्यादौ। ऐक्योपदेशभेदप्रतिषेधौ तु ब्रह्मकार्यत्वनिबन्धनाविति *तज्जलानिति * सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिभिरेव व्यक्तौ ॥ ४४ ॥ इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ 10 ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य तृतीयः पादः ॥

## ॥ अथ प्रथमाध्याये चतुर्थः पादः ॥

११०. **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च**। कठवल्लीषु *इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥ *इत्यत्र किं साङ्ख्योक्तं प्रधानमव्यक्तशब्दाभिधेयम्, उत नेति संशयः। प्रधानमिति पूर्वः पक्षः, *महतः परमित्या दितत्तन्त्रप्रक्रियाप्रत्यभिज्ञानात्, *पुरुषान्न परं किञ्चिदिति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च। राद्धान्तस्तु— नाव्यक्तशब्देन प्रधानमिह गृह्यते। पूर्वत्र *आत्मानं रथिनं विद्धि शरीरं रथमेव चेत्यादिना उपासनानिर्वृत्तये वश्येन्द्रियत्वापादानाय, ये आत्मशरीरबुद्धिमनइन्द्रियविषयाः, रथिरथसारथिप्रग्रहहयगोचरत्वेन रूपिताः; तेषु वशीकार्यत्वे पराः *इन्द्रियेभ्यः परा इत्यादिनोच्यन्ते; तत्र चेन्द्रियादयः स्वशब्देनैव गृह्यन्ते, रथत्वेन रूपितं शरीरमिहाव्यक्तशब्देन गृह्यत इति नेह तत्तन्त्रप्रक्रियाप्रत्यभिज्ञागन्धः। *अव्यक्तात्पुरुषः पर इति च न पञ्चविंशकः;

अपि तु प्राप्यः परमात्मैव । अन्तर्यामितयोपासनस्याप्युपायभूत इति स इह वशीकार्यकाष्ठात्वेन * पुरुषान्न परं किञ्चिदित्युक्तः ॥

सूत्रार्थस्तु— एकेषां— कठानां शाखायाम् , आनुमानिकं— प्रधानं जगत्कारणत्वेन * महतः परमव्यक्तमित्याम्नायते इति चेत् ; तन्न, अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तस्य गृहीतेः— पूर्वत्रात्मादिषु रथिरथादिरूपकविन्यस्तेषु रथत्वेन रूपितस्य शरीरस्यात्राव्यक्तशब्देन गृहीतेरित्यर्थः । अतो वशीकार्यत्वे परा इहोच्यन्ते । दर्शयति चैनमर्थं वाक्यशेषः, इन्द्रियादीनां नियमनप्रकारं प्रतिपादयन् * यच्छेद्वाङ्मनसी * इत्यादिः ॥

कथमव्यक्तशब्दस्य शरीरं वाच्यं भवतीत्याशङ्क्याह---

१११. **सूक्ष्मं तु तदर्हत्वात्** । तुशब्दोऽवधारणे । सूक्ष्मम्-- अव्यक्तमेवावस्थान्तरापन्नं शरीरं भवति, तदवस्थस्यैव कार्यार्हत्वात ॥ २ ॥

यदि रूपकविन्यस्ता आत्मादय एव वशीकार्यत्वे पराः * इन्द्रियेभ्यः परा इत्यादिना गृह्यन्ते ; तर्हि * अव्यक्तात्पुरुषः परः, पुरुषान्न परं किञ्चिदिति पुरुषग्रहणं किमर्थमित्यत आह—

११२. **तदधीनत्वादर्थवत्** । अन्तर्यामिरूपेणावस्थितपुरुषाधीनत्वादात्मादिकं सर्व रथिरथत्वादिना रूपितम् अर्थवत् — प्रयोजनवद्भवति । अत उपासननिर्वृत्तौ वशीकार्यकाष्ठा परमपुरुष इति तदर्थमिह, रूपकविन्यस्तेषु परिगृह्यमाणेषु पुरुषस्यापि ग्रहणम् । उपासननिर्वृत्त्युपायकाष्ठा पुरुषः प्राप्यश्चेति * पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्युक्तम् । भाष्यप्रक्रियया वा नेयमिदं सूत्रम्— परमपुरुषशरीरतया तदधीनत्वात भूतसूक्ष्ममव्याकृतमर्थवदिति तदिहाव्यक्तशब्देन गृह्यते ; नाब्रह्मात्मकं स्वनिष्ठं तन्त्रसिद्धमिति ॥ ३ ॥

११३. **ज्ञेयत्वावचनाच्च** । यदि तन्त्रसिद्धप्रक्रियेहाभिप्रेता ; तदाऽव्यक्तस्यापि ज्ञेयत्वं वक्तव्यम् । * व्यक्ताव्यक्तज्ञविज्ञानात् * इति हि तत्प्रक्रिया । न ह्यव्यक्तमिह ज्ञेयत्वेनोक्तम्, अतश्चात्र न तन्त्रप्रक्रियागन्धः ॥ ४ ॥

११४. **वदतीति चेन्न प्राज्ञो हि प्रकरणात्** । * अशब्दमस्पर्शमित्युपक्रम्य * महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते * इति प्रधानस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत् ; तन्न, * अशब्दमस्पर्शमित्यादिना प्राज्ञः— परमपुरुष एव ह्यत्रोच्यते ; * सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् * एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते * इति प्राज्ञस्यैव प्रकृतत्वात् ॥ ५ ॥

११५. **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।** अस्मिन्प्रकरणे * येयं प्रेते विचिकित्सा मनुष्ये * इत्यारभ्यासमाप्तेः परमपुरुषतदुपासनोपासकानां त्रयाणामेवैवं ज्ञेयत्वेन उपन्यासः प्रश्नश्च दृश्यते, न प्रधानादेस्तान्त्रिकस्यापि । अतश्च न प्रधानमिह ज्ञेयत्वेनोक्तम् ॥ ६ ॥

११६. **महद्वच्च ।** यथा * बुद्धेरात्मा महान्परः * इत्यात्मशब्दसामानाधिकरण्यान्महच्छब्देन न तान्त्रिकं महत्तत्त्वं गृह्यते, एवमव्यक्तशब्देनापि न तान्त्रिकं प्रधानम् ॥ ७ ॥ इति आनुमानिकाधिकरणम् ।

११७. **चमसवदविशेषात् ।** श्वेताश्वतरे * अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ इत्यत्र किमजाशब्देन तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिकेति संशयः । तन्त्रसिद्धेति पूर्वः पक्षः, * अजामेकामित्यस्या अकार्यत्वप्रतीतेः, बह्वीनां प्रजानां स्वातन्त्र्येण कारणत्वश्रवणाच्च । राद्धान्तस्तु— न तन्त्रसिद्धायाः प्रकृतेरत्र ग्रहणम्, जननविरहश्रवणमात्रेण तन्त्रसिद्धायाः प्रकृतेः प्रतीतिनियमाभावात् । न हि यौगिकानां शब्दानामर्थप्रकरणादिभिर्विशेष्यव्यवस्थापकैर्विना विशेषे वृत्तिनियमसंभवः ; न चास्यास्स्वातन्त्र्येण सृष्टिहेतुत्वमिह प्रतीतम्, अपि तु सृष्टिहेतुत्वमात्रम् ; तत् ब्रह्मात्मिकायाश्च न विरुद्धम् । अत्र तु ब्रह्मात्मिकाया एव शाखान्तरसिद्धायाः एतत्सरूपमन्त्रोदितायाः प्रत्यभिज्ञानात्सैवेति निश्चीयते ॥

सूत्रार्थस्तु— नायमजाशब्दस्तन्त्रसिद्धप्रधानविषयः ; कुतः ? चमसवदविशेषात् ; यथा * अर्वाग्बिलश्चमसः * इति मन्त्रे चमनसाधनत्वयोगेन प्रवृत्तस्य चमसशब्दस्य शिरसि प्रवृत्तौ * यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमसः * इति वाक्यशेषे विशेषो दृश्यते ; तथा * अजामेकामित्यजाशब्दस्य तन्त्रसिद्धप्रधाने वृत्तौ विशेषाभावान्न तद्ग्रहणं न्याय्यम् ॥ ८ ॥

अस्ति तु ब्रह्मात्मिकाया एव ग्रहणे विशेष इत्याह—

११८. **ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ।** ज्योतिः— ब्रह्म यस्याः उपक्रमः कारणम्, सा ज्योतिरुपक्रमा । तुशब्दोऽवधारणे । ब्रह्मकारणिकैवैषाऽजा ; तथा ह्यधीयत एके, यथारूपोऽयमजायाः प्रतिपादको मन्त्रः ; तथारूपमेव मन्त्रं ब्रह्मात्मिकायाः तस्याः प्रतिपादकमधीयत एके शाखिनः * अणोरणीयान्महतो महीयान् * इत्यादिना ब्रह्म प्रतिपाद्य, * सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्तजिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहितास्सप्तसप्त । अतस्समुद्रा गिरयश्च सर्वे * इत्यादिना ब्रह्मण उत्पन्नत्वेन ब्रह्मात्मकतया सर्वानुसन्धानविधानसमये * अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् * इति प्रतिपाद्यमाना ब्रह्मात्मिकैवेति तत्प्रत्यभिज्ञानादिहाप्यजा ब्रह्मात्मिकैवेति निश्चीयते ॥ ९ ॥

अजात्वं ज्योतिरुपक्रमात्वं च कथमुपपद्यते इत्यत आह—

११९. **कल्पनोपदेशाच्च मध्वादिवदविरोधः।** कल्पना सृष्टिः, * सूर्याचन्द्रमसौ धाता यथा-पूर्वमकल्पयत् * इत्यादिदर्शनात्। * अस्मान्मायी सृजते विश्वमेतत् * इति हि सृष्टिरिहोपदिश्यते। प्रलय-वेलायामेषा प्रकृतिः परमपुरुषाश्रया कारणावस्था अतिसूक्ष्मावयवा शक्तिरूपेणावतिष्ठते; तदवस्थाभिप्रायेणास्या अजात्वम्। सृष्टिवेलायां पुनस्तच्छरीरात् ब्रह्मणः स्थूलावस्था जायते; तदवस्था ज्योतिरुपक्रमेति न कश्चि-द्विरोधः। मध्वादिवत्— यथा आदित्यस्यैकस्यैव कार्यावस्थायाम् * असौ वा आदित्यो देवमधु * इति वस्वादि-भोग्यरसाधारतया मधुत्वम्, तस्यैव * अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता * इत्यादिना नामरूपप्रहाणेन कारणावस्थायां सूक्ष्मस्यैकस्यैवावस्थानं न विरुध्यते, तद्वत्॥ १०॥ इति चमसाधिकरणम्॥ 2॥

१२०. **न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च।** वाजसनेयके * यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवंमन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् * इत्यत्र किं साङ्ख्योक्तानि पञ्चविंशति-तत्त्वानि प्रतिपाद्यन्ते, उत नेति संशयः। तान्येवेति पूर्वः पक्षः। * पञ्च पञ्चजना इति हि पञ्चसङ्ख्याविशिष्टाः पञ्चजनाः पञ्चविंशतिस्संपद्यन्ते। कथम्? पञ्चजना इति समाहारविषयोऽयं समासः; पञ्चपूल्यः इतिवत्। पञ्चभिर्जनैरारब्धम्समूहः पञ्चजनः। पञ्चजनीत्यर्थः। लिङ्गव्यत्ययश्छान्दसः। पञ्चजना इति बहुवचनात्समूह-बहुत्वं चावगम्यते। ते च कतीत्यपेक्षायां पञ्च पञ्चजनाः इति पञ्चशब्दविशेषिताः पञ्चजनसमूहा इति पञ्च-विंशतिस्तत्त्वानि भवन्ति। मोक्षाधिकारात्तान्त्रिकाण्येवेति निश्चीयन्ते। एवं निश्चिते सति * तमेवं मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतमिति पञ्चविंशकमात्मानं ब्रह्मभूतं विद्वानमृतो भवतीति। राद्धान्तस्तु— * यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः * इति यच्छब्दनिर्दिष्टब्रह्माधारत्वात्तदाधेयानां तत्त्वानां ब्रह्मात्मकत्वमवगम्यते; यच्छब्दनिर्दिष्टं च * तमेवं मन्य आत्मानम् (इति तच्छब्देन परामृश्य, * ब्रह्मामृतोऽमृतम्) इति निर्देशात् ब्रह्मेति निश्चीयते। अतो न तान्त्रिकप्रसङ्गः॥

सूत्रार्थस्तु— * पञ्च पञ्चजना इत्यत्र पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तान्त्रिकाणीमानि तत्त्वानि, यस्मिन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तान्त्रिकेभ्यो नानाभावात्— एषां तत्त्वानां पृथग्भावादित्यर्थः। अति-रेकाच्च— तान्त्रिकेभ्यस्तत्त्वातिरेकप्रतीतेश्च: यस्मिन्निति निर्दिष्टमतिरिक्तमाकाशश्च। * न सङ्ख्योपसङ्ग्रहा-दपीत्यपिशब्देन सङ्ख्योपसङ्ग्रहो न संभवतीत्याह, आकाशस्य पृथङ्निर्देशात्। अतः पञ्चजनाः इति न समाहार-विषयः, अपि तु * दिक्सङ्ख्ये संज्ञायाम् * इति संज्ञाविषयः; पञ्चजनसंज्ञिताः केचित्, ते च पञ्चैवेति। सप्त सप्तर्षयः इतिवत्॥ ११॥

१२१. **प्राणादयो वाक्यशेषात्**। पञ्चजनसंज्ञिताः पञ्च पदार्थाः प्राणादय इति वाक्यशेषादवगम्यते। * प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः * इति। ब्रह्मात्मकानीन्द्रियाणि पञ्च पञ्चजना इति निर्दिष्टानि। जननाच्च जनाः ॥ १२ ॥

काण्वपाठेऽन्नवर्जितानां चतुर्णां निर्देशात् पञ्चजनसंज्ञितानीन्द्रियाणीति कथं ज्ञायत इत्यत्राह—

१२२. **ज्योतिषैकेषामसत्यन्ने**। एकेषां— काण्वानां वाक्यशेषे असत्यन्नशब्दे वाक्योपक्रमगतेन * तं देवा ज्योतिषां ज्योतिरिति ज्योतिश्शब्देन पञ्चजनाः इन्द्रियाणीति विज्ञायन्ते। कथम्? * ज्योतिषां ज्योतिरिति ब्रह्मणि निर्दिष्टे प्रकाशकानां प्रकाशकं ब्रह्मेति प्रतीयते। के ते प्रकाशका इत्यपेक्षायां * पञ्च पञ्चजनाः * इत्यनिर्ज्ञातविशेषाः पञ्चसंख्यासंख्याताः प्रकाशकानि पञ्चेन्द्रियाणीत्यवगम्यते। अतः * यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः * इतीन्द्रियाणि भूतानि च ब्रह्मणि प्रतिष्ठितानीति न तान्त्रिकतत्त्वगन्धः ॥ १३ ॥ इति सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

१२३. **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः**। जगत्कारणवादीनि वेदान्तवाक्यानि किं प्रधानकारणतावादैकान्तानि, उत ब्रह्मकारणतावादैकान्तानीति संशयः। प्रधानकारणतावादैकान्तानीति पूर्वः पक्षः. * सदेव सोम्येदमग्र आसीदिति कचित्सत्पूर्विका सृष्टिराम्नायते; अन्यत्र * असदेवेदमग्र आसीत * असद्वा इदमग्र आसीत् * तथा * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत * इति। अव्याकृतं हि प्रधानम्। अतः प्रधानकारणतावादनिश्चयात्तदेकान्तान्येव। राद्धान्तस्तु— * सत्यं ज्ञानमनन्तं ब्रह्मेत्युपक्रम्य * तस्माद्वा एतस्मादात्मन आकाशस्संभूतः * तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्तस्यैव ब्रह्मणः कारणावस्थायां नामरूपविभागसंबन्धितया सद्भावाभावात् असदव्याकृतादिशब्देन व्यपदेश इति ब्रह्मकारणतावादैकान्तान्येव। सूत्रार्थस्तु— आकाशादिपदचिह्नितेषु * तस्माद्वा एतस्मादात्मन आकाशस्संभूतः * इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्, सर्वेषु सृष्टिवाक्येषु यथाव्यपदिष्टस्यैव कारणत्वेनोक्तेः ब्रह्मकारणतावादैकान्तानि। यथाव्यपदिष्टम्— सार्वात्म्यादियुक्ततयाऽस्माभिर्व्यपदिष्टम् ॥ १४ ॥

तथा सति * असद्वा इदमग्र आसीदिति किं ब्रवीतीत्यत आह—

१२४. **समाकर्षात्**। * सोऽकामयत, बहु स्यां प्रजायेयेतीति बहुभवनसङ्कल्पपूर्वकं जगत्सृजतो ब्रह्मणस्सर्वज्ञस्य * असद्वा इदमग्र आसीदित्यत्र समाकर्षात् कारणावस्थायां नामरूपसंबन्धित्वाभावेन असदिति ब्रवीति। एवं * तद्धेदं तर्ह्यव्याकृतमासीदित्यादिषु * स एष इहानुप्रविष्ट आनखाग्रेभ्यः *

* पश्यत्यचक्षुः * इत्यादिपूर्वापरपर्यालोचनया तत्तत्र सर्वज्ञस्य समाकर्षो द्रष्टव्यः ॥ १५ ॥ इति कारणत्वाधिकरणम् ॥ 4 ॥

१२५. **जगद्वाचित्वात्** । कौषीतकिनां * ब्रह्म ते ब्रवाणि * इत्युपक्रम्य * यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः * इत्यत्र वेदितव्यतयोपदिष्टः साङ्ख्यतन्त्रसिद्धः पुरुषः, उत परमात्मेति संशयः । पुरुष एव प्रकृतिवियुक्त इति पूर्वः पक्षः, * यस्य वैतत्कर्मेति पुण्यपापरूपकर्मसंबन्धितयोपलक्षितत्वात् । राद्धान्तस्तु— * यस्य वैतत्कर्मेति कर्मशब्दस्य क्रियत इति व्युत्पत्त्या जगद्वाचित्वात् कृत्स्नं जगद्यस्य कार्यम्, स परमपुरुष एव वेदितव्यतयोपदिष्टो भवतीति । सूत्रमपि व्याख्यातम् ॥ १६ ॥

१२६. **जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्** । * एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते * इत्यादि भोक्तृत्वरूपजीवलिङ्गात्, * अथास्मिन्प्राण एवैकधा भवति * इति मुख्यप्राणलिङ्गाच्च नायं परमात्मेति चेत्; तस्य परिहारः प्रतर्दनविद्यायामेव व्याख्यातः । पूर्वापरप्रकरणपर्यालोचनया परमात्मपरमिदं वाक्यमिति निश्चिते सति अन्यलिङ्गानि तदनुगुणतया नेतव्यानीत्यर्थः ॥ १७ ॥

ननु * तौ ह सुप्तं पुरुषमाजग्मतुः * इति प्राणनामभिरामन्त्रणाश्रवणयष्टिघातोत्थापनादिना शरीरेन्द्रियप्राणाद्यतिरिक्तजीवात्मसद्भावप्रतिपादनपरमिदं वाक्यमित्यवगम्यत इत्यत उत्तरं पठति——

१२७. **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** । तुशब्दश्शङ्कानिवृत्त्यर्थः । जीवसङ्कीर्तनम् अन्यार्थम्— जीवातिरिक्तब्रह्मसद्भावप्रतिबोधनार्थमिति प्रश्नप्रतिवचनाभ्यामवगम्यते । प्रश्नस्तावज्जीवप्रतिपादनानन्तरं * क्वैष एतद्बालाके पुरुषोऽशयिष्ट * इत्यादिकः सुषुप्तजीवाश्रयविषयतया परमात्मपर इति निश्चितः । प्रतिवचनमपि * अथास्मिन्प्राण एवैकधा भवति * इत्यादिकं परमात्मविषयमेव । सुप्तपुरुषाश्रयतया हि प्राणशब्दनिर्दिष्टः परमात्मैव * सता सोम्य तदा संपन्नो भवतीत्यादिभ्यः । जैमिनिग्रहणमुक्तस्यार्थस्य पूज्यत्वाय । अपि चैवमेके— एके वाजसनेयिनः इदमेव बालाक्यजातशत्रुसंवादगतं प्रश्नप्रतिवचनरूपं वाक्यं परमात्मविषयं स्पष्टमधीयते * क्वैष एतदित्यादि * य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते * इत्येतदन्तम् ॥ १८ ॥ इति जगद्वाचित्वाधिकरणम् ॥ 5 ॥

१२८. **वाक्यान्वयात्** । बृहदारण्यके मैत्रेयीब्राह्मणे * न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय * इत्यारभ्य, * आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः * इत्यादौ द्रष्टव्यतया निर्दिष्टः पुरुषः तन्त्रसिद्धः, उत परमात्मेति संशयः । तन्त्रसिद्धः पञ्चविंशक एवेति पूर्वः पक्षः ।

पतिजायापुत्रवित्तमित्रपश्वादिप्रियसंबन्ध्यात्मा न परमात्मा भवितुमर्हति । स एव हि * आत्मा वा अरे द्रष्टव्य इति प्रतिपाद्यते । राद्धान्तस्तु– न पत्यादीनां कामाय पत्यादयः प्रिया भवन्ति, आत्मनस्तु कामायेत्युक्त्वा, * आत्मा वा अरे द्रष्टव्यः इति निर्दिष्ट आत्मा, जीवातिरिक्तस्सत्यसङ्कल्पस्सर्वज्ञः परमात्मैव ; यत्सङ्कल्पायत्तं पत्यादीनां स्वसंबन्धिनः प्रति प्रियत्वम् , स हि सत्यसंकल्पः परमात्मा । आत्मज्ञानेन सर्वज्ञानादयोऽपि वक्ष्यमाणाः परमात्मन्येव संभवन्ति ।

सूत्रार्थस्तु-- वाक्यस्य कृत्स्नस्य परमात्मन्येवान्वयात् द्रष्टव्यतया निर्दिष्ट आत्मा परमात्मैव * अमृतत्वस्य तु नाशाऽस्ति वित्तेन * आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् * इदं सर्वं यदयमात्मा * तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः * येनेदं सर्वं विजानाति तं केन विजानीयात् * इति हि कृत्स्नस्य वाक्यस्य परमात्मन्यन्वयो दृश्यते ॥ १९ ॥

* एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यतीति जीवलिङ्गस्य मतान्तरेण निर्वाहमाह—

१२९. **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः।** एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य परमात्मकार्यतया परस्मादात्मनोऽनन्यो जीव इति जीवशब्देन परमात्मनोऽभिधानमित्याश्मरथ्यमतम् ॥ २० ॥

१३०. **उत्क्रमिष्यत एवंभावादित्यौडुलोमिः।** * परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते * इति शरीरात् उत्क्रमिष्यतः अस्य जीवस्य परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमिति औडुलोमिराचार्यो मेने ॥ २१ ॥

१३१. **अवस्थितेरिति काशकृत्स्नः।** * य आत्मनि तिष्ठन् * इत्यादिभिर्जीवात्मन्यन्तरात्मतया परमात्मनः अवस्थितेः जीवात्मशब्दस्य परमात्मनि पर्यवसानाज्जीवात्मशब्देन परमात्मनोऽभिधानमिति काशकृत्स्न आचार्यो मन्यते। इदमेव सूत्रकाराभिमतमित्यवगम्यते, त्रयाणामन्योन्यविरोधात , इत परमवचनाच्च ॥ २२ ॥ इति वाक्यान्वयाधिकरणम् ॥ 6 ॥

१३२. **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्।** परं ब्रह्म किं जगतो निमित्तकारणमात्रम् , उतोपादानकारणमपीति संशयः । निमित्तकारणमात्रमिति पूर्वः पक्षः, मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनात् ; * अस्मान्मायी सृजते विश्वमेतत् * इत्यादिभिर्भेदप्रतिपादनात् , ब्रह्मणोऽविकारत्वश्रुतिविरोधाच्च । राद्धान्तस्तु– * येनाश्रुतं श्रुतमिति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानान्यथानुपपत्त्या * यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयमिति मृत्तत्कार्यदृष्टान्तेन तदुपपादनाच्च जगदुपादानकारणमपि ब्रह्मैवेति विज्ञायते । प्रमाणान्तरावसितसकलवस्तुविलक्षणस्य शास्त्रैकसमधिगम्यस्य परस्य ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेः कार्यकारणोभयावस्थायामपि

स्वशरीरभूतचिदचित्प्रकारतयाऽवस्थितस्यैकस्यैव निमित्तत्वमुपादानत्वं चाविरुद्धम्। शरीरभूताचिद्वस्तुगतो विकार इति कार्यावस्थावस्थितस्यापि शरीरिणः परमात्मनोऽविकारित्वं सिद्धमेव। चिदचिद्वस्तुशरीरस्य ब्रह्मण एवोपादानत्वेऽपि ब्रह्मण्यपुरुषार्थविकारास्पर्शप्रदर्शनाय हि * अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध इति व्यपदेशः। प्रतिज्ञादृष्टान्तानुपरोधात् उपादानं च ब्रह्मैवेति सूत्रार्थः॥ २३॥

१३३. **अभिध्योपदेशाच्च**। * सोऽकामयत बहु स्याम् * तदैक्षत बहु स्यां प्रजायेयेति स्रष्टुर्ब्रह्मणस्स्वस्यैव जगदाकारेण बहुभवनचिन्तनोपदेशाच्च जगदुपादानं निमित्तं च ब्रह्मैवेति निश्चीयते॥ २४॥

१३४. **साक्षाच्चोभयाम्नानात्**। * किं स्विद्वन क उ स वृक्ष आसीत् * इत्यादिना जगदुपादाननिमित्तादौ पृष्टे * ब्रह्म वनं ब्रह्म स वृक्ष आसीत * ब्रह्माध्यतिष्ठत् * इत्युपादानं निमित्तं चोभयं ब्रह्मैवेति हि साक्षादाम्नायते; अतश्चोभयं ब्रह्म॥ २५॥

१३५. **आत्मकृतेः**। * तदात्मानं स्वयमकुरुतेति स्रष्टुरात्मन एव जगदाकारेण कृतिरुपदिश्यते; अतश्चोभयं ब्रह्मैव। नामरूपभावाभावाभ्यामेकस्य कर्मकर्तृभावो न विरुद्धः॥ २६॥

यद्यात्मानमेव ब्रह्म जगदाकारं करोति, तर्हि ब्रह्मणोऽपहतपापत्वादिकमनवधिकातिशयानन्दस्वरूपत्वं सर्वज्ञत्वमित्यादि सर्वं विरुध्यते, अज्ञत्वासुखित्वकर्मवश्यत्वादिविपरीतरूपत्वाज्जगत इत्यत उत्तरं पठति—

१३६. **परिणामात्**। अज्ञब्रह्मविवर्तवादे हि तद्भवत्येव, अज्ञानस्य तत्कार्यरूपानन्तापुरुषार्थस्य च वेदान्तजन्यज्ञाननिवर्त्यस्य ब्रह्मण्येवान्वयात् तदा शास्त्रस्य भ्रान्तजल्पितत्वापाताच्च। अविभक्तनामरूपसूक्ष्मचिदचिद्वस्तुशरीरकस्य ब्रह्मणो विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरत्वेन परिणामो हि वेदान्तेषूपदिश्यते, * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत * इत्येवमादिभिः। अपुरुषार्थाश्च विकाराश्शरीरभूतचिदचिद्वस्तुगताः। कारणावस्थायां कार्यावस्थायां चात्मभूतं ब्रह्म अपहतपाप्मत्वादिगुणकमेव। स्थूलसूक्ष्मावस्थस्य कृत्स्नस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वम्, ब्रह्मणश्च तदात्मत्वम् * यः पृथिव्यां तिष्ठन्.... यस्य पृथिवी शरीरमित्यारभ्य * यस्याव्यक्तं शरीरम् यस्याक्षरं शरीरम् यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देवः * इत्येवमादिश्रुतिशतसमधिगतम्। अतः सर्वमनवद्यम्॥ २६॥

१३७. **योनिश्च हि गीयते**। * यद्भूतयोनिं परिपश्यन्ति धीराः * कर्तारमीशं पुरुषं ब्रह्मयोनिम् * इत्यादिषु सर्वस्य भूतजातस्य परमपुरुषो योनित्वेन गीयते। हिशब्दो हेतौ। यस्माद्योनिरिति गीयते, तस्माच्चोपादानमपि ब्रह्म। योनिशब्दश्चोपादानकारणपर्यायः॥ २८॥ इति प्रकृत्यधिकरणम्॥ 7॥

१३८. **एतेन सर्वे व्याख्याता व्याख्याताः ।** * यतो वा इमानीत्यादिपूदाहृतेषु वाक्येषु * जन्माद्यस्य यतः * इत्यादिनोक्तन्यायकलापेन सर्वे वेदान्ताः ब्रह्मपरा व्याख्याताः । पदाभ्यासोऽध्याय-परिसमाप्तिद्योतनार्थः ॥ २९ ॥ इति सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

---

श्रीमते रामानुजाय नमः ।

# ॥ अथ द्वितीयाध्याये प्रथमः पादः ॥

१३९. **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।** वेदान्तानां समस्तचिदचिद्वस्तुविलक्षणास्पृष्टहेयगन्धसर्वज्ञताद्यनन्तकल्याणगुणाकरब्रह्मैकपरत्वं प्रतिपादितं कपिलस्मृतिविरोधेन चालयितुं शक्यम्, उत नेति संशयः । शक्यमिति पूर्वः पक्षः, श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वे स्थितेऽपि वेदान्तवेद्यार्थस्य दुर्ग्रहत्वेन अल्पश्रुतैर्मन्दमतिभिराप्तप्रणीतस्मृत्युपबृंहणेन विना तेषां निश्चयो नोपपद्यते । कपिल-स्मृतिः केवलतत्त्वपरेति तयैव ह्युपबृंहणं न्याय्यम् । अन्यथा आप्तप्रणीतायाः केवलतत्त्वपरायास्तस्या अनवकाश-प्रसङ्ग इति वेदान्तवेद्यं जगत्कारणं प्रधानम् । राद्धान्तस्तु— वेदान्तस्योपबृंहणापेक्षत्वेऽप्याप्ततममन्वादिस्मृतिभि-र्वेदान्ताविरोधिनीभिरेवोपबृंहणं न्याय्यम्, अन्यथा तासां बह्वीनामनवकाशप्रसङ्गो महानयं दोषस्स्यात् । न च तासां धर्मप्रतिपादनांशोपबृंहणत्वेन सावकाशत्वम्, यतो धर्माणामपि स्वरूपं परब्रह्मभूतपरमपुरुषाराधनत्वम् * इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः * * यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत * इत्यादिश्रुतिस्मृतिभिः । सूत्रमपि व्याख्यातम् ॥ १ ॥

अतीन्द्रियार्थसाक्षात्कारसमर्थस्य कपिलस्य वेदान्तानां ब्रह्मपरत्वानुपलब्धेः प्रधानपरत्वमेवाश्रयणीय-मित्यत उत्तरं पठति—

१४०. **इतरेषां चानुपलब्धेः ।** इतरेषां मन्वादीनां वेदविदग्रेसराणां सर्वातीन्द्रियार्थसाक्षा-त्कारसमर्थानां प्रधानपरत्वानुपलब्धेर्ब्रह्मपरत्वोपलब्धेश्च ब्रह्मपरत्वमेवाश्रयणीयम्; वेदान्तप्रतिपन्नार्थविरुद्धायास्तु कपिलोपलब्धेर्भ्रान्तिमूलत्वं कल्पयितव्यम् ॥ २ ॥ इति स्मृत्यधिकरणम् ॥ १ ॥

१४१. **एतेन योगः प्रत्युक्तः** । किं वेदान्तानां योगस्मृत्योपबृंहणं न्याय्यम्, उत नेति संशयः । न्याय्यमिति पूर्वः पक्षः, कृत्स्नवेदप्रवर्तनाधिकृतहिरण्यगर्भप्रणीतत्वाद्योगस्य, ईश्वरसद्भावाभ्युपगमाच्च । अतो योगस्मृत्योपबृंहितत्वेन वेदान्तानामब्रह्मात्मकप्रधानोपादानप्रतिपादनपरत्वम् । राद्धान्तस्तु— कपिलस्मृतिवद्वेदविरुद्धत्वाविशेषादनादरणीयैव योगस्मृतिः ; हिरण्यगर्भस्यापि क्षेत्रज्ञत्वेन भ्रमसंभवात् योगस्मृतेरपि भ्रान्तिमूलकत्वम् । सूत्रमपि व्याख्यातम् ॥ ३ ॥ इति योगप्रत्युक्त्यधिकरणम ॥ 2 ॥

१४२. **न विलक्षणत्वादस्य तथात्वं च शब्दात्** । किं वेदान्तानां जगत्कारणतया प्रधानपरत्वम्, उत ब्रह्मपरत्वमिति संशयः । प्रधानपरत्वमिति पूर्वः पक्षः, अज्ञत्वादिना जगतो ब्रह्मविलक्षणत्वेन ब्रह्मकार्यत्वप्रतिपादनासंभवात्, सालक्षण्येन प्रधानकार्यत्वप्रतिपादनपरत्वस्य च संभवात् । राद्धान्तस्तु— माक्षिकादिभ्यः क्रिम्यादीनां विलक्षणानामुत्पत्तिदर्शनात् ब्रह्मविलक्षणस्य जगतः तत्कार्यत्वं संभवत्येव इति । सूत्रार्थस्तु— अज्ञत्वेनासुखत्वेन चोपलब्धस्य चास्य चिदचिन्मिश्रस्य जगतः सर्वज्ञाद्धेयप्रत्यनीकान्निरतिशयानन्दाद्ब्रह्मणो विलक्षणत्वेन जगतो ब्रह्मकार्यत्वप्रतिपादनं वेदान्तानां न संभवति । तथात्वं— विलक्षणत्वं च शब्दादवगम्यते, न केवलं प्रत्यक्षाद्युपलब्ध्या, * विज्ञानं चाविज्ञानं च * अनीशया शोचति मुह्यमानः * अनीशश्चात्मा बध्यते भोक्तृभावात् * इत्यादेः ॥ ४ ॥

* आपो वा अकामयन्त * तं पृथिव्यब्रवीत् * इत्यादौ पृथिव्यादेरपि ज्ञानकार्यं व्यपदिश्यते ; तस्मात्, * अविज्ञानञ्चेत्येतदन्यपरमित्यत उत्तरं पठति —

१४३. **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** । तुशब्दश्चोद्यं व्यावर्तयति ; पृथिव्याद्यभिमानिदेवतानामयं व्यपदेशः । कुतोऽवगम्यते, विशेषानुगतिभ्यां— विशेषः— विशेषणम् * हन्ताहमिमास्तिस्रो देवताः इति पृथिव्यादेर्देवताशब्देन विशेषणं दृश्यते, * सर्वा ह वै देवता अहं श्रेयसे विवदमानाः * इति च वागादिप्राणपर्यन्तस्य च । तथा अनुगतिः— अनुप्रवेश, अग्न्यादीनां वागाद्यनुप्रवेशो दृश्यते, * अग्निर्वाग्भूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् वायुः प्राणो भूत्वा नासिके प्राविशदित्यादौ ॥ ५ ॥

१४४ **दृश्यते तु** । तुशब्दः पक्षं व्यावर्तयति, माक्षिकादिभ्यो विलक्षणानां क्रिम्यादीनामुत्पत्तिर्दृश्यते ; अतो ब्रह्मविलक्षणस्यापि जगतस्तत्कार्यत्वं संभवति ॥ ६ ॥

१४५. **असदिति चेन्न प्रतिषेधमात्रत्वात्** । यदि कार्यस्य कारणाद्विलक्षणद्रव्यत्वमभ्युपगम्यते, तर्हि कारणे कार्यं न सद्भवतीत्यसत्कार्यवादोऽभ्युपगतस्स्यात् ; तथा सति * सर्वं खल्विदं ब्रह्मेति सामानाधि-

करण्यव्यपदेशो न घटत इति चेत्; तन्न, कार्यकारणयोस्सालक्षण्यनियमप्रतिषेधमात्रत्वादस्माभिः पूर्वमभिहितस्य। कार्यकारणयोरेकद्रव्यत्वं स्वीकृतमेव। एकमेव कारणावस्थं द्रव्यं कार्यावस्थां भजमानं सलक्षणावस्थामपि भजते, विलक्षणावस्थामपीत्यर्थः ॥ ७ ॥

१४६. **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्**। यदि ब्रह्मैव सर्वज्ञं सत्यसङ्कल्पं निरतिशयानन्दमपहतपाप्मत्वादिस्वरूपं तद्विपरीतजगदवस्थां भजते; तर्हि पिण्डत्वघटत्वावस्थमृद्द्रव्यवत् सर्वज्ञत्वमपहतपाप्मत्वमज्ञत्वं कर्मवश्यत्वं च ब्रह्मणः प्रसज्येतेति विरुद्धार्थाभिधानाद्वेदान्तवाक्यमसमञ्जसं स्यात्। अपीताविति सृष्ट्यादेः प्रदर्शनार्थम्। जगतो ब्रह्मण्यपीतौ ब्रह्मण उत्पत्तावपीत्यर्थः। अपीतिरप्ययः ॥ ८ ॥

१४७. **न तु दृष्टान्तभावात्**। न ब्रह्मण्यज्ञत्वादयः प्रसज्येरन्; अत एव न वेदान्तानामसामञ्जस्यम्। तुशब्दः प्रसक्तस्यासंभावनीयतां द्योतयति। एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थायां दृष्टान्तसद्भावात्, यथा मनुष्यो जातो बालो युवा स्थविरो भवतीत्यत्र मनुष्यशरीरकस्य चेतनस्यैव सर्वावस्थान्वयेऽपि जन्मबालयुवत्वस्थविरत्वादीनि नात्मनि सङ्गच्छन्ते; तथा ज्ञानसुखदुःखादयश्च न शरीरे। एवं चिदचिद्वस्तुशरीरकस्य परस्य ब्रह्मणः कार्यकारणोभयावस्थान्वयेऽपि कर्मवश्यत्वाज्ञत्वादयः शरीरभूतचिदचिद्वस्तुगताः। अपहतपाप्मत्वसर्वज्ञत्वादयः परमात्मन्यात्मभूतेऽवतिष्ठन्ते। सर्वावस्थस्य चिदचिद्वस्तुनो ब्रह्मशरीरत्वम्, ब्रह्मणश्च तदात्मत्वम्, * यस्य पृथिवी शरीरमित्याद्यन्तर्यामिब्राह्मणादिष्ववगतमिति न कश्चिद्विरोधः ॥ ९ ॥

१४८. **स्वपक्षदोषाच्च**। न केवलं ब्रह्मकारणवादस्य निर्दोषतया तत्समाश्रयणम्, प्रधानकारणवादे दोषाच्चैतत्परित्यज्य स एव समाश्रयणीयः। प्रधानकारणवादे हि निर्विकारस्य चिन्मात्रस्य पुरुषस्य प्रकृतिसन्निधानकृततद्धर्माध्यासमूला जगत्प्रवृत्तिरभ्युपगम्यते; तत्र प्रकृतिसद्भावमात्रे सन्निधाने सति मुक्तस्यापि तद्धर्माध्यासप्रसङ्गः; विकारविशेषे सति सन्निधाने कृत्स्नस्य विकारस्याध्यासपूर्वकत्वान्नाध्यासस्य विकारो हेतुरिति विरुद्धार्थाभिधानादसामञ्जस्यदोष इति न तत्पक्षसंभवगन्धः ॥ १० ॥

१४९. **तर्काप्रतिष्ठानादपि**। कापिलतन्त्रस्य तर्कमूलत्वेन शाक्यादितर्कप्रतिहततयाऽस्य तर्कस्याप्रतिष्ठितत्वाच्च न तत्पक्षसंभवः ॥ ११ ॥

१५०. **अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः**। इतः पूर्वं विद्यमानैस्तर्कैरप्रतिहतत्वं यथा संभवति, तथा प्रधानकारणवादमनुमास्यामह इति चेत्; तथापि तर्काप्रतिष्ठानदोषात् अनिर्मोक्षप्रसङ्गो दुर्वारः; त्वदधिककुतर्ककुशलसद्भावसंभवात् ॥ १२ ॥ इति विलक्षणत्वाधिकरणम् ॥ ३ ॥

१५१. **एतेन शिष्टापरिग्रहा अपि व्याख्याताः।** न परिगृह्यन्ते वैदिकैरित्यपरिग्रहाः; शिष्टाश्च ते अपरिग्रहाश्च शिष्टापरिग्रहाः; एतेन— तर्काप्रतिष्ठानलक्षणकपिलस्मृतिनिरसनहेतुना, परिशिष्टाः कणभक्षादिस्मृतयोऽपि निरस्ता व्याख्याताः। परमाणुकारणवादस्सर्वसंमत इति न तेषां तर्कस्याप्रतिष्ठितत्वमित्यधिकाऽऽशङ्का। तर्कमूलत्वाविशेषात् परमाणूनां शून्यत्वाद्रव्यत्वादिविवादाच्च, तर्कस्याप्रतिष्ठितत्वमेवेति परिहारः ॥ १३ ॥ इति शिष्टापरिग्रहाधिकरणम् ॥ 4 ॥

१५२. **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्।** सर्वात्मभूतस्य परस्य ब्रह्मणः स्वशरीरभूताज्जीवान्निरतिशयानन्दस्वभावतया यो विभाग उक्तः, स किं विभागस्संभवति, उत नेति संशयः। न संभवतीति पूर्वः पक्षः। सर्वचिदचिद्वस्तुशरीरतया सशरीरत्वाद्ब्रह्मणः, सशरीरस्य च सुखदुःखयोर्भोक्तृत्वापत्तेः। तदापत्तिश्च * न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः * इति श्रुतेः। राद्धान्तस्तु— स्यादेव विभागो जीवात्परस्याकर्मवश्यतया। न सशरीरत्वप्रयुक्तस्सुखदुःखयोगः; अपि तु शास्त्रवश्यतया तदतिवृत्तिकृतः; * स एकधा भवति त्रिधा भवतीत्यादिनाऽपगतशरीरस्य मुक्तस्य सशरीरस्याप्यशास्त्रवश्यतया निरस्तनिखिलदुःखत्वदर्शनात्। यथा लोके राजशासनवश्यानां तच्छासनातिवृत्तिनिमित्तदुःखान्वयेऽपि राज्ञः सशरीरस्यापि प्रकारान्तरेण साधर्म्येऽपि स्वशासनावश्यतया न तदतिवृत्तिकृतदुःखान्वयः। विभागः वैलक्षण्यम्। सूत्रमपि व्याख्यातम् ॥ १४ ॥ इति भोक्त्रापत्त्यधिकरणम् ॥ 5 ॥

१५३. **तदनन्यत्वमारम्भणशब्दादिभ्यः।** किं ब्रह्मकार्यं जगत ब्रह्मणोऽन्यत्, उतानन्यदिति संशयः। अन्यदिति पूर्वः पक्षः, तथोपलब्धेः। न हि बुद्धिशब्दान्तरादयः कारणात्कार्यस्यानन्यत्वे कथंचिदुपपद्यन्ते; कारकव्यापारवैयर्थ्यं चानन्यत्वे। अतो वस्तुविरोधादनन्यत्वश्रुतयो लक्षणया नेयाः। राद्धान्तस्तु— * वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत * ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो * सर्वं खल्विदं ब्रह्म तज्जलानिति * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत * इत्यादिश्रुतिशतसिद्धं कार्यस्य जगतः कारणाद्ब्रह्मणोऽनन्यत्वम्। न चात्र वस्तुविरोधगन्धः; कारणीभूतमृदादिद्रव्यस्यैव पृथुबुध्नोदराद्यवस्थान्तरापत्त्या बुद्धिशब्दान्तरादयोऽप्युपपद्यन्ते। तत एव कारकव्यापाराद्यर्थवत्त्वञ्च। एवं कारणस्यैव कार्यावस्थायामपि प्रत्यभिज्ञायमानस्यावस्थान्तरापत्त्यैव सर्वेषूपपन्नेषु अनुपलब्धद्रव्यान्तरकल्पना न संभवति। तस्मात ब्रह्मकार्यं जगत् ब्रह्मणोऽनन्यदेव ॥

सूत्रार्थस्तु— तस्मात् ब्रह्मणः, अनन्यत्वं कार्यस्य जगतः आरम्भणशब्दादिभ्यो वाक्येभ्यस्तदुपपादयद्भ्योऽवगम्यते, आरम्भणमिति शब्द आदिर्येषां पूर्वोक्तानां वाक्यानाम्, तान्यारम्भणशब्दादीनि; तान्यनन्यत्वमुपपादयन्ति ॥ १५ ॥

१५४. **भावे चोपलब्धेः।** घटादिकार्यभावे च तदेवेदं मृद्द्रव्यमित्थमवस्थितमिति कारणस्य उपलब्धेश्च कारणादनन्यत्वं कार्यस्य। यथा देवदत्तस्य बालत्वयुवत्वाद्यवस्थाविशिष्टस्यानन्यत्वम् ॥ १६ ॥

१५५. **सत्त्वाच्चापरस्य।** अपरस्य कार्यस्य कारणे सत्त्वाच्च कारणादनन्यत्कार्यम्। सर्वमिदं घटशरावादिकार्यं पूर्वाह्णे मृदेवासीदिति हि कारणे कार्यमुपलभ्यते। घटशरावादिसंस्थानसंस्थितमेव मृद्द्रव्यं पूर्वकाले पिण्डाकारमुपलब्धमित्यर्थः ॥ १७ ॥

१५६. **असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च।** * असदेवेदमग्र आसीत् * इदं वा अग्रे नैव किञ्चनासीत् * इत्यादिषु कारणावस्थायां कार्यस्यासत्त्वव्यपदेशात् कारणे कार्यं सदित्येतन्नोपपद्यत इति चेन्न, सदितिव्यपदेशहेतुभूतनामरूपावस्थाविरोधिसूक्ष्मावस्थाख्यधर्मान्तरेण योगादसदिति व्यपदिश्यते। कथमिदमवगम्यते? वाक्यशेषाद्युक्तेश्शब्दान्तराच्च। वाक्यशेषस्तावत्— * तदसदेव सन्मनोऽकुरुत स्याम् * इति। असदिति व्यपदिष्टस्यैव मनस्कारप्रतिपादनेन असद्व्यपदेशो धर्मान्तरयोगादित्यवगम्यते। युक्तिश्च धर्मान्तरयोगमेवासद्व्यपदेशहेतुमवगमयति; घटोऽस्ति घटो नास्तीति सदसद्व्यपदेशयोर्घटत्वकपालत्वयोः परस्परविरोधिधर्मयोरेव हेतुत्वे सिद्धे तदतिरिक्तानुपलब्धतुच्छत्वस्य हेतुत्वकल्पनानुपपत्तेः। तथा शब्दान्तरं च * सदेव सोम्येदमग्र आसीदिति समानप्रकरणस्थमसच्छब्दं धर्मान्तरयोगनिमित्तमवगमयति ॥ १८ ॥

१५७. **पटवच्च।** यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपाभ्यां कार्यान्तरादिकं भजन्ते, तद्वद्ब्रह्मापि ॥ १९ ॥

१५८. **यथा च प्राणादिः।** यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते, तद्वद्ब्रह्मापीति तदनन्यत्वं जगतस्सिद्धम् ॥ २० ॥ इति आरम्भणाधिकरणम् ॥ 6 ॥

१५९. **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः।** ब्रह्मणो जगत्कारणत्वं संभवति, नेति संशयः। न संभवतीति पूर्वः पक्षः, * अयमात्मा ब्रह्म * तत्त्वमसीति सामानाधिकरण्येन जीवो ब्रह्मेत्यवगमात्,

जगत्सर्गस्य च जीवदुःखहेतुत्वात् , आत्महिताकरणादिदोषप्रसक्तेः सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मणो जगत्कारणत्वानुपपत्तेः । जीवपरयोर्भेदवादिन्यश्श्रुतयः, जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः, भेदे सत्यनन्यत्वासिद्धेः । औपाधिकभेदविषयाः भेदश्रुतयः, स्वाभाविकाभेदविषया अभेदश्रुतयः इति चेत् ; तत्रेदं वक्तव्यम् , स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति, न वा ? न जानाति चेत् , सर्वज्ञत्वहानिः । जानाति चेत् , स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणः हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या । जीवब्रह्मणोरज्ञानकृतो भेदः, तद्विषया भेदश्रुतिरिति चेत् ; तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो दोषस्तत्फलं च तदवस्थमेव । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति ; अज्ञानेन प्रकाशस्तिरोहितश्चेत् , तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषाः भाष्ये प्रपञ्चिताः । राद्धान्तस्तु— * अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः * तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति * प्रधानक्षेत्रज्ञपतिर्गुणेशः * पृथगात्मानं प्रेरितारं च मत्वा * इत्यादिभिः प्रत्यगात्मनोऽर्थान्तरभूत ब्रह्मेत्यवगमात , जीवकर्मानुगुणतया जगत्सर्गस्य च ब्रह्मणो लीलाप्रयोजनत्वात , जगत्कारणत्वं संभवत्येव । तत्त्वमस्यादिसामानाधिकरण्यनिर्देशः * यस्यात्मा शरीरमित्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वात्तच्छरीरतया जीवप्रकारकब्रह्मप्रतिपादनपरः । सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणावस्थम् , स्थूलचिदचिद्वस्तुशरीरं ब्रह्मैव कार्यावस्थमिति कार्यकारणयोरनन्यत्वम् । एवमपि शरीरभूतयोश्चिदचिद्वस्तुनोः शरीरिणो ब्रह्मणश्च दुःखित्वपरिणामित्वहेयप्रत्यनीकत्वकल्याणगुणाकरत्वस्वभावा स्वरूपविवेकविषयश्रुतिसिद्धाः तथैव व्यवस्थिता इति ब्रह्मणो जगत्कारणत्वं संभवत्येव । सूत्रार्थस्तु— इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः— ब्रह्मण इतरः जीवः, ब्रह्मणो जीवतया व्यपदेशात् , जीवस्य च दुःखित्वात् , हितरूपजगदकरणमहितरूपजगत्करणमित्यादिदोषप्रसक्तिर्ब्रह्मणः । अतो ब्रह्मणो जगत्कारणत्वं न संभवतीति ॥ २१ ॥

अत उत्तरं पठति—

१६०. **अधिकं तु भेदनिर्देशात् ।** तुशब्दः पक्षव्यावृत्त्यर्थः । प्रत्यगात्मनः अधिकम्— अर्थान्तरभूतं ब्रह्म । कुतः ? भेदनिर्देशात्— * स कारणं करणाधिपाधिपः * प्रधानक्षेत्रज्ञपतिर्गुणेशः * पृथगात्मानं प्रेरितारं च मत्वा * इत्यादिभ्यः प्रत्यगात्मनो जीवात् ब्रह्मणो हि भेदो निर्दिश्यते ॥ २२ ॥

१६१. **अश्मादिवच्च तदनुपपत्तिः ।** अश्मकाष्ठलोष्ठतृणादेरचेतनस्येवानन्तदुःखाकरजीवस्य निरतिशयानन्दसत्यसङ्कल्पब्रह्मभावानुपपत्तिश्च । न केवलं भेदश्रुत्याऽर्थान्तरत्वमवगम्यते, वस्त्वनुपपत्त्या चेत्यर्थः ।

जीवसामानाधिकरण्यनिर्देशः * यस्यात्मा शरीरमित्यादिश्रुतिशतसिद्धजीवप्रकारकब्रह्मप्रतिपादनपर इति * अवस्थितेरिति काशकृत्स्न इत्यत्रैव प्रतिपादितः ॥ २३ ॥ इति इतरव्यपदेशाधिकरणम् ॥ 7 ॥

१६२. **उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि।** ब्रह्मणो जगत्कारणत्वं संभवति, न वेति संशयः। न संभवतीति पूर्वः पक्षः; लोके कार्यजननसमर्थस्यापि वस्तुनः तत्तत्कार्यजनने अनेककारकोपसंहारदर्शनाद्विचित्रजगज्जननसमर्थस्यापि ब्रह्मणोऽसहायस्य जनयितृत्वानुपपत्तेः। राद्धान्तस्तु— क्षीरस्य दधिभावेऽनन्यापेक्षत्वदर्शनान्नानेककारकोपसंहारनियमो दृश्यत इति ब्रह्मणोऽनन्यापेक्षस्यैव कारणत्वं संभवत्येव। सूत्रमपि व्याख्यातम्। क्षीरवद्धीति प्रसिद्धवन्निर्देशः चोद्यमान्द्यपरः ॥ २४ ॥

१६३. **देवादिवदपि लोके।** यथा देवादयः स्वे स्वे लोके स्वापेक्षितानि स्वसङ्कल्पादेव सृजन्ति; तथा ब्रह्मापि— देवादेरशास्त्रावसेयशक्तितया ब्रह्मतुल्यत्वेऽपि देवादिग्रहणं ब्रह्मणो विचित्रशक्तित्वस्य सुग्रहणायेति मन्तव्यम् ॥ २५ ॥ इति उपसंहारदर्शनाधिकरणम् ॥ 8 ॥

१६४. **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा।** ब्रह्मणो जगत्कारणत्वं संभवति, नेति संशयः। न संभवतीति पूर्वः पक्षः; निरवयवस्य ब्रह्मणो जगदुपादानत्वे कृत्स्नस्य ब्रह्मणो जगदाकारेणोपयोगप्रसङ्गात्; तत्परिजिहीर्षया सावयवाभ्युपगमे * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् * इत्यादि कारणावस्थायां निरवयवत्ववादिशब्दो बाध्येत। यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्, स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्यमित्यभ्युपगम्यते; तथापि शरीरांशस्यापि कार्यत्वाभ्युपगमात् कृत्स्नप्रसक्तिर्निरवयवत्वशब्दबाधो वा। राद्धान्तस्तु— सकलेतरविसजातीयं श्रुत्यैकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यञ्च भवति, अन्यच्च भवतीति परिमितशक्तिवस्तुचोद्यं न तत्र प्रसज्यते। यथा जातिवादिनो जातिरेकैवामूर्ता खण्डमुण्डादिष्वत्यन्तविलक्षणेषु अनन्तेष्वपि परिसमाप्यैवं वर्तते; न तत्रेतरवस्तुचोद्यमिति। अतो ब्रह्मणः जगत्कारणत्वं संभवत्येव। सूत्रार्थस्तु— कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा— ब्रह्मकारणत्वे कृत्स्नस्य ब्रह्मणः कार्यत्वेनोपयोगप्रसङ्गः, निरवयवत्वात्। सावयवत्वे निरवयवत्वशब्दकोपो वा— निरवयवत्ववादिशब्दबाधप्रसङ्ग इत्यर्थः ॥ २६ ॥

१६५. **श्रुतेस्तु शब्दमूलत्वात्।** तुशब्दः पक्षव्यावृत्त्यर्थः। श्रुतेः— श्रुतिप्रामाण्यान्नैवं प्रसज्यते; शब्दमूलत्वात्— शब्दैकमूलत्वेन सकलेतरविजातीयत्वादित्यर्थः ॥ २७ ॥

१६६. **आत्मनि चैवं विचित्राश्च हि।** आत्मनि चैवं— जीवात्मन्यचेतनधर्माप्रसक्तिश्चैवम्— अचेतनविजातीयत्वादेवेत्यर्थः। विचित्राश्च हि— अचेतनेषु च विसजातीयेष्वग्निजलादिषु विचित्रा हि शक्तयो दृश्यन्ते; एवं परमात्मनश्चेतनाचेतनविसजातीयस्य विचित्राश्शक्तय उपपद्यन्ते ॥ २८ ॥

१६७. **स्वपक्षदोषाच्च।** प्रधानादिकारणपक्षे दोषाच्च ब्रह्मैव जगत्कारणम्। तत्र हि लौकिकवस्तुसजातीयत्वेन प्रधानादेरुक्तदोषोऽन्ये च प्रसज्येरन्॥ २९॥

१६८. **सर्वोपेता च तद्दर्शनात्।** न केवलं सकलेतरविसजातीयत्वेन सर्वशक्त्युपेता परा देवतेत्युच्यते; तद्दर्शनात्— सर्वशक्तियोगश्रुतेरित्यर्थः। दर्शयतीति दर्शनं श्रुतिः, * पराऽस्य शक्तिर्विविधैव श्रूयते * इत्यादिका॥ ३०॥

१६९. **विकरणत्वान्नेति चेत्तदुक्तम्।** उक्तस्यार्थस्य द्रढिम्ने चोद्यपूर्वकं पूर्वोक्तं स्मारयति— विकरणत्वात्— करणविरहितत्वात् ब्रह्म न कारणमिति चेत्; * न तस्य कार्यं करणं च विद्यते * इति हि श्रूयते। तदुक्तम्— अत्र यद्वक्तव्यम्, तत्पूर्वमेवोक्तम् * शब्दमूलत्वात् * विचित्राश्च हीति। अयमेव परिहारः— शब्दैकमूलत्वेन सकलेतरविसजातीयत्वाद्ब्रह्मणः, विसजातीयानां च शक्तिवैचित्र्यस्य लोकदृष्टत्वात्सर्वमुपपन्नमित्यर्थः॥ ३१॥ इति कृत्स्नप्रसक्त्यधिकरणम्॥ ९॥

१७०. **न प्रयोजनवत्त्वात्।** ब्रह्मणो जगत्कारणत्वं संभवति, नेति संशयः। न संभवतीति पूर्वः पक्षः; बुद्धिपूर्वारम्भाणां सप्रयोजनत्वात्, ईश्वरस्य च स्वत एवावाप्तसमस्तकामस्य जगत्सृष्ट्यारम्भे प्रयोजनभावात् गर्भवासादिदुःखरूपत्वात्सृष्टेः, परानुग्रहेणापि न सप्रयोजनत्वमिति। राद्धान्तस्तु— परिपूर्णस्यापीश्वरस्य केवललीलाप्रयोजनाय जगत्सृष्ट्याद्यारम्भस्संभवति। यथा लोके सप्तद्वीपवतीं मेदिनीमधितिष्ठतो महाराजस्य परिपूर्णस्यापि केवललीलैकफलाः कन्दुकाद्यारम्भा दृश्यन्ते, तद्वदीश्वरस्यापि प्रयोजनाय जगत्सृष्ट्यारम्भस्संभवति। **सूत्रार्थस्तु— न प्रयोजनवत्त्वात्— प्रयोजनवत्त्वात्सृष्टेः ईश्वरस्य स्वतः परिपूर्णस्य प्रयोजनाभावान्न स्रष्टृत्वम्॥ ३२॥**

१७१. **लोकवत्तु लीलाकैवल्यम्।** लीलाकैवल्यं— लीलायाः प्रयोजनत्वे कैवल्यं संभवति; केवलाया लीलायास्सृष्ट्यारम्भप्रयोजनत्वं संभवतीत्यर्थः। लोकवत्। यथा लोके राज्ञः कन्दुकाद्यारम्भे॥ ३३॥

देवमनुष्यादिविषमसृष्ट्या पक्षपातप्रसङ्गात् दुर्विषहदुःखगर्भत्वेन नैर्घृण्यप्रसङ्गाच्च, परमकारुणिकस्य परमपुरुषस्य परिपूर्णस्य लीलार्थमपि जगत्सर्गो न संभवतीत्याशङ्क्याह—

१७२. **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति।** ईश्वरस्य विचित्रजगत्सृष्टौ देवादिवैषम्यप्रयुक्तपक्षपातः, दुःखप्रदजगत्सर्गे नैर्घृण्यं च न संभवतः; वैषम्यादावीश्वरस्य क्षेत्रज्ञकर्मसापेक्षत्वात्। क्षेत्रज्ञानां पूर्वपूर्वकर्म पर्यालोच्य, तत्तत्कर्मानुगुणं विषमं जगत्सृजतीति तत्कर्मैव वैषम्यादिहेतुरित्यर्थः। तथा देवादिदेहयोगं क्षेत्रज्ञानां तत्कर्मसापेक्षं दर्शयति हि श्रुतिः * साधुकारी साधुर्भवति पापकारी पापो भवतीति॥ ३४॥

१७३. **न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च।** सृष्टेः प्राक्कर्म न विद्यते क्षेत्रज्ञाभावात्; तदभावश्च, * सदेव सोम्येदमित्यवधारणावगतादविभागादिति चेत्; तन्न, अनादित्वात् क्षेत्रज्ञानां तत्तत्कर्मप्रवाहाणां च। उपपद्यते च क्षेत्रज्ञस्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिः। अन्यथा अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्। उपलभ्यते च श्रुतिस्मृत्योः क्षेत्रज्ञानामनादित्वम् * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत * इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम्; * ज्ञाज्ञौ द्वावजावीशनीशौ। * नित्यो नित्यानाम् * प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि * इति। अविभागश्रुतिरपि नामरूपविभागाभावादेवोपपद्यत इत्यभिप्रायः ॥

[ अत्र पाठान्तरम् ]

सृष्टेः प्राक्कर्म न विद्यते, क्षेत्रज्ञाभावात्। तदभावश्च * सदेव सोम्येदमित्यवधारणावगतादविभागादिति चेत्; तन्न, अनादित्वात् क्षेत्रज्ञानां तत्तत्कर्मप्रवाहाणां च। * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्या व्याक्रियतेति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम्। उपपद्यते क्षेत्रज्ञस्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिः; अन्यथा अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्। उपलभ्यते च श्रुतिस्मृत्योः क्षेत्रज्ञानामनादित्वम् * ज्ञाज्ञौ द्वावजावीशनीशौ * नित्यो नित्यानाम् * प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि * न जायते * इत्यादिभिः ॥ ३५ ॥

१७४. **सर्वधर्मोपपत्तेश्च।** प्रधानपरमाण्वादिष्वनुपपन्नानां स्वपक्षदोषादित्यादिषूक्तानां सर्वेषां धर्माणां कारणत्वोपपादकानां ब्रह्मण्युपपत्तेश्च ब्रह्मैव कारणम्। प्रधानपरमाण्वादीनां परिमितशक्तिकत्वाल्लोकदृष्टवस्तुसजातीयत्वाच्च अनुपपत्तयस्सहस्रशस्सन्ति। ब्रह्मणश्शास्त्रैकसमधिगम्यतया सकलेतरविसजातीयत्वेनाचिन्त्यशक्तित्वात्सर्वशक्तित्वश्रुतेश्च सर्वमुपपन्नमित्यर्थः ॥ ३६ ॥ इति प्रयोजनवत्त्वाधिकरणम् ॥ 10 ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे द्वितीयस्याध्यायस्य प्रथमः पादः ॥

# ॥ अथ द्वितीयाध्याये द्वितीयः पादः ॥

१७५. **रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च।** सांख्यतन्त्रसिद्धः प्रधानकारणवादः किं समीचीनयुक्तिमूलः, उत नेति संशयः। समीचीनयुक्तिमूल इति पूर्वः पक्षः। घटादिवद्विचित्रसन्निवेशं जगत्कार्यम् तद्वदेव स्वसरूपकारणविशेषारब्धम्। सुखदुःखमोहाद्यात्मकतया सत्त्वाद्यात्मकं जगत् सत्त्वरजस्तमो-

शरीरकब्रह्मानुसन्धानेऽहमित्येवानुसन्धेयम्। यथा मनुष्योऽहमस्मीति स्वशरीरस्य स्वप्रकारैकस्वभावतया प्रकारिणि स्वात्मनि पर्यवसानम्; तथा स्वात्मनोऽहंप्रत्ययोऽहंशब्दश्च न केवलस्वात्मविषयौ, परमात्मशरीरतया तद्विशेषणत्वेनैव स्वात्मनोऽवस्थानात्। सूत्रमपि व्याख्यातम्॥ ३॥ इति आत्मत्वोपासनाधिकरणम्॥ 2॥

४७३, ४७४. **न प्रतीके न हि सः। ब्रह्मदृष्टिरुत्कर्षात्।** * मनो ब्रह्मेत्युपासीत * इत्यादिषु प्रतीकोपासनेष्वप्यात्मत्वेनानुसन्धानं कर्तव्यम्, उत नेति संशयः। * मनो ब्रह्मेत्युपासीतेति ब्रह्मोपासनत्वविशेषादात्मेत्येवानुसन्धानमिति पूर्वः पक्षः। राद्धान्तस्तु— न प्रतीके आत्मत्वानुसन्धानं कार्यम्: कुतः? न हि मन आदिरुपासितुरात्मा: न च तत्र ब्रह्मोपास्यम्: ब्रह्मदृष्ट्या मन आदिरुपास्यः; अपकृष्टे उत्कृष्टदृष्टिरभ्युदयाय भवति; यथा भृत्यादौ राजदृष्टिः। सूत्रद्वयं च व्याख्यातम्॥ ४, ५॥ इति प्रतीकाधिकरणम्॥ 3॥

४७५. **आदित्यादिमतयश्चाङ्ग उपपत्तेः।** * य एवासौ तपति तमुद्गीथमुपासीत * इत्यादिषु कर्माङ्गाश्रयोपासनेषु किमुद्गीथादावादित्यादिदृष्टिः कार्या, उतादित्यादावुद्गीथादिदृष्टिरिति संशयः। कर्मणः फलसाधनतयोत्कर्षात् आदित्यादेर्देवतात्वेन तद्गुणत्वाच्चादित्यादावुद्गीथादिदृष्टिः कार्येति पूर्वः पक्षः। राद्धान्तस्तु— कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेति आदित्यादेरेवोत्कर्षोपपत्तेः आदित्यादिमतय एव कर्माङ्गोद्गीथादौ कार्याः। सूत्रं च व्याख्यातम्॥ ६॥ इति आदित्यादिमत्यधिकरणम्॥ 4॥

४७६. **आसीनस्संभवात्।** किमिदं ब्रह्मोपासनमासीनः कुर्यात्, उतासीनश्शयानस्तिष्ठन्गच्छंन्वेत्यनियमः? इति संशयः। विशेषाश्रवणादनियम इति पूर्वः पक्षः। राद्धान्तस्तु— आसीनस्यैवैकाग्रतासंभवात्, एकाग्रतामूलत्वाच्चोपासनस्य, आसीनः कुर्यात्। सूत्रमपि व्याख्यातम्॥ ७॥

४७७. **ध्यानाच्च।** * निदिध्यासितव्यः * इत्युपासनस्य ध्यानरूपत्वाच्चैकाग्रचित्तताऽवश्यंभाविनी। ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितं तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपम्॥ ८॥

४७८. **अचलत्वं चापेक्ष्य।** निश्चलत्वं चापेक्ष्य ध्यानवाचोयुक्तिः पृथिव्यादिषु दृश्यते * ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं, ध्यायतीव द्यौः * इत्यादिका। अतो ध्यायतः पृथिव्यादिवदचलत्वमासीनस्यैव संभवति॥ ९॥

४७९. **स्मरन्ति च।** स्मरन्ति चासीनस्यैव ध्यानम् * उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये * इति॥ १०॥

४८०. **यत्रैकाग्रता तत्राविशेषात्।** यस्मिन्देशे यस्मिंश्च काले मनस एकाग्रता; तत्र देशे काले चोपासनं कार्यम्; * शर्करादिरहिते मनोनुकूले शुचौ देशे * इत्येतदतिरिक्तविशेषाग्रहणात्। यथा देशकालयोरेकाग्रतायामविशेषः, न तथा स्थितिगत्यादौ; आसीनस्य तु विशेषोऽस्तीत्यभिप्रायः ॥ ११ ॥ इति आसीनाधिकरणम् ॥ 5 ॥

४८१. **आप्रयाणात्तत्रापि हि दृष्टम्।** तदिदमपवर्गसाधनमुपासनमेकस्मिन्नहनि कार्यम्, उत प्रत्यहमाप्रयाणादनुवर्तनीयमिति संशयः। एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम्। * यावदायुषम् * इति तु वचनं विधिशब्दस्याभावाद्विद्यायाः फलेनोपसंहारपरमिति पूर्वः पक्षः। राद्धान्तस्तु— आप्रयाणात् अनुवर्तनीयम्; कुतः? तत्रापि हि दृष्टं * स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते * इति। अप्राप्तत्वेनानुवादत्वासंभवाद्विधिरेवायमिति ॥ १२ ॥ इति आप्रयाणाधिकरणम् ॥ 6 ॥

४८२. **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्।** विदुष उत्तरपूर्वाघयोरश्लेषविनाशौ किं संभवतः, उत नेति संशयः। * नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि * इति भोगादेव कर्मक्षयश्रवणादश्लेषविनाशश्रुतिः कथञ्चिद्विद्यास्तुत्यर्थतया नेयेति पूर्वः पक्षः। राद्धान्तस्तु— द्वयोश्शास्त्रयोर्भिन्नविषयत्वेन विरोधाभावात्संभवत एव; कर्मणां फलजननसामर्थ्यं द्रढयति * नाभुक्तं क्षीयते * इति; * एवमेवंविदि पापं कर्म न श्लिष्यते * एवं हास्य सर्वे पाप्मानः प्रदूयन्ते * इति च श्रुतिर्विद्यायास्तत्सामर्थ्यनिवारणशक्तिविषयेति यथा अप्तेजसोश्शीतजननतन्निवारणशक्तिविषये प्रमाणे न विरुध्येते इति। सूत्रमपि व्याख्यातम् ॥ १३ ॥ इति तदधिगमाधिकरणम् ॥ 7 ॥

४८३. **इतरस्याप्येवमसंश्लेषः पाते तु।** किमसंश्लेषविनाशौ पुण्यकर्मणोऽपि समानौ, उत नेति संशयः। पुण्यकर्मफलस्य सुखरूपत्वेन विदुषोऽनिष्टत्वाभावान्न समानाविति पूर्वः पक्षः। राद्धान्तस्तु— मुमुक्षोर्मोक्षविरोधित्वेनानिष्टत्वसाम्यादश्लेषविनाशौ समानावेव। सूत्रार्थस्तु— इतरस्य— पुण्यस्याप्यनिष्टफलत्वसाम्यादेवम्— अश्लेषविनाशौ; विद्यानुगुणस्य तु वृष्ट्यन्नारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषः ॥ १४ ॥ इति इतराधिकरणम् ॥ 8 ॥

४८४. **अनारब्धकार्ये एव तु पूर्वे तदवधेः।** विद्योत्पत्तेः पूर्वकृतयोः पुण्यपापयोरविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति संशयः। * सर्वे पाप्मानः प्रदूयन्ते * इति विशेषाभावादविशेषेणेति पूर्वः पक्षः। राद्धान्तस्तु— * तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये * इत्युत्पन्नविद्यस्यापि शरीरमोक्षावधित्वश्रुतेः, सर्वविनाशे शरीरस्थित्यनुपपत्तेश्चानारब्धकार्ययोरेव विनाशः। सूत्रं च व्याख्यातम् ॥ १५ ॥ इति अनारब्धकार्याधिकरणम् ॥ 9 ॥

४८५ **अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्।** अग्निहोत्राद्याश्रमधर्मः किं विदुषोऽनुष्ठेयः, उत नेति संशयः। सुकृतदुष्कृतयोरश्लेषविनाशाभिधानादाश्रमधर्मस्यापि सुकृतत्वसाम्येन कार्याश्लेषादननुष्ठेय इति पूर्वः पक्षः। राद्धान्तस्तु— आश्रमधर्मस्य तु विद्योत्पत्तिरेव कार्यमिति तत्कार्यायैवानुष्ठेयः। दृश्यते हि— * तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादिना विद्योत्पत्तिकार्यत्वम्। विद्या चाप्रयाणादहरहरभ्यासाधेयातिशयोत्पाद्यैव। सूत्रं च व्याख्यातम्॥ १६॥

यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था, पूर्वकृता च साधुकृत्या अनुभूतफला प्रारब्धफला च: * सुहृदस्साधुकृत्यामित्यस्य विषयः क इत्याशङ्क्याह—

४८६. **अतोऽन्यापि ह्येकेषामुभयोः।** अतः— अग्निहोत्रादिसाधुकृत्यायाः अन्याऽपि विद्याधिगमात् पूर्वोत्तरयोः पुण्यकर्मणोरुभयोश्च कारीर्यादिका वृष्ट्यन्नाद्यर्थतया विदुषाऽनुष्ठिता, विद्योत्पत्तेः पूर्वं कृताऽनादिकालप्रवृत्ता च प्रबलकर्मान्तरप्रतिबद्धफला, साधुकृत्याऽस्ति हि। अत एकेषां शाखिनां * सुहृदस्साधुकृत्यामिति वचनं तद्विषयम्; विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया॥ १७॥

अनुष्ठितस्य कर्मणः प्रबलकर्मप्रतिबन्धसंभवं पूर्वोक्तं स्मारयति—

४८७. **यदेव विद्ययेति हि।** उक्तं ह्युद्गीथविद्यायाः क्रतोः कर्मान्तरप्रतिबन्धाभावः फलमिति; अतः प्रतिबद्धफलसाधुकृत्यस्यैव सुहृत्संक्रमणम्॥ १८॥ इति अग्निहोत्राद्यधिकरणम्॥ 10॥

४८८ **भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते।** इतरे— आरब्धकार्ये पुण्यपापे, किं विद्यायोनिशरीरावसान एव विनश्येते, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशयः। * यावन्न विमोक्ष्ये अथ संपत्स्ये * इति संपत्तेश्शरीरविमोक्षविलम्बमात्रश्रुतेः तच्छरीरावसान इति पूर्वः पक्षः। राद्धान्तस्तु— प्रारब्धफलयोः कर्मणोः भोगेनैव क्षपयितव्यत्वाभिप्रायेण * यावन्न विमोक्ष्ये अथ संपत्स्ये इत्युच्यते, न शरीरमात्रम्। कर्मविषयौ हि बन्धमोक्षौ। अतः प्रारब्धफले पुण्यपापे यावता शरीरेण समापनीये, तावता क्षपयित्वा अथ संपद्यत इत्यनियम एव। सूत्रं च व्याख्यातम्॥ १९॥ इति इतरक्षपणाधिकरणम्॥ 11॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य प्रथमः पादः॥

# ॥ अथ चतुर्थाध्याये द्वितीयः पादः ॥

४८९. **वाङ्मनसि दर्शनाच्छब्दाच्च।** * अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे * इत्यादिकोत्क्रान्तिविषया आम्नायते। तत्र किं वागिन्द्रियं मनसि संपद्यते, उत वाग्वृत्तिमात्रमिति संशयः। वाचो मनःप्रकृतित्वाभावात् स्वरूपलयस्तत्र न संभवतीति वाग्वृत्तिमात्राभिप्रायमिति पूर्वः पक्षः। राद्धान्तस्तु— अकारणे संपत्त्यभावस्य वाग्वृत्तावपि तुल्यत्वदर्शनात् * वाङ्मनसीति वाक्स्वरूपस्यैव संपत्तिः। शब्दाच्च स्वरूपमेव संपद्यते * वाङ्मनसि संपद्यते इति वाक्स्वरूपसंपत्तावेव हि शब्दः; न वृत्तिमात्रसंपत्तौ। अकारणे लयाभावात्संपत्तिशब्दस्संयोगाभिप्राय। सूत्रं च व्याख्यातम् ॥ १ ॥

४९०. **अत एव सर्वाण्यनु।** यतो वाचो मनसि संयोगमात्रमुच्यते: न तु लयः; अत एव तदानीं * सर्वाणीन्द्रियाणि वाचमनु मनसि संपद्यन्ते * इति वचनं * वाङ्मनसि संपद्यत इति वचनवदुपपन्नम्, * तस्मादुपशान्ततेजाः— पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः * इति ॥ २ ॥ इति वागधिकरणम् ॥ 1 ॥

४९१. **तन्मनः प्राण उत्तरात्।** * मनः प्राणे * इत्यत्र किं प्राणशब्देनाप उच्यन्ते, उत प्राण एवेति संशयः। प्राणस्य मनःप्रकृतित्वाभावात् * अन्नमयं हि सोम्य मनः * इति मनसोऽन्नमयत्वश्रवणात्, अपां चान्नप्रकृतित्वेन, तत्संपत्तिरुपपद्यत इति प्राणशब्देनाप उच्यन्त इति पूर्वः पक्षः; * आपोमयः प्राणः इति ह्यम्मयत्वात्प्राणस्य प्राणशब्देनापो वक्तुं युज्यन्ते इति। राद्धान्तस्तु— * अन्नमयं हि सोम्य मनः आपोमयः प्राणः * इति मनःप्राणयोर्न तत्तत्प्रकृतित्वमुच्यते; अपि तु तदाप्यायनम्, आहङ्कारिकत्वान्मनसः, प्राणस्य चाकाशप्रकृतित्वात्। अतः वाङ्मनसीतिवत् तदुत्तरात् * मनः प्राणे * इति शब्दात्, तत्— सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते ॥ ३ ॥ इति मनोधिकरणम् ॥ 2 ॥

४९२. **सोऽध्यक्षे तदुपगमादिभ्यः।** सः प्राणः किं तेजसि संयुज्यते, उत जीव इति संशयः। * प्राणस्तेजसीति वचनात्तेजस्येवेति पूर्वः पक्षः। राद्धान्तस्तु— उत्क्रान्तौ प्राणस्य जीवोपगमादिश्रुतेः प्राणः करणाध्यक्षे जीवे संयुज्यते। एतदविरोधाय जीवे संयुज्य पश्चात्तेजस्संयोगं * प्राणस्तेजसीति वदति। श्रूयन्ते हि प्राणस्य जीवोपगमादयः * एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति * तमुत्क्रामन्तं प्राणोऽनूत्क्रामति * कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि * इत्यादिषु ॥ ४ ॥ इति अध्यक्षाधिकरणम् ॥ 3 ॥

४९३, ४९४. **भूतेषु तच्छ्रुतेः। नैकस्मिन् दर्शयतो हि।** * प्राणस्तेजसीति किं तेजोमात्रे प्राणस्संयुज्यते, उत भूतान्तरसंसृष्ट इति संशयः। * तेजसीति वचनात्तेजोमात्र इति पूर्वः पक्षः। * पृथिवी

मयः * इत्यादिना सञ्चरतो जीवस्य सर्वभूतमयत्वश्रुते, त्रिवृत्करणश्रुतिस्मृतिभ्याञ्च तेजस एकस्य कार्याक्षमत्वाद्भूतान्तरसंसृष्ट इति राद्धान्त.। सूत्रद्वयं व्याख्यातम् ॥ ५, ६ ॥ इति भूताधिकरणम् ॥ 4 ॥

४९५. **समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।** इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना, उताविदुष एवेति संशयः। विदुषोऽत्रैवामृतत्वप्राप्तिश्रुतेरविदुष एवेति पूर्वः पक्षः। श्रूयते हि विदुषोऽत्रैव ब्रह्मप्राप्तिः— * यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥ इति। राद्धान्तस्तु— विदुषोऽर्चिरादिकयैव ब्रह्मप्राप्तिः; अर्चिरादिगत्युपक्रमात्प्रागियमुत्क्रान्तिस्समाना। गतिश्च मूर्धन्यनाड्या * शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका, तयोर्ध्वमायन्नमृतत्वमेति * इति श्रुतेः। * यदा सर्वे प्रमुच्यन्ते * इत्यनेन गतिश्रुत्यविरोधायामृतत्वसाधनभूतोपासननिष्पत्तिरुच्यते, हृदि स्थिताः कामा यदा प्रमुच्यन्ते, तदैवोपासनारम्भान्मर्त्योऽमृतो भवतीति। अत्र— कामविमोकपूर्वकोपासने स्थितोऽर्चिरादिकया गत्या ब्रह्म समश्नुते इत्यर्थः। सूत्रार्थस्तु— सृतिः— गतिः, आगत्युपक्रमादुत्क्रान्तिर्विदुषोऽपि समाना, विदुषोऽर्चिरादिगतिश्रुतेः * अथ मर्त्योऽमृतो भवति * इत्युच्यमानममृतत्वमनुपोष्य च— अदग्ध्वैव शरीरेन्द्रियादिसंबन्धम्, उपासनारम्भपरिकररूपमित्यर्थः ॥ ७ ॥

४९६. **तदापीतेस्संसारव्यपदेशात्।** तत्— अमृतत्वम्, उक्तप्रकारमेव। कुतः? आपीतेस्संसारव्यपदेशात्— अपीतिः—ब्रह्मप्राप्ति.; अर्चिरादिकया गत्या देशविशेषं गत्वा यावद्ब्रह्म प्राप्यते; तावत्संसारः— शरीरसंबन्धो हि व्यपदिश्यते ॥ ८ ॥

गतिव्यपदेशादेव शरीरादुत्क्रान्तस्य कथं शरीरसंबन्ध इत्यत्राह—

४९७. **सूक्ष्मं प्रमाणतश्च तथोपलब्धेः।** सूक्ष्मशरीरमनुवर्तते, गतिव्यपदेशात्। न केवलं गतिव्यपदेशादेव, प्रमाणान्तरतश्च तथा— सूक्ष्मशरीरवत्त्वस्योपलब्धेश्च। विदुषोऽर्चिरादिकया गत्या गच्छतश्चन्द्रमसा संवादोऽयमुपदिश्यते * तं प्रतिब्रूयात् * सत्यं ब्रूयात् * इत्यादिना ॥ ९ ॥

४९८. **नोपमर्देनातः।** अतः— उक्ताद्धेतुकलापात्, * अथ मर्त्योऽमृतो भवतीति वचनं न देहसंबन्धोपमर्देनामृतत्वं वदति; अपि तूक्तमेवोपासनारम्भरूपं वदतीत्यर्थः ॥ १० ॥

४९९. **अस्यैव चोपपत्तेरूष्मा।** अस्य— सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न देहसंबन्धोपमर्देन। उपलभ्यते ह्युत्क्रममाणस्य विदुषः क्वचिदूष्मा सूक्ष्मदेहगुणः; नचायं स्थूलदेहगुणः, अन्यत्रानुपलब्धेः। अतो विद्वान् सूक्ष्मशरीरेणोत्क्रामति ॥ ११ ॥

५००. **प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम्** । * स एतास्तेजोमात्राः * इत्यारभ्य * इति तु कामयमानः * इत्यन्तेनाविदुषः उत्क्रान्तिप्रकारं लोकान्तरगमनं पुनरावृत्तिं चाभिधाय, * अथाकामयमानः * इत्यादिना * न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति * इति विदुष उत्क्रान्तिप्रतिषेधादुक्तप्रकारो नोपपद्यत इति चेत्; तन्न, शारीरात्प्राणानामविश्लेषोऽनेनोच्यते । तस्य अकामयमानस्य विदुषश्शारीरस्य, प्राणास्तस्मान्नोत्क्रामन्ति । देवयानेन गमनाय सहैव तिष्ठन्ति । अयमर्थः स्पष्टो ह्येकेषां– माध्यन्दिनशाखिनां पाठे * योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति * इति ॥ १२ ॥

५०१. **स्मर्यते च** । स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः * ऊर्ध्वमेकस्स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥ इति ॥ १३ ॥ इति आसृत्युपक्रमाधिकरणम् ॥ 5 ॥

५०२. **तानि परे तथा ह्याह** । * प्राणस्तेजसीति तेजश्शब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि किं परस्यां देवतायां संपद्यन्ते, उत यथाकर्म यथाविद्यं च गच्छन्तीति संशयः । तदानीं सुखदुःखोपभोगाद्यभावेन परसंपत्तौ प्रयोजनाभावात् यथाकर्म यथाविद्यमिति पूर्वः पक्षः । सर्वस्य परदेवताकार्यत्वेन तदात्मकत्वात् गन्तव्यस्थानमिदं * परस्यां देवतायाम् * इत्युच्यते । राद्धान्तस्तु— तानि परे– परस्मिन्ब्रह्मणि संपद्यन्ते; * तेजः परस्यां देवतायामिति ह्याह श्रुतिः । यथाश्रुति विश्रमस्थानत्वेन कार्यं परिकल्प्यमित्यर्थः । सूत्रं च व्याख्यातम् ॥ १४ ॥ इति परसंपत्त्यधिकरणम् ॥ 6 ॥

५०३. **अविभागो वचनात्** । सेयं परमात्मनि संपत्तिः किं प्राकृतप्रलयवत्कारणापत्तिरूपा, उत मनःप्रभृतिसंपत्तिवदविश्लेषमात्रमिति संशयः । परमात्मनः कारणत्वात्, तत्संपत्तिवचनाच्च कारणापत्तिरेवेति पूर्वः पक्षः । राद्धान्तस्तु— * वाङ्मनसि संपद्यते * इति श्रुतस्यैव संपत्तिवचनस्य सर्वत्रानुषङ्गादत्रानुषक्तस्य चाभिधानवैरूप्यासंभवादत्राप्यविभागः– अविश्लेष एवोच्यते । सूत्रमपि व्याख्यातम् ॥ १५ ॥ इति अविभागाधिकरणम् ॥ 7 ॥

५०४. **तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया** । * शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ इति शताधिकया मूर्धन्यया नाड्या विदुषो गमनमिति नियमस्संभवति, नेति संशयः । नाडीनामतिसूक्ष्मत्वेन दुर्विवेचत्वान्नियमो न संभवतीति यादृच्छिकीं तया गतिमनुवदतीदं वचनमिति पूर्वः पक्षः । राद्धान्तस्तु— परमपुरुषाराधनभूतया विद्यया तदङ्गभूतगतिचिन्तनेन च प्रीतेन परमपुरुषेणानुगृहीतो जीवस्तत्प्रसादप्रकाशितद्वारस्तयैव मूर्धन्यया नाड्या गच्छतीति ॥

सूत्रार्थस्तु— हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च प्रीतहार्दानुगृहीतो भवति जीवः ; ततः तदोकः— जीवस्य स्थानं हृदयम् , अग्रज्वलनम्— प्रकाशिताग्रं भवति ; एवं परमपुरुष-प्रकाशितद्वारः शताधिकया गच्छति ; * तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः * सर्वस्य चाहं हृदि सन्निविष्टः * इति हार्दः परमात्मा ॥ १६ ॥ इति तदोकोधिकरणम् ॥ 8 ॥

५०५. **रश्म्यनुसारी ।** * अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते * इति विद्वान् रश्म्यनुसारी गच्छतीति नियमस्संभवति, नेति संशयः । निशि मृतस्य विदुषः आदित्यरश्म्यनुसारा संभवादनियम इति पूर्वः पक्षः । वचनं तु पक्षप्राप्तमनुवदति । राद्धान्तस्तु— वचनस्य पक्षप्राप्त्यनुवादित्वे * अथैतैरेवेत्यवधारणविरोधः । न च निशि रश्मयो न सन्तीति ; निश्यपि निदाघसमये ऊष्मोपलब्धेः सूक्ष्मास्सन्त्येवेति रश्म्यनुसार्येव गच्छति । हेमन्तेऽनुपलब्धिः दुर्दिन इव हिमाभिभवात् ॥ १७ ॥ इति रश्म्यनुसाराधिकरणम् ॥ 9 ॥

५०६. **निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ।** विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति संशयः । * दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ॥ इति निशामरणस्य गर्हितत्वेन अधोगतिहेतुत्वान्न ब्रह्मप्राप्तिस्संभवतीति पूर्वः पक्षः । राद्धान्तस्तु— विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशश्रुतेरश्लिष्टविनष्टत्वात् , प्रारब्धस्यापि कर्मणः चरमदेहावधित्वाच्च, बन्ध-हेत्वभावान्निशि मृतस्यापि ब्रह्मप्राप्तिरस्त्येवेति । अविद्वद्विषया निशामरणनिन्दा ॥

सूत्रार्थस्तु— निशामरणनिन्दया निशि मृतस्य न ब्रह्मप्राप्तिरिति चेत् ; तन्न, संबन्धस्य यावद्देह-भावित्वात् अनारब्धकार्यकर्मसंबन्धस्य विद्यया विनष्टत्वात् प्रारब्धकार्यकर्मसंबन्धस्यापि यावच्चरमदेहभावित्वात् बन्धहेत्वभावेन ब्रह्मप्राप्तिरस्त्येवेत्यर्थः । तदेतच्छ्रुतिश्च दर्शयति * तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये * इति ॥ १८ ॥ इति निशाधिकरणम् ॥ 10 ॥

५०७. **अतश्चायनेऽपि दक्षिणे ।** दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरस्ति, नेति संशयः । * अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति * इति विदुषो दक्षिणायने मृतस्य चन्द्रसायुज्यश्रवणात् , चन्द्रं प्राप्तानाम् * अथैतमेवाध्वानं पुनर्निवर्तन्ते * इति वचनाच्च, दक्षिणायनमृतस्य ब्रह्मप्राप्तिर्न संभवतीति पूर्वः पक्षः । राद्धान्तस्तु— पूर्वोक्ताद्बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि पुनरावृत्तिर्न संभवति । चन्द्रसायुज्यवचनं विदुषो ब्रह्मप्रेप्सोर्विश्रमस्थानमात्रविषयम् ; आवृत्तिवचनं त्वविदुषा-मेव । सूत्रार्थस्तु— यतो हेतोर्निशि मृतस्यापि ब्रह्मप्राप्तिः, तत एव बन्धहेत्वभावाद्दक्षिणायने मृतस्यापि ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

* यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः * इति मरणकालविशेषः स्मर्यत इति चेत्, तत्राह

५०८. **योगिनः प्रति स्मर्येते स्मार्ते चैते।** योगिनः— ब्रह्मविद्यानिष्ठान्प्रति एते— देवयानपितृयाणगती, स्मार्ते स्मर्येते, स्मार्ते— स्मृतिविषयभूते अहरहस्स्मर्तव्ये स्मर्येते इत्यर्थः, * यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः * इत्यादिना * नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ इत्यन्तेन। न मुमूर्षून् प्रति कालविशेषोपादानं स्मर्यते। आतिवाहिकगणस्य कालाभिमानिदेवताविशेषभूयस्त्वेन * यत्र काले * इत्युच्यते ॥ २० ॥ इति दक्षिणायनाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

## ॥ अथ चतुर्थाध्याये तृतीयः पादः ॥

५०९. **अर्चिरादिना तत्प्रथितेः।** किं विद्वानर्चिरादिनैकेन मार्गेण गच्छति, उत तेन वाऽन्येन वेत्यनियम इति संशयः। तदर्थं परीक्ष्यते— किं सर्वासु श्रुतिष्वर्चिरादिरेक एव मार्ग आम्नायते, उत तत्रतत्रान्य इति। यदाऽर्चिरादिरेक एव सर्वत्रोक्तः: तदा तेनैव गच्छति। यदा तत्रतत्राम्नाता अन्ये, तदाऽन्यैर्वाऽनेन वेत्यनियम इति। छान्दोग्यवाजसनेयकादिषु नानाविधाः गतिप्रकाराश्श्रूयन्ते। छान्दोग्ये * यथा पुष्करपलाश आपो न श्लिष्यन्ते * इत्युपक्रम्य, * सर्वाणि....नयति * सर्वेषु लोकेषु भाति य एवं वेद * अथ यदुचैवास्मिञ्छव्यं कुर्वन्ति यदुच नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्य एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते * इति। बृहदारण्यके * य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवस्स एत्य ब्रह्मलोकान्गमयति * इति। तत्रैवान्यथा * यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथाऽऽडम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम् * इत्यादिषु। तेषां ब्रह्मप्राप्तौ नैरपेक्ष्यश्रवणात्तैर्वाऽर्चिरादिना वेति विकल्प इति पूर्वः पक्षः। राद्धान्तस्तु—

सर्वत्रार्चिराद्यन्तर्भूतादित्यादीनां दर्शनात्स एवेति प्रत्यभिज्ञानात्, अन्यत्रोक्तानामन्यत्रोपसंहाराच्च, सर्वत्रार्चिरादिरेक एव मार्ग इति तेनैव गच्छति विद्वान्। सूत्रार्थस्तु— अर्चिरादिनैव गच्छति विद्वान्। कुतः? तत्प्रथितेः; प्रथितिः— प्रसिद्धिः; सर्वत्र तत्प्रत्यभिज्ञानादित्यर्थः॥ १॥ इति अर्चिराद्यधिकरणम्॥ 1॥

५१०. **वायुमब्दादविशेषविशेषाभ्याम्।** * तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्नः * इत्यारभ्य * मासेभ्यस्संवत्सरं संवत्सरादादित्यम् * इति छान्दोग्ये श्रुतम्। तत्र संवत्सरादित्ययोर्मध्ये देवलोको वायुश्च श्रुतौ श्रुत्यन्तरे। द्वयोः प्रकरणयोः किं देवलोको वायुश्चार्थान्तरभूतौ, उत वायुरेक एवेति संशयः। शब्दभेदादर्थान्तरभूताविति पूर्वः पक्षः। अर्थान्तरत्वे सति * देवलोकादादित्यमिति देवलोकस्य * तेन स ऊर्ध्वमाक्रमते स आदित्यमिति वायोश्चादित्यात्पूर्वत्वेन श्रौतक्रमनिर्दिष्टत्वाद्देवलोकवायू यथेष्टक्रमेण निवेशयितव्यौ। राद्धान्तस्तु— वायुरेव देवलोकशब्देन निर्दिष्ट इति तस्मादनन्यः। देवानां लोक इति हि देवलोकः, देवानां वासस्थानमित्यविशेषेण निर्दिष्टम्। * योऽयं पवत एष एव देवानां गृहाः * इति वायोर्विशेषेण देवानां वासस्थानत्वेन श्रुतत्वादविशेषनिर्दिष्टो देवलोको वायुरेवेति निश्चीयत इति। संवत्सरादूर्ध्वं वायुर्वायोरादित्य इति क्रमश्च स्यात्॥

सूत्रार्थस्तु— अब्दात्— संवत्सरादूर्ध्वम आदित्यात्पूर्वं वायुमेकमेव निवेशयेत, देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायोरेकस्यैव निर्दिष्टत्वात्। देवानां वासस्थानमित्यविशेषेण हि देवलोकशब्दः वायुं देवानामावासस्थानभूतमभिदधाति; वायुशब्दस्तमेव विशेषेणेति द्वयोः प्रकरणद्वयविहितयोरेकत्वादित्यर्थः॥ २॥ इति वाय्वधिकरणम्॥ 2॥

५११. **तटितोऽधि वरुणस्संबन्धात्।** छान्दोग्यवाजसनेयककौषीतकीप्रभृतिष्वाम्नातस्यार्चिरादिमार्गस्यार्चिरहरापूर्यमाणपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रविद्युद्वरुणेन्द्रप्रजापतिरूपस्योपसंहारे वायुपर्यन्तस्य श्रुत्यादिभिः क्रमप्रकार उक्तः। वरुणेन्द्रप्रजापतीनां किं विद्युत उपरि निवेशः, उत वायोरुपरीति संशयः। * स वायुलोकं स वरुणलोकम् * इति कौषीतकीपाठक्रमेण वायोरुपरि वरुणस्य निवेशः। इन्द्रादेरपि वरुणनिवेशाय वाय्वादित्ययोः क्रमस्य बाधितत्वात्तत्रैव वरुणोपरीति पूर्वः पक्षः। राद्धान्तस्तु— विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयोर्लोके वेदे च संबन्धावगमात्पाठक्रमादर्थक्रमस्य बलीयस्त्वेन वरुणस्य विद्युत उपरि निवेशः कार्यः। इन्द्रादेरपि वरुणनिवेशाय विद्युतो व्यवधानसहत्वदर्शनाद्वरुणोपरि निवेशः। सूत्रं च व्याख्यातम्॥ ३॥ इति वरुणाधिकरणम्॥ 3॥

५१२. **आतिवाहिकास्तल्लिङ्गात्।** किमर्चिरादयो विदुषो ब्रह्मप्राप्तेर्मार्गचिह्नभूताः, उत गमयितार इति संशयः। 'अमुकं वृक्षममुकां नदीममुकं पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इत्यादिदेशिकोपदेशप्रकारदर्शनान्मार्गचिह्नभूताः— इति पूर्वः पक्षः। राद्धान्तस्तु — * स एनान्ब्रह्म गमयति * इति वैद्युतपुरुषस्य गमयितृत्वदर्शनात् इतरेषां चाविशेषनिर्दिष्टानां स एव संबन्ध इति निश्चीयते। * अग्निलोकम् * इत्यादिलोकशब्दोऽपि मध्ये भोगाभावाद्गमयितृत्व एवोपपद्यते। सूत्रार्थस्तु— आतिवाहिकाः— विदुषामतिवाहे परमपुरुषेण नियुक्ताः, अर्चिराद्यभिमानिदेवताविशेषाः गमयितार इत्यर्थः; * स एनान्ब्रह्म गमयतीति लिङ्गात् ॥ ४ ॥

५१३. **वैद्युतेनैव ततस्तच्छ्रुतेः।** ततः— विद्युत उपरि, वैद्युतेन विदुषां गमनम्, तच्छ्रुतेः— * स एनान्ब्रह्म गमयतीति तस्यैव श्रुतेः। वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति निश्चीयत इत्यर्थः ॥ ५ ॥
इति आतिवाहिकाधिकरणम् ॥ ४ ॥

५१४. **कार्यं बादरिरस्य गत्युपपत्तेः।** किमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति उत परं ब्रह्मोपासीनान्, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति संशयः। कार्यं— हिरण्यगर्भमुपासीनानिति पूर्वः पक्षः; तेषामेव गत्युपपत्तेः। न हि परिपूर्णं सर्वगतं परं ब्रह्मोपासीनानां तत्प्राप्तये गतिरुपपद्यते, नित्यप्राप्तत्वात्। अविद्यानिवृत्तिरेव हि कार्या। परमेवोपासीनानित्यपरः पक्षः, * स एनान्ब्रह्म गमयतीति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात्। अविद्यानिवृत्तेः फलाभिसन्धिरहितयज्ञाद्यपेक्षावत् श्रवणाद्यपेक्षावच्च गतिश्रुत्या देशविशेषापेक्षा च विद्यत इति निश्चीयते। राद्धान्तस्तु—परमुपासीनानन्यानपि नयति, * तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति * इति पञ्चाग्निविदां परं ब्रह्मोपासीनानां चार्चिरादिगतिश्रुतेः। पञ्चाग्निविदो हि प्रकृतिविमुक्तब्रह्मात्मकात्मस्वरूपविदः। ते च तत्प्राप्य पुनर्न निवर्तन्ते। परं ब्रह्मोपासीनास्तु यथावस्थितं परिपूर्णं परं ब्रह्मैव प्राप्य पुनर्न निवर्तन्ते। * तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति * इत्युभयविधानभेदेनोपादायार्चिरादिगतिश्रुतेरपुनरावृत्तिश्रुतेश्चैवमिति निश्चीयते ॥

सूत्रार्थस्तु— कार्यं— हिरण्यगर्भमुपासीनमातिवाहिको गणो नयतीति बादरिराचार्यो मन्यते, अस्यैव गत्युपपत्तेः; परमुपासीनस्य हि न तत्प्राप्तये गतिरुपपद्यते, सर्वगतत्वात्परस्य ब्रह्मणः ॥ ६ ॥

५१५. **विशेषितत्वाच्च।** * पुरुषोमानव एत्य ब्रह्मलोकान्गमयति * इति * प्रजापतेस्सभां वेश्म प्रपद्ये * इति च प्राप्यस्थानस्य विशेषितत्वाच्च हिरण्यगर्भमुपासीनमेव नयति ॥ ७ ॥

५१६. **सामीप्यात्तु तद्व्यपदेशः।** एवं निश्चिते सति * स एनान्ब्रह्म गमयतीति हिरण्यगर्भस्य ब्रह्मशब्दव्यपदेशो ब्रह्मसामीप्यात्। * यो ब्रह्माणं विदधाति पूर्वम् * इति प्रथमजत्वेन ब्रह्मसामीप्यं हि विद्यते ॥ ८ ॥

५१७. **कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्।** हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिरुपपद्यते, कार्यस्य— हिरण्यगर्भलोकस्यात्यये, तदध्यक्षेण— हिरण्यगर्भेणाधिकारिकपुरुषेण विदुषा सह परप्राप्त्यभिधानात् * ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे * इति ॥ ९ ॥

५१८. **स्मृतेश्च।** * ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥ इति स्मृतेश्चावगम्यते ॥ १० ॥

५१९. **परं जैमिनिर्मुख्यत्वात्।** परं ब्रह्मोपासीनमेव नयत्यातिवाहिको गण इति जैमिनिराचार्यो मन्यते, * ब्रह्म गमयतीति ब्रह्मशब्दस्य तत्रैव मुख्यत्वात। * ब्रह्मलोकान् * इति शब्दश्च ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयपरिग्रहस्यैव न्याय्यत्वादुपपद्यते। एवं निश्चिते सति बहुवचनं च * अदितिः पाशान् * इतिवदुपपन्नम् ॥ ११ ॥

५२०. **दर्शनाच्च।** * अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते * इत्यर्चिरादिना गतस्य परब्रह्मप्राप्तिं दर्शयति च ॥ १२ ॥

५२१. **न च कार्ये प्रत्यभिसन्धिः।** * प्रजापतेस्सभां वेश्म प्रपद्ये * इति प्रत्यभिसन्धिश्च न कार्ये * धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि * इत्यकृतं ब्रह्मलोकमिति तत्रैव विशेषितत्वात्, * यशोऽहं भवामि ब्राह्मणानाम् * इति सर्वात्मभावाभिसंधानाच्च ॥ १३ ॥

५२२. **अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च।** कार्यमुपासीनानेवेति नायं नियमः, परमेवोपासीनानित्ययमपि नियमो न संभवति। कुतः? उभयथा च दोषात्— कार्यमुपासीनानेवेति नियमे * अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते * इत्यादिकाश्श्रुतयः, * ये चेमेऽरण्ये श्रद्धा तपः * इति च प्रकुप्येयुः; परमेति नियमे * तद्य इत्थं विदुः * इति प्रकुप्येत्। तस्मादप्रतीकालम्बनान्नयतीति भगवान्बादरायणो मन्यते। प्रतीकालम्बनास्तु— अचिन्मिश्रम्, केवलमचिद्वस्तु च 'सिंहो देवदत्तः' इतिवत् ब्रह्मदृष्ट्या स्वरूपेण वा तद्वस्तु य उपासते, ते; अप्रतीकालम्बनाः— तद्व्यतिरिक्ताः। सर्वज्ञं सर्वकारणं सत्यसङ्कल्पं निखिलहेयप्रत्यनीकानवधिकातिशयानन्दस्वरूपं ब्रह्मोपासते ये ये च

प्रत्यगात्मनं भूतसूक्ष्मैस्संपरिष्वक्तं सर्वत्र वर्तमानं भूतसूक्ष्मव्यतिरिक्तं ज्ञानैकस्वरूपं नित्यं निर्विकारं * य आत्मनि तिष्ठन्नित्यादिनाऽवगतब्रह्मात्मभावं पञ्चाग्निविद्योदितमुपासते, तानुभयविधान्नयति, * तद्य इत्थं विदुर्ये चेमेऽरण्ये * इत्युभयविषयश्रुतेः। तत्क्रतुश्च— यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति * इत्युभयेषामेवापुनरावृत्तिस्संभवति। अचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां तत्क्रतुन्यायादेव पुनरावृत्तिरवर्जनीया॥ १४॥

५२३. **विशेषञ्च दर्शयति।** प्रतीकाद्युक्तलक्षणमचिन्मिश्रं केवलमचिद्वस्तु चोपासीनानां सर्वेषां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति श्रुतिः- * यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति * इत्यादिका। अतः * ब्रह्मणा सह ते सर्वे * इति वचनं नार्चिरादिना गतानां गतिप्रकारविषयम्; अर्चिरादिना गतानां देहावसानसमय एव सुकृतदुष्कृतयोर्हानाद्धिरण्यगर्भलोकावाप्तितद्वासतत्रस्थभोगानुभवहेत्वभावात्, तत्क्रतुन्यायविरोधात्, तदानीमेव ब्रह्मप्राप्तिश्रुतिविरोधाच्च। * ब्रह्मणा सह ते सर्वे * इति वचनं तु पुण्यकर्मविशेषेण हिरण्यगर्भलोकं प्राप्तानां * तदुपर्यपि बादरायणः * इति न्यायेन तत्रैव निष्पन्नविद्यानां गतिप्रकारविषयम्। * ते ब्रह्मलोके * इति तु ब्रह्मलोकशब्दस्य कर्मधारयवृत्त्या ब्रह्मविषयत्वात् ब्रह्मण्युपास्ये वर्तमानाः परान्तकाले चरमदेहावसानसमये परामृतात्— परस्माद्ब्रह्मण उपासनप्रीताद्धेतोः, परिमुच्यन्ति सर्वे सर्वस्माद्बन्धाद्विमुच्यन्त इति * वेदान्तविज्ञानसुनिश्चितार्थाः * इति प्रकरणादवगम्यते। * तद्य इत्थं विदुरिति पञ्चाग्निविदां ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणात्तत्क्रतुन्यायेनाचिद्वियुक्तब्रह्मात्मकात्मकस्वरूपोपासनं विवक्षितमिति निश्चीयते। तथैव तत्र श्रुतिरपि * इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति * इति * रमणीयचरणाः * इति च कर्महेतुकमनुष्यादिभावोऽपामेव भूतान्तरसंसृष्टानामिति चिदचिद्विवेकं प्रतिपाद्य * तद्य इत्थं विदुः * इति भूतसूक्ष्मव्यतिरिक्तात्मस्वरूपोपासनमेव विदधाति॥ १५॥ इति कार्याधिकरणम्॥ 5॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य तृतीयः पादः॥

---

# ॥ अथ चतुर्थाध्याये चतुर्थः पादः ॥

५२४. **संपद्याविर्भावस्स्वेन शब्दात्।** * एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते * इति किं परं ज्योतिरुपसंपन्नस्य प्रत्यगात्मनस्स्वरूपाविर्भावः प्रतिपाद्यते, उतान्येन साध्येन रूपेण संबन्ध इति संशयः। स्वस्वरूपस्य सुषुप्त्यादौ निरानन्दत्वदर्शनात्, स्वरूपमात्रस्य नित्याविर्भूतत्वाच्च, साध्येन सुखैकान्तेन रूपेण संबध्यते। एवं च * अभिनिष्पद्यते इति वचनं सङ्गच्छते।

परं ज्योतिरुपसंपन्नस्य ह्यानन्दित्वं श्रूयते * रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति * स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य * इत्यादिषु । अतस्साध्येन रूपेणेति पूर्वः पक्षः । राद्धान्तस्तु— * स्वेन रूपेणाभिनिष्पद्यते * इति विशेषणात्स्वरूपाविर्भाव एव । स्वरूपस्य चापहतपाप्मत्वादिगुणकतया प्रजापतिवाक्योदितस्य कर्मकृतदेहसंबन्धतत्कृततिरोधानस्य परज्योतिरुपसंपत्त्या सूक्ष्मदेहविनिर्मुक्तस्यासङ्कुचितज्ञानादिगुणकस्वरूपाविर्भावात् स्वयाथात्म्यानुभवपूर्वकानवधिकातिशयानन्दब्रह्मानुभवस्संपत्स्यत इति * अभिनिष्पद्यते * इति चोपपन्नतरम् । सूत्रार्थस्तु— परं ज्योतिरुपसंपद्य स्वस्वरूपाविर्भावः प्रतिपाद्यते । कुतः ? स्वेनशब्दात्— साध्यस्यापि रूपस्य स्वासाधारणत्वेन स्वेनेति विशेषणं ह्यनर्थकम् ॥ १ ॥

स्वस्वरूपमात्रस्य अहं जानामीति नित्याविर्भूतत्वेन * परं ज्योतिरुपसंपद्येत्यनर्थकमित्याशङ्क्याह—

५२५. **मुक्तः प्रतिज्ञानात्** । कर्मसंबन्धतत्कृतदेहादेर्मुक्तस्वरूपमत्र * स्वेन रूपेणाभिनिष्पद्यते इत्युच्यते । कथमिदमवगम्यते ? * एतं त्वेव ते भूयोऽनुव्याख्यास्यामि * इति कर्महेतुकदेहसंबन्धतत्कृतजागरिताद्यवस्थाविनिर्मुक्तस्वरूपस्यात्र वक्तव्यतया प्रतिज्ञानात् ॥ २ ॥

एवमपि स्वरूपमात्राविर्भावस्य पुरुषार्थत्वं न सिद्ध्यतीत्याशङ्क्याह—

५२६. **आत्मा प्रकरणात्** । देहादिविनिर्मुक्त. स्वरूपेणावस्थित आत्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः ; तस्य ह्याविर्भाव उच्यते ; कुतः ? प्रकरणात् ; * य आत्मा अपहतपाप्मा * इति प्रकृत्य हि * एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्यादिनोच्यते । अतोऽपहतपाप्मत्वादिगुणकस्वरूपस्य कर्माख्याविद्यातिरोहितस्य परंज्योतिरुपसंपद्य निवृत्ततिरोधानस्याविर्भावः प्रतिपाद्यते ॥ ३ ॥ इति संपद्याविर्भावाधिकरणम् ॥ 1 ॥

५२७. **अविभागेन दृष्टत्वात्** । किमयं मुक्तः आविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति, उत स्वात्मनोऽप्यात्मतयाऽविभागेन * अहं ब्रह्मास्मीतीति संशयः । * निरञ्जनः परमं साम्यमुपैति * सोऽश्नुते सर्वान्कामान् सह, ब्रह्मणा विपश्चितेति * इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः * इति श्रुतिस्मृतिभ्यः विभक्तमनुभवतीति पूर्वः पक्षः । राद्धान्तस्तु— * सर्वं खल्विदं ब्रह्म * ऐतदात्म्यमिदं सर्वम्.... तत्त्वमसि * इत्यादिना सामानाधिकरण्येन * यः पृथिव्यां तिष्ठन्....यस्य पृथिवी शरीरं * य आत्मनि तिष्ठन्....यस्याऽत्मा शरीरम् * इत्यादिषु सर्वस्य चिदचिद्वस्तुनो ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् तत्तद्वस्तुबुद्धिशब्दास्तत्पर्यन्तविषया इत्यवगम्य * आत्मेति तूपगच्छन्तीति न्यायेन स्वात्मनोऽप्यात्मतया अहं ब्रह्मास्मीत्युपासनेन यथावस्थितपरमात्मात्मकस्वात्मनो दृष्टत्वात् मुक्तः स्वात्मनोऽप्यात्मभूतं ब्रह्म अहं ब्रह्मास्मीत्यविभागेनैवानुभवति ॥

सूत्रार्थस्तु— अहं ब्रह्मास्मीत्यविभागेनैव ब्रह्मानुभवति मुक्तः, स्वात्मनोऽप्यात्मतयोपासनेन यथावस्थितपरमात्मात्मकस्वरूपस्य दृष्टत्वात्। साधर्म्यश्रुतिस्तु परमात्मशरीरभूतस्य प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणैस्तत्साधर्म्यं प्रतिपादयति । * सोऽश्नुते सर्वान्कामान् सह, ब्रह्मणा विपश्चिता इति ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात्स्वात्मभूतेन ब्रह्मणा सह तद्गुणाननुभवतीति वदति। काम्यन्ते इति कामाः— कल्याणगुणाः, कल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः ॥ ४ ॥ इति अविभागेनदृष्टत्वाधिकरणम् ॥ 2 ॥

५२८. **ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।** किं जीवस्य स्वाभाविकं रूपमपहतपाप्मत्वादिगुणकम्, उत चैतन्यमात्रम्, उतोभयमिति संशयः। अपहतपाप्मत्वादिगुणकमिति प्रथमः पक्षः, * य आत्माऽपहतपाप्मा * इति प्रतिपादनात्। चैतन्यमात्रमिति द्वितीयः पक्षः, * एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव * विज्ञान घन एव * इत्यवधारणात्। राद्धान्तस्तु— ज्ञानस्वरूपस्यैवापहतपाप्मत्वादिगुणकत्वप्रतिपादनादविरोधाच्चोभयं स्वरूपम्। न च * विज्ञानघन एवेत्यवधारणं गुणान्तरासहम्, यथा सैन्धवघनस्य * रसघन एवेत्यवधारणेऽपि रसाश्रयद्रव्यं रूपस्पर्शादिगुणान्तरं च सहते; * रसघन एवेत्यवधारणं तु रसवद्द्रव्यान्तरस्वभावव्यावृत्तिपरम्; द्रव्यान्तराणां हि स्वैकदेशे रसवत्त्वम्, सैन्धवघनस्य तु सर्वत्र; एवमत्रापि जडवस्तुव्यावृत्तस्वस्वभावस्य सगुणस्यात्मनः स्वप्रकाशतावधारणं * विज्ञानघन एवेति क्रियते ॥

सूत्रार्थस्तु— ब्राह्मेण अपहतपाप्मत्वादिना स्वरूपाविर्भावः। अपहतपाप्मत्वादयो दहरवाक्ये ब्रह्मगुणाश्श्रुताः। उपन्यासादिभ्यः— तेषां ब्रह्मगुणानां प्रत्यगात्मन्यपि * य आत्माऽपहतपाप्मा * इत्यादिनोपन्यासात्। आदिशब्दात् * जक्षत्क्रीडन्रममाणः * इत्यादिभ्योऽपि सत्यसङ्कल्पत्वादयोऽवगम्यन्त इति जैमिनिराचार्यो मन्यते ॥ ५ ॥

५२९. **चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः।** चैतन्यमात्रेण स्वरूपाविर्भावः, * विज्ञानघन एवेति तदात्मकत्वावधारणादित्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥

५३०. **एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः।** एवं—विज्ञानस्वरूपस्यैव, स्वप्रकाशस्वरूपस्यैव पूर्वेषाम्— अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तानामपि * य आत्माऽपहतपाप्मा * इत्युपन्यासात्सद्भावावगमादुभयोस्स्वरूपयोरविरोधं भगवान्बादरायणो मन्यते। उभयश्रुत्यवगतस्येतरेतरविरोधाभावान्नान्यतरबाधे प्रमाणमस्तीत्यभिप्रायः ॥ ७ ॥ इति ब्राह्माधिकरणम् ॥ 3 ॥

५३१. **संकल्पादेव तच्छ्रुतेः।** * परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा इत्यादिराम्नायते। किमेते

ज्ञात्यादयो मुक्तस्य सङ्कल्पादेव भवन्ति, उत प्रयत्नान्तरसव्यपेक्षात्सङ्कल्पादिति संशयः। लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि कार्ये प्रयत्नान्तरसापेक्षत्वदर्शनान्मुक्तस्यापि तथैव सापेक्षत्वादिति पूर्वः पक्षः, * सङ्कल्पादेवेत्यवधारणं * विज्ञानघन एवेतिवद्भविष्यति। राद्धान्तस्तु— * सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्तीत्यवधारणान्नान्यापेक्षत्वम्। न चेह सत्यकामत्वाद्युपन्यासवत् मुक्तस्यान्यापेक्षत्वे प्रमाणमस्ति। लोके सत्यसङ्कल्पत्वाभावादेव प्रयत्नान्तरापेक्षत्वम्; न हि परमपुरुषव्यतिरिक्तः कश्चित्सत्यसङ्कल्पोऽस्ति। मुक्तश्च तत्प्रसादात्तत्साम्यमुपगतस्तथैव। सूत्रमपि व्याख्यातम्॥ ८॥

५३२. **अत एव चानन्याधिपतिः।** अतः— श्रुतेरेव मुक्तोऽनन्याधिपतिश्च। अन्याधिपतित्वं— कर्माधीनत्वम्। * अपहतपाप्मा... सत्यसङ्कल्पः * इति श्रूयते; अतोऽनन्याधिपतिः॥ ९॥ इति सङ्कल्पाधिकरणम्॥ 4॥

५३३. **अभावं बादरिराह ह्येवम्।** किं मुक्तस्य शरीरेन्द्रियाद्यस्ति, उत न, अथ यथासङ्कल्पमस्ति च नेति संशयः। * न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः * इति मुक्तस्याशरीरत्वश्रवणान्नास्त्येवेत्येकः पक्षः। * स एकधा भवति त्रिधा भवति * इति सशरीरत्वश्रुतेः अशरीरत्वश्रुतिः कर्मगृहीतशरीरविषयेति शरीरेन्द्रियाद्यस्त्येवेति द्वितीयः पक्षः। राद्धान्तस्तु— * मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके * इत्यशरीरस्यैव भोगश्रुतेः * स एकधा भवति त्रिधा भवति * इति श्रुतेश्च यथासङ्कल्पमस्ति च न चेति। सूत्रार्थस्तु— शरीराभावं बादरिर्मेने; एवमाह हि श्रुतिः * अशरीरं वाव सन्तम् * इति॥ १०॥

५३४. **भावं जैमिनिर्विकल्पामननात्।** शरीरादिभावं जैमिनिर्मेने; कुतः? विकल्पामननात्— विविधः कल्पः— विकल्पः; * स एकधा भवति त्रिधा भवतीत्यादिना मुक्तस्य हि विविधकल्पनमाम्नायते; आत्मन एकरूपस्याच्छेद्यस्य वैविध्यासंभवाच्छरीरद्वारेणैव हि विज्ञायते वैविध्यम्॥ ११॥

५३५. **द्वादशाहवदुभयविधं बादरायणोऽतः।** अतः— उभयश्रुतेरिच्छातः, उभयविधम्, शरीरवत्त्वमशरीरत्वं च भगवान्बादरायणो मेने; द्वादशाहवत्— यथा द्वादशाह उभयश्रुतेस्सत्रमहीनं च: * द्वादशाहमृद्धिकामा उपेयुः * इति सत्रं भवति, * द्वादशाहेन प्रजाकामं याजयेत् * इत्यहीनम्॥ १२॥

५३६. **तन्वभावे सन्ध्यवदुपपत्तेः।** स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेस्सत्यसङ्कल्पोऽपि स्वयं न सृजति, सन्ध्यवत्— यथा स्वप्ने * अथ रथान् * इत्यारभ्य * स हि कर्ता * इति, * य एष सुप्तेषु * इत्यारभ्य * तदु नात्येति कश्चन * इति चेश्वरसृष्टैरुपकरणैर्जीवो भुङ्क्ते; तथा मुक्तोऽपि लीलाप्रवृत्तेश्वरसृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते॥ १३॥

५३७. **भावे जाग्रद्वत्।** स्वसङ्कल्पसृष्टतनुप्रभृत्युपकरणसद्भावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते, परमपुरुषोऽपि दशरथवसुदेवादिपितृलोकादिकमात्मनस्सृष्ट्वा तैर्मनुष्यधर्मलीलारसं भुङ्क्ते; तथा मुक्तश्च सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृष्ट्वा तैर्लीलारसमनुभवति ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसंभव इत्यत्राह—

५३८. **प्रदीपवदावेशस्तथा हि दर्शयति।** यथा प्रदीपस्यैकस्यैकदेशवर्तिनस्स्वया प्रभयाऽनेकदेशप्रवेशः; तद्वदात्मनोऽप्येकदेशस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिस्संभवति; यथैकस्मिन्देहे हृदयादिदेशे वर्तमानस्याणोरपि सर्वस्मिन्देहे अहमित्यभिमानानुगुणव्याप्तिस्स्वप्रभारूपचैतन्येन, तद्वत्। तथा दर्शयति हि श्रुतिः— * वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्सविज्ञेयस्स चानन्त्याय कल्पते ॥ इति। प्रत्यगात्मनोऽणुत्वमेव स्वरूपमिति सूत्रकारमतम्, * नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् * इति परस्यैव महत्त्ववचनात् ॥ १५ ॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः * प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् * इति; तत्कथं मुक्तस्य ज्ञानानन्त्यमुच्यत इत्यत्राह—

५३९. **स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि।** नेदं मुक्तविषयम्; सुषुप्तिमरणयोरन्यतरापेक्षम्। आविष्कृतं हि श्रुत्या सुषुप्तिमरणयोर्निस्संबोधत्वम्, मोक्षदशायां सर्वज्ञत्वं च। सुषुप्तौ तावत् * ना ह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति * इति। विनाशम्— अदर्शनमित्यर्थः। मरणे च * एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति * इति। विनश्यति—न पश्यतीत्यर्थः। मोक्षे तु * स वा एष दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके * इति; * सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः * इति च ॥ १६ ॥ इति अभावाधिकरणम् ॥ 5 ॥

५४०. **जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च।** किं मुक्तस्य भोगः निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणानवधिकातिशयानन्दमहाविभूतिरूपपरब्रह्मानुभव एव? उत जगत्सृष्ट्यादिजगन्नियमनरूपलीलाऽपीति संशयः। * निरञ्जनः परमं साम्यमुपैति * इत्यादिश्रुतेर्जगन्नियमनरूपलीलापीति पूर्वः पक्षः। राद्धान्तस्तु— * यतो वा इमानि भूतानि जायन्ते * सदेव सोम्येदमग्र आसीत् * ब्रह्म वा इदमेक एवाग्र आसीत् * आत्मा वा इदमेक एवाग्र आसीत् * एको ह वै नारायण आसीत् * इत्यादिषु परं ब्रह्म प्रकृत्यैव जगद्व्यापारश्श्रूयते। तत्रतत्र प्रकरणे न मुक्तस्य सन्निधिरप्यस्ति। अतो जगन्नियमनरूपधुरावर्जं * सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चिता * स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाका-

महत्त्वस्य * इत्यनवधिकातिशयानन्दब्रह्मानुभवे मुक्तस्य साम्यम्। ब्रह्म हि स्वस्य परस्य चानुभूयमानमविशेषेणानवधिकातिशयानन्दं भवति, आनन्दस्वरूपत्वाविशेषात्। सूत्रमपि व्याख्यातम् ॥ १७ ॥

५४१. **प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः।** प्रत्यक्षं—श्रुतिः; * तस्य सर्वेषु लोकेषु कामचारो भवति * इमांल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् * इत्यादिश्रुत्या मुक्तस्य जगद्व्यापारोपदेशात्सोऽपीति चेत्, तन्न; आधिकारिकमण्डलस्थोक्तेः, आधिकारिकाः— परमपुरुषेण लोकनियमनाधिकारे नियुक्ताः हिरण्यगर्भादयः; मण्डलानि— तेषां लोकाः; तत्स्थभोगेषु मुक्तस्य यदीच्छा वर्तते, तत्रतत्र यथाकामं परमपुरुषानुग्रहेण वर्तमानस्तत्रस्थान्भोगान्भुङ्क्ते इति तया श्रुत्योक्तेः। * कामान्नी, * कामचारो भवति * इति हि श्रूयते; न नियुङ्क्त इति ॥ १८ ॥

उत्पत्त्यादिविकारवर्ती हेयमिश्रोऽल्पश्च कथं मुक्तस्य भोगो भवति, यदिच्छातस्सर्वेषु लोकेषु कामचार उच्यत इत्यत्राह—

५४२. **विकारावर्ति च तथाहि स्थितिमाह।** चशब्दोऽवधारणे; उत्पत्त्यादिविकारेषु न **वर्तत इति विकारावर्ति परं ब्रह्मैव।** निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परब्रह्म **सविभूति सकलकल्याणगुणं मुक्तस्य भोग्यम्;** तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्। तथाहि परस्मिन्ब्रह्मणि मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः— * यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति * रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति— ब्रह्मनिष्ठो ब्रह्मैव लब्ध्वाऽऽनन्दी भवतीत्यर्थः। ब्रह्म हि निरतिशयकल्याणानन्तगुणकमनन्तमहाविभूति च। तत्र सविभूतिकब्रह्मानुभवाय विभूत्येकदेशभूतलोकेषु सञ्चरतस्तत्रतत्र कामचारो भवतीत्युच्यते ॥ १९ ॥

५४३. **दर्शयतश्चैवं प्रत्यक्षानुमाने।** उत्पत्त्यादिजगन्नियमनं परस्यैव; मुक्तस्य तु परब्रह्मानुभव एव भोग इत्युक्तमेवार्थं प्रत्यक्षानुमाने— श्रुतिस्मृती दर्शयतः * तस्माद्वा एतस्मादात्मन आकाशस्संभूतः * भीषाऽस्माद्वातः पवते * एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः * इत्यादिका **श्रुतिः;** स्मृतिरपि * अहं सर्वस्य प्रभवः * अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा * विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् * मत्तस्सर्वं प्रवर्तते * सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः * प्रशासितारं सर्वेषाम् * इत्यादिका परविषया। * अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः * इत्यादिका श्रुतिः। स्मृतिरपि * प्रियो हि ज्ञानिनोऽत्यर्थमहम् * आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् * वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः * मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणा-

न्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ इत्यादिका मुक्तविषया ॥ २० ॥

५४४. **भोगमात्रसाम्यलिङ्गाच्च** । * सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चिता * इति मुक्तस्य ब्रह्मानुभवभोगमात्रब्रह्मसाम्यवचनाल्लिङ्गाच्च जगद्व्यापारवर्जमिति निश्चीयते ॥ २१ ॥

यदि नियन्तृत्वं परस्यैव, एवं तर्हि स्वतन्त्रत्वेन मुक्तं परः कदाचित्पुनरावर्तयिष्यतीत्याशङ्क्याह—

५४५. **अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्** । अस्य मुक्तस्यानावृत्तिश्शब्दादवगम्यते ; यथा * यतो वा इमानि भूतानि जायन्ते * सोऽकामयत, बहु स्यां प्रजायेयेति * यः पृथिवीमन्तरो यमयति * य आत्मानमन्तरो यमयति * इति शब्दात्परमपुरुषस्य स्रष्टृत्वं नियन्तृत्वं चावगम्यते ; तथा * एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते * स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते * मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते * इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ इतिशब्दादेवैनं कदाचिदपि नावर्तयतीत्यवगम्यते । सूत्रावृत्तिस्तु शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥ २२ ॥ इति जगद्व्यापारवर्जाधिकरणम् ॥ ४ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

**शास्त्रं च परिसमाप्तम्** ॥

**श्रीमते रामानुजाय नमः** ।



॥ श्रीरस्तु ॥
॥ श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ॥
॥ श्रीमते रामानुजाय नमः ॥

## श्रीभगवद्रामानुजग्रन्थमालायां

# श्रीभगवद्गीताभाष्यम् ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

अवतारिका ।

श्रियःपतिः, निखिलहेयप्रत्यनीककल्याणैकतानः, स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपः, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणमहोदधिः, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपः, स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणः, स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधः, स्वाभिमतानुरूपनित्यनिरवद्यस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभः, स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणापरिमितसूरिभिरनवरताभिष्टुतचरणयुगलः, वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः, स्वोचितविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्याक्षरपरमव्योमनिलयः, विविधविचित्रानन्तभोग्यभोक्तृवर्गपरिपूर्णनिखिलजगदुदयविभवलयलीलः, परं ब्रह्म, पुरुषोत्तमो नारायणः ब्रह्मादिस्थावरान्तमखिलं जगत्सृष्ट्वा स्वेन रूपेणावस्थितः, ब्रह्मादिदेवमनुष्याणां ध्यानाराधनाद्यगोचरः, अपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः, स्वमेव रूपं तत्तत्सजातीयसंस्थानं स्वस्वभावमजहदेव कुर्वंस्तेषुतेषु लोकेष्ववतीर्यावतीर्य तैस्तैराराधितस्तत्तदिष्टानुरूपं धर्मार्थकाममोक्षाख्यं फलं प्रयच्छन्, भूभारावतारणापदेशेनास्मदादीनामपि समाश्रयणीयत्वायावतीर्योर्व्यां सकलमनुजनयनविषयतां गतः, परावरनिखिलजनमनोनयनहारिदिव्यचेष्टितानि कुर्वन्, पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुककालियकेशिकुवलयापीडचाणूरमुष्टिकतोसलकंसादीन्निहत्य अनवधिकदयासौहार्दानुरागगर्भावलोकनालापामृतैर्विश्वमाप्याययन्, निरतिशयसौन्दर्यसौशील्यादिगुणगणाविष्कारेणाक्रूरमालाकारादीन् परमभागवतान् कृत्वा, पाण्डुतनययुद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास ।

तत्र पाण्डवानां कुरूणां च युद्धे प्रारब्धे स भगवान् पुरुषोत्तमः सर्वेश्वरेश्वरो जगदुपकृतिमर्त्यः आश्रितवात्सल्यविवशः पार्थं रथिनमात्मानं च सारथिं सर्वलोकसाक्षिकं चकार ।

एवं ज्ञात्वाऽपि सर्वात्मनाऽन्धो धृतराष्ट्रः सुयोधनविजयबुभुत्सया सञ्जयं पप्रच्छ ॥

## ॥ श्रीभगवद्गीतायां प्रथमोऽध्यायः ॥

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः । मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

सञ्जय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा । आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् । व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि । युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् । पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् । सौभद्रो द्रौपदेयाश्च सर्वे एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥

भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः । अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः । नानाशस्त्रप्रहरणास्सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः । भीष्ममेवाभिरक्षन्तु भवन्तः सर्वे एव हि ॥ ११ ॥

दुर्योधनः स्वयमेव भीमाभिरक्षितं पाण्डवानां बलमात्मीयं च भीष्माभिरक्षितं बलमवलोक्य, (आत्मीय) आत्मविजये तस्य बलस्य पर्याप्ततामात्मीयस्य बलस्य तद्विजये चापर्याप्ततामाचार्याय निवेद्य, अन्तर्विषण्णोऽभवत् ॥ १–११ ॥

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः । सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः । सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

तस्य विषादमालक्ष्य भीष्मस्तस्य हर्षं जनयितुं सिंहनादं शङ्खध्मानं च कृत्वा, शङ्खभेरीनिनादैश्च विजयाभिशंसिनं घोषं चाकारयत् ॥ १२, १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ। माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः। पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः। नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः। धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वतः पृथिवीपते। सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्। नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

ततः—तं घोषमाकर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथी च पाण्डुतनयस्त्रैलोक्यविजयोपकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्यदेवदत्तौ दिव्यौ शङ्खौ प्रदध्मतुः ॥

ततो युधिष्ठिरो वृकोदरादयश्च स्वकीयान् शङ्खान् पृथक् प्रदध्मुः। स घोषो दुर्योधनप्रमुखानां सर्वेषामेव भवत्पुत्राणां हृदयानि बिभेद। अद्यैव नष्टं कुरूणां बलमिति धार्तराष्ट्रा मेनिरे। एवं तद्विजयाभिकाङ्क्षिणे धृतराष्ट्राय सञ्जयोऽकथयत् ॥ १४—१९ ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः। प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान्। कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः। धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

अथ युयुत्सूनवस्थितान्धार्तराष्ट्रान्दृष्ट्वा लङ्कादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसङ्कल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिलजनान्तरबाह्यकरणानां सर्वप्रकारनियमनेऽवस्थितमाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं युयुत्सून्यथावदवेक्षितुं तदीक्षणक्षमे स्थाने रथं स्थापयेत्यचोदयत् ॥ २०—२३ ॥

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत। सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम्। उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥

स च तेन चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत्। ईदृशी भवदीयानां विजयस्थितिरिति चावोचत् ॥ २४—२५ ॥

कृपया धर्माधर्मभयेन चातिमात्रसन्नसर्वगात्र. सर्वथाऽहं न योत्स्यामीत्युक्त्वा बन्धुविश्लेषजनितशोकसंविग्नमानसः सशरं चापं विसृज्य रथोपस्थ उपाविशत् ॥ २६—४७ ॥

॥ इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये प्रथमोऽध्यायः ॥ १ ॥

# ॥ अथ द्वितीयोऽध्यायः ॥ २ ॥

सञ्जय उवाच—

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् । विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् । अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
*क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

एवमुपविष्टे पार्थे कुतोऽयमस्थाने समुपस्थितः शोक इत्याक्षिप्य तमिमं विषमस्थं शोकमविद्वत्सेवितं परलोकविरोधिनमकीर्तिकरमतिक्षुद्रं हृदयदौर्बल्यकृतं परित्यज्य युद्धायोत्तिष्ठेति श्रीभगवानुवाच ॥ १—३ ॥

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् [श्रेयो भोक्तुं] श्रेयश्चर्तुं भैक्षमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

पुनरपि पार्थः स्नेहकारुण्यधर्माधर्मभयाकुलो भगवदुक्तं हिततममजानन्निदमुवाच— भीष्मद्रोणादिकान् गुरून्बहुमन्तव्यान् कथमहं हनिष्यामि ? कथंतरां भोगेष्वतिमात्रसक्तान् तान् हत्वा तैर्भुज्यमानांस्तानेव भोगान् तद्रुधिरेणोपसिच्य तेष्वासनेषूपविश्य भुञ्जीय ? ॥ ४, ५ ॥

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वा धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

---

* मा क्लैब्यं गच्छ कौन्तेयेति तात्पर्यचन्द्रिकानुसारी पाठः ।

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

**सञ्जय उवाच—**

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः । न योत्स्यामीति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

एवं युद्धमारभ्य निवृत्तव्यापारान् भवतो धार्तराष्ट्राः प्रसह्य हन्युरिति चेत्; अस्तु । तद्वधलब्धविजयादधर्म्यादस्माकं धर्माधर्मावजानद्भिस्तैर्हननमेव [श्रेय] गरीय इति मे प्रतिभातीत्युक्त्वा, यन्मह्यं श्रेय इति निश्चितं तत् शरणागताय तव शिष्याय मे ब्रूहीत्यतिमात्रकृपणो भगवत्पादावुपससाद ॥ ६—९ ॥

एवमस्थाने समुपस्थितस्नेहकारुण्याभ्यामप्रकृतिं गतं, क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्यात्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विना अस्य मोहो न शाम्यतीति मत्वा, भगवता परमपुरुषेन अध्यात्मशास्त्रावतरणं कृतम् । तदुक्तम्—
* अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् । पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥ इति ॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत । सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

[एवं] तमेवं देहात्मनोर्याथात्म्याज्ञाननिमित्तशोकाविष्टम्, देहातिरिक्तात्मज्ञाननिमित्तं च धर्मं भाषमाणम्, परस्परविरुद्धगुणान्वितम्, उभयोस्सेनयोर्युद्धायोद्युक्तयोर्मध्ये अकस्मान्निरुद्योगम्, पार्थमालोक्य परमपुरुषः प्रहसन्निवेदमुवाच— परिहासवाक्यं वदन्निव, इदम्— आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरं * न त्वेवाहं जातु नासमित्यारभ्य * अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः इत्येतदन्तं वचनमुवाचेत्यर्थः ॥ १० ॥

**श्रीभगवानुवाच—**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

अशोच्यान्प्रति अनुशोचसि । * पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः इत्यादिकान् देहात्मस्वभावप्रज्ञानिमित्तवादांश्च भाषसे । देहात्मस्वभावज्ञानवतां नात्र किंचिच्छोकनिमित्तमस्ति । गतासून् देहान् अगतासून् आत्मनश्च प्रति तयोः स्वभावयाथात्म्यविदो न शोचन्ति । अतस्त्वयि विप्रतिषिद्धमिदमुपल [क्ष्य]-भ्यते : यदेतान् हनिष्यामीत्यनुशोचनम्, यच्च देहातिरिक्तात्मज्ञानकृतं धर्माधर्मभाषणम् । अतो देहस्वभावं च न जानासि, तदतिरिक्तमात्मानं च नित्यम्; तत्प्राप्त्युपायभूतं युद्धादिकं धर्मं च । इदं च युद्धं फलाभिसन्धिरहितमात्मयाथात्म्यावाप्त्युपायभूतम् । आत्मा हि न जन्माधीनसद्भावो न मरणाधीनविनाशश्च, तस्य जन्ममरणयोरभावात् । अतः स न शोकस्थानम् । देहस्त्वचेतनः परिणामस्वभावः; तस्योत्पत्तिविनाशयोगः स्वाभाविक इति सोऽपि न शोकस्थानमित्यभिप्रायः ॥ ११ ॥

चतुर्दशभुवनात्मकमण्डं दशगुणितोत्तरं चावरणसप्तकं समस्तं कार्यकारणजातमतीत्य वर्तमाने परमव्योमशब्दाभिधेये ब्रह्मादीनां वाङ्मनसागोचरे श्रीमति वैकुण्ठे दिव्यलोके सनकविधिशिवादिभिरप्यचिन्त्यस्वभावैश्वर्यैर्नित्यसिद्धैरनन्तैर्भगवदानुकूल्यैकभोगैः दिव्यपुरुषैर्महात्मभिरापूरिते तेषामपीयत्परिमाणम् इयदैश्वर्यम् ईदृशस्वभावम् इति परिच्छेत्तुमयोग्ये दिव्यावरणशतसहस्रावृते दिव्यकल्पकतरूपशोभिते दिव्योद्यानशतसहस्रकोटिभिरावृते अतिप्रमाणे दिव्यायतने कस्मिंश्चिद्विचित्रदिव्यरत्नमये दिव्यास्थानमण्डपे दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशोभिते दिव्यनानारत्नकृतस्थलविचित्रिते दिव्यालङ्कारालङ्कृते परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैर्दिव्यपुष्पैश्शोभमानैर्दिव्यपुष्पोपवनैरुपशोभिते सङ्कीर्णपारिजातादिकल्पद्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चिदन्तःस्थपुष्परत्नादिनिर्मितदिव्यलीलामण्डपशतसहस्रोपशोभितैस्सर्वदा अनुभूयमानैरपि अपूर्ववदाश्चर्यमावहद्भिः क्रीडाशैलशतसहस्रैरलङ्कृतैः कैश्चिन्नारायणदिव्यलीलासाधारणैः कैश्चित्पद्मवनालयादिव्यलीलासाधारणैस्साधारणैश्च कैश्चिच्छुकशारिकामयूरकोकिलादिभिः कोमलकूजितैराकुलैर्दिव्योद्यानशतसहस्रैरावृते मणिमुक्ताप्रवालकृतसोपानैर्दिव्यामलामृतरसोदकैर्दिव्याण्डजवरैरतिरमणीयदर्शनैरतिमनोहरमधुरस्वरैराकुलैः अन्तःस्थमुक्तामयदिव्यक्रीडास्थानोपशोभितैर्दिव्यसौगन्धिकवापीशतसहस्रैर्दिव्यराजहंसावलीविराजितैरावृते निरस्तातिशयानन्दैकरसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैर्विराजिते तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते नानापुष्पासवास्वादमत्तभृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते चन्दनागरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने मध्ये दिव्यपुष्पसञ्चयविचित्रिते महति दिव्ययोगपर्यङ्के अनन्तभोगिनि श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकम् आत्मकान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादिसर्वपरिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनम्, प्रत्यग्रोन्मीलितसरसिजसदृशनयनयुगलम्, स्वच्छनीलजीमूतसङ्काशम्, अत्युज्ज्वलपीतवाससम्, स्वया प्रभया अतिनिर्मलया अतिशीतलया स्वच्छया माणिक्याभया कृत्स्नं जगद्भासयन्तम्, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतसागरम्, अतिसौकुमार्यादीषत्प्रस्विन्नवदालक्ष्यमाणललाटफलकदिव्यालकावलीविराजितम्, प्रबुद्धमुग्धाम्बुजचारुलोचनम्, सविभ्रमभ्रूलतम्, उज्ज्वलाधरम्, शुचिस्मितम्, कोमलगण्डम्, उन्नसम्, उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिश्चतुर्भिराजानुविलम्बिभिर्भुजैर्विराजितम्, अतिकोमलदिव्यरेखालङ्कृताताम्रकरतलम्, दिव्याङ्गुलीयकविराजितम्, अतिकोमलदिव्यनखावलीविराजितातिरक्ताङ्गुलीभिरलङ्कृतम्, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगलम्, अतिमनोहरकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुरादिभिरत्यन्तसुखस्पर्शैर्दिव्यगन्धैर्भूषणैर्भूषितम्, श्रीमत्या वैजयन्त्या वनमालया विराजितम्, शङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैस्सेव्यमानम्, स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यं

वैनतेयादिभिस्स्वभावतो निरस्तसमस्तसांसारिकस्वभावैर्भगवत्परिचर्याकरणयोग्यैर्भगवत्परिचर्यैकभोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानम्, आत्मभोगेन अननुसंहितपरादिकालम्, दिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तम्, ईषदुन्मीलितमुखाम्बुजोदरविनिर्गतेन दिव्याननारविन्दशोभाजनकेन दिव्यगाम्भीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिकगुणगणविभूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिलजनहृदयान्तराण्यापूरयन्तम् भगवन्तम् नारायणम् ध्यानयोगेन दृष्ट्वा [ततो] भगवतो नित्यस्वाम्यम्, आत्मनो नित्यदास्यं च यथावस्थितमनुसन्धाय, "कदाऽहं भगवन्तं नारायणं मम कुलनाथं मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा; कदाऽहं भगवत्पादाम्बुजद्वयं शिरसा धारयिष्यामि; कदाऽहं भगवत्पादाम्बुजद्वयपरिचर्याकरणयोग्यः तदेकभोगस्तत्पादौ परिचरिष्यामि; कदाऽहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तसमस्तेतरभोगाशः अपगतसमस्तसांसारिकस्वभावः तत्पादाम्बुजद्वयं प्रवेक्ष्यामि; कदा मां भगवान् स्वकीयया अतिशीतलया दृशा अवलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यति" इति भगवत्परिचर्यायाम् आशां वर्धयित्वा, तयैवाशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य, दूरादेव भगवन्तं शेषभोगे श्रिया सहासीनं वैनतेयादिभिस्सेव्यमानं "समस्तपरिवाराय श्रीमते नारायणाय नमः" इति प्रणम्य, उत्थायोत्थाय पुनःपुनः प्रणम्य अत्यन्तसाध्वसविनयावनतो भूत्वा, भगवत्पारिषदगणनायकैर्द्वारपालैः कृपया स्नेहगर्भया दृशाऽवलोकितः सम्यगभिवन्दितैस्तैस्तैरेवानुमतः भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण "[भगवन्!] माम् ऐकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्व" इति याचमानः प्रणम्यात्मानं भगवते निवेदयेत् ॥

ततो भगवता स्वयमेवात्मसञ्जीवनेनामर्यादशीलवताऽतिप्रेमान्वितेनावलोकनेनावलोक्य सर्वदेशसर्वकालसर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतः अनुज्ञातश्च अत्यन्तसाध्वसविनयावनतः किङ्कुर्वाणः कृताञ्जलिपुटः भगवन्तमुपासीत ॥ ४ ॥

ततश्चानुभूयमानभावविशेषः निरतिशयप्रीत्या अन्यत् किञ्चित्कर्तुं द्रष्टुं स्मर्तुमशक्तः पुनरपि शेषभावमेव याचमानः भगवन्तमेव अविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत ॥ ५ ॥

ततो भगवता स्वयमेवात्मसञ्जीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहम् आत्मीयं श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवः सुखमासीत ॥

**लक्ष्मीपतेर्यतिपतेश्च दयैकधाम्नो योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।**
**प्राच्यं प्रकाशयतु नः परमं रहस्यं संवाद एष शरणागतिमन्त्रसारः ॥**

**इति श्रीभगवद्रामानुजविरचितं श्रीवैकुण्ठगद्यम् ॥**

**इति गद्यत्रयं समाप्तम् ॥**



श्रीः ।

श्रीमते रामानुजाय नमः ।

# श्रीभगवद्रामानुजग्रन्थमालायां नित्यग्रन्थः ॥

अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये ॥

भगवत्कैङ्कर्यैकरतिः परमैकान्ती भूत्वा भगवानेव स्वशेषभूतेन मया स्वकीयैश्च कल्याणतमैरौपचारिकसांस्पर्शिकाभ्यवहारिकैर्भोगैरखिलपरिजनपरिच्छदान्वितं स्वात्मानं प्रीतं कारयितुमुपक्रमत इत्यनुसन्धाय, तीर्थं गत्वा, शुचौ देशे पादौ प्रक्षाल्याचम्य, तीरं संशोध्य, शुचौ देशे मूलमन्त्रेण मृदमादाय, द्विधा कृत्वा शोधिततीरे निधाय, एकेनाधिकभागेन देहमलप्रक्षालनं कृत्वा, निमज्ज्य, आचम्य, प्राणायामत्रयम् आसीनो भगवन्तं ध्यायन् कृत्वा, अन्यं मृद्भागमादाय वामपाणितले त्रिधा कृत्वा, पृथक्पृथक् संप्रोक्ष्य अभिमन्त्र्य एकेन दिग्बन्धनमस्त्रमन्त्रेण कुर्यात् ॥

अन्येन तीर्थस्य पीठम् ॥ इतरेण गात्रानुलेपनम् ॥

ततः पाणी प्रक्षाल्य उदकाञ्जलिमादाय तीर्थस्यार्घ्यमुत्क्षिप्य भगवद्रामपादाङ्गुष्ठविनिस्सृतगङ्गाजलं संकल्पितपीठे आवाह्य, अर्घ्यं दत्वा, मूलमन्त्रेणाभिमन्त्र्य, उदकाञ्जलिमादाय, सप्तकृत्वोऽभिमन्त्र्य स्वमूर्धनि सिञ्चेत् ॥ एवं त्रिः पञ्चकृत्वः सप्तकृत्वो वा ॥

दक्षिणेन पाणिना जलमादाय अभिमन्त्र्य पीत्वा आचम्य स्वात्मानं संप्रोक्ष्य (परिषिच्य) तीर्थे निमग्नो भगवत्पादारविन्दविन्यस्तशिरस्को यावच्छक्ति मूलमन्त्रं जपित्वा, उत्तीर्य शुक्लवस्त्रधरो धृतोत्तरीयश्च आचम्य, ऊर्ध्वपुण्ड्रांस्तत्तन्मन्त्रेण धारयित्वा, भगवन्तमनुस्मृत्य, तत्तन्मन्त्रेण भगवत्पर्यन्ताभिधायिना मूलमन्त्रेण च जलं पीत्वा, आचम्य, प्रोक्ष्य, परिषिच्य, उदकाञ्जलिं भगवत्पादयोर्निक्षिप्य, प्राणानायम्य, भगवन्तं ध्यात्वा, अष्टोत्तरशतं मूलमन्त्रमावर्त्य, परिक्रम्य, नमस्कृत्य, आधारशक्त्यादिपृथिव्यन्तं तर्पयित्वा, श्रीवैकुण्ठादिपारिषदान्तं तर्पयित्वा, देवानृषीन् पितॄन् भगवदात्मकान् ध्यात्वा संतर्प्य, वस्त्रं शुचौ देशे संपीड्य, आचम्य, आवाहिततीर्थं मूलमन्त्रेणात्मनि समाहृत्य, यागभूमिं गच्छेत् ॥

सुप्रक्षालितपाणिपादः स्वाचान्तः शुचौ देशेऽतिमनोहरे निश्शब्दे भुवं संगृह्य, तां शोषणादिभिर्विशोध्य, गुरुपरंपरया परमगुरुं भगवन्तमुपगम्य, तमेव प्राप्यत्वेन प्रापकत्वेनानिष्टनिवारकत्वेनेष्टप्रापकत्वेन च यथावस्थितस्वरूपरूपगुणविभूतिलीलोपकरणविस्तारमनुसन्धाय, तमेव शरणमुपगच्छेदखिलेत्यादिना ॥

एवं शरणमुपगम्य तत्प्रसादोपबृंहितमनोवृत्तिः तमेव भगवन्तं सर्वेश्वरेश्वरमात्मनस्स्वामित्वेनानुसन्धाय, अत्यर्थप्रियाविरतविशदतमप्रत्यक्षरूपानुध्यानेन ध्यायन्नासीत ॥ ततस्तदनुभवजनितातिमात्रप्रीतिकारितपरिपूर्णकैङ्कर्यरूपपूजामारभेत ॥

भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयकल्याणतमद्रव्यमयानौपचारिकसांस्पर्शिकाभ्यवहारिकादिसमस्तभोगान् अतिप्रभूतानतिसमग्रानतिप्रियतमानत्यन्तभक्तिकृतान् अखिलपरिजनपरिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादयितुमुपक्रमत इत्यनुसन्धाय, स्वदेहे पञ्चोपनिषन्मन्त्रान् संहारक्रमेण न्यस्य, प्राणायामेनैकेन दक्षिणेन पाणिना नाभिदेशे मूलमन्त्रं न्यस्य, मन्त्रोद्भूतचण्डवाय्वाप्यायितनाभीदेशस्थवायुना शरीरमन्तर्बहिश्च सर्वतत्त्वमयं तत्त्वक्रमेण विशोष्य, पुनरपि प्राणायामेनैकेन हृद्देशे मूलमन्त्रं न्यस्य, मन्त्रोद्भूतचक्राग्निज्वालोपबृंहितजाठराग्निना दग्धतत्तत्समष्टिप्रलीनसर्वतत्त्वसर्वकिल्बिषसर्वाज्ञानतद्वासनो भूत्वा, भगवद्दक्षिणपादाङ्गुष्ठे मूलमन्त्रेण स्वात्मानं प्रवेशयेत् ॥

अपरेण प्राणायामेन भगवत्प्रसादेन भगवत्किङ्करत्वयोग्यतामापाद्य, तस्मादादाय, तद्वामपादाङ्गुष्ठाधस्तान्मूलमन्त्रेणात्मानं विन्यस्य, देववामपादाङ्गुष्ठनखशीतांशुमण्डलनिर्गलद्दिव्यामृतरसैरात्मानमभिषिच्य, भगवत्प्रसादेन तदमृतमयं सर्वकैङ्कर्यमनोहरं सर्वकैङ्कर्ययोग्यं शरीरं लब्ध्वा, तस्मिन् शरीरे पञ्चोपनिषन्मन्त्रान् सृष्टिक्रमेण विन्यस्येत् । ओं षां नमः पराय परमेष्ठ्यात्मने नमः इति मूर्ध्नि स्पृशेत् । ओं यां नमः पराय पुरुषात्मने नम इति नासाग्रे । ओं रां नमः पराय विश्वात्मने नम इति हृदये । ओं वां नमः पराय निवृत्त्यात्मने नम इति गुह्ये । ओं लां नमः पराय सर्वात्मने नम इति पादयोः । एवं न्यासं कुर्वंस्तत्तच्छक्तिमयमुद्भूतदेहं ध्यायेत् ।

पुनरपि प्राणायामेनैकेन भगवद्वामपादाङ्गुष्ठविनिस्सृतामृतधारयाऽऽत्मानमभिषिच्य कृतलाञ्छनो धृतोर्ध्वपुण्ड्रो भगवद्यागमारभेत ॥

भगवानेव सर्वं कारयतीति पूर्ववत् ध्यात्वा, हृद्यागं कृत्वा, संभारान् संभृत्यात्मनो वामपार्श्वे जलकुम्भे तोयमुत्पूर्य, गन्धपुष्पयुतं कृत्वा, सप्तकृत्वोऽभिमन्त्र्य, विशोष्य, दग्ध्वा, दिव्यामृततोयमुत्पाद्य,

अस्त्रमन्त्रेण रक्षां कृत्वा, सुरभिमुद्रां प्रदर्श्य, अन्यानि पूजाद्रव्याणि आत्मनो दक्षिणपार्श्वे निधाय, आत्मनः पुरतस्त्वास्तीर्णे पीठे क्रमेणाग्नेयादिकोणेष्वर्घ्यपाद्याचमनीयस्नानीयपात्राणि निधाय, (अस्त्र) मन्त्रेण प्रक्षाल्य, शोषणादिना पात्राणि विशोध्य, संस्कृततोयेन तानि पूरयित्वा, अर्घ्यपात्रे गन्धपुष्पकुशाग्राक्षतादीनि निक्षिपेत्। दूर्वां विष्णुपर्णीं श्यामाकं पद्मकं पाद्यपात्रे। एलालवङ्गतक्कोलला मज्जकजातीपुष्पाण्याचमनीये। [द्वे हरिद्रे मुराशैलेयतक्कोलजटामांसीमलयजगन्धचम्पकपुष्पाणि स्नानीये] सिद्धार्थकादीनि स्नानीये॥

अन्यस्मिन् पात्रे सर्वार्थतोयं संकल्प्य ततोऽर्घ्यपात्रं पाणिना स्पृष्ट्वा, मूलमन्त्रेणाभिमन्त्र्य, ओं नमो भगवतेऽर्घ्यं परिकल्पयामीत्यर्घ्यं परिकल्पयेत्॥ एवं पाद्यं परिकल्पयामीति पाद्यम्। आचमनीयं परिकल्पयामीत्याचमनीयम्। स्नानीयं परिकल्पयामीति स्नानीयम्। शुद्धोदकं परिकल्पयामीति शुद्धोदकम्। ततोऽर्घ्यजलात् जलमन्येन पात्रेणादाय यागभूमिं सर्वाणि यागद्रव्याण्यात्मानं च [प्रत्येकं] प्रोक्ष्यासनं परिकल्पयेत्॥

ओं आधारशक्त्यै नमः, ओं मूलप्रकृत्यै नमः, ओं अखिलजगदाधाराय कूर्मरूपिणे नारायणाय नमः, ओं भगवतेऽनन्ताय नागराजाय नमः, ओं [भूं] भूम्यै नमः इति यथास्थानमुपर्युपरि ध्यात्वा प्रणम्य, ओं श्रीवैकुण्ठाय दिव्यलोकाय नमः इति [श्रीवैकुण्ठ] दिव्यलोकं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्यजनपदाय नमः इति दिव्यजनपदं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्यनगराय नमः इति दिव्यनगरं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्यविमानाय नमः इति दिव्यविमानं प्रणम्य, ओं आनन्दमयाय दिव्यमण्टपरत्नाय नमः इति मण्टपरत्नं प्रणम्य, तस्मिन्, अनन्ताय [नागराजाय] नमः इत्यास्तरणं प्रणम्य, तस्मिन्नुपरि, ओं धर्माय नमः इत्याग्नेय्यां पादं विन्यस्य, ओं ज्ञानाय नमः इति नैर्ऋत्याम्, ओं वैराग्याय नमः इति वायव्याम्, ओं ऐश्वर्याय नमः इत्यैशान्याम्, ॐ अधर्माय नमः इति प्राच्यां पीठ गात्रं विन्यस्य, ॐ अज्ञानाय नमः इति दक्षिणस्याम्, ओं अवैराग्याय नमः इति प्रतीच्याम्, ओं अनैश्वर्याय नमः इत्युत्तरस्याम्, एभिः परिच्छिन्नतनुं पीठभूतं सदात्मकमनन्तं विन्यस्य, पश्चात् सर्वकार्योन्मुखं विभुमनन्तम्— ओं अनन्ताय नमः इति विन्यस्य, तस्मिन्नुपरि ओं पद्माय नमः इति पद्मं विन्यस्य, तत्पूर्वपत्रे ॐ विमलायै (चामरहस्तायै) नमः इति विमलां चामरहस्तां विन्यस्य, तत आरभ्य प्रादक्षिण्येनैशानान्तं पत्रेषु ओं उत्कर्षिण्यै (चामरहस्तायै) नमः, ओं ज्ञानायै (चामरहस्तायै) नमः ओं क्रियायै (चामरहस्तायै) नमः ओं योगायै (चामरहस्तायै) नमः, ओं प्रह्व्यै (चामरहस्तायै) नमः, ओं सत्यायै (चामरहस्तायै) नमः, ओं ईशानायै (चामरहस्तायै) नमः— इति सप्त शक्तीश्चामरहस्ता विन्यस्य, ओं अनुग्रहायै (चामरहस्तायै) नमः इति कर्णिकापूर्वभागेऽनुग्रहां चामरहस्तां विन्यस्य, ओं जगत्प्रकृतये योगपीठाय नमः इति योगपीठं विन्यस्य, ओं [दिव्याय योगपर्यङ्काय] दिव्ययोगपीठपर्यङ्काय नमः इति दिव्ययोग [पीठ]

पर्यङ्कं विन्यस्य, तस्मिन्ननन्तं नागराजं सहस्रफणाशोभितम् ओं अनन्ताय नागराजाय नमः इति विन्यस्य, ओं अनन्ताय नमः इति पुरतः पादपीठं विन्यस्य, सर्वाण्याधारशक्त्यादीनि पीठान्तानि तत्त्वानि प्रत्येकं गन्धपुष्पधूपदीपैरभ्यर्च्य, सर्वपरिवाराणां तत्तत्स्थानेषु पद्मासनानि संकल्प्य, अनन्तगरुडविष्वक्सेनानां सपीठकं पद्मं विन्यस्य, सर्वतः पुष्पाक्षतादीनि विकीर्य, योगपीठस्य पश्चिमोत्तरदिग्भागे ओं अस्मद्गुरुभ्यो नमः इति गुरून् गन्धपुष्पधूपदीपैस्संपूज्य, प्रणम्यानुज्ञाप्य भगवद्यागमारभेत ॥

कल्पिते नागभोगे समासीनं भगवन्तं नारायणं पुण्डरीकदलामलायताक्षं किरीटमकुटकेयूरहारकटकादिसर्वभूषणैर्भूषितं आकुञ्चितदक्षिणपादं प्रसारितवामपादं जानुविन्यस्तप्रसारितदक्षिणभुजं नागभोगविन्यस्तवामभुजम् ऊर्ध्वभुजद्वयेन शङ्खचक्रधरं सर्वेषां सृष्टिस्थितिप्रलयहेतुभूतमञ्जनाभं कौस्तुभेन विराजमानं चकासतमुदग्रप्रबुद्धस्फुरदपूर्वाचिन्त्यपरमसत्त्वपञ्चशक्तिमयविग्रहं पञ्चोपनिषद्भिर्ध्यात्वा, आराधनाभिमुखो भवेति [मूलमन्त्रेण] प्रार्थ्य, मूलमन्त्रेण दण्डवत्प्रणम्य, उत्थाय, स्वागतं निवेद्य, यावदाराधनसमाप्ति सान्निध्ययाचनं कुर्यात् ॥

अन्यत्र स्वाभिमतदेशे पूजा चेदेवमावाहनम्—

मन्त्रयोगस्समाह्वानं करपुष्पोपदर्शनम् । बिम्बोपवेशनं चैव योगविग्रहचिन्तनम् ॥

प्रणामश्च समुत्थानं स्वागतं पुष्पमेव च । सान्निध्ययाचनं चेति तत्राह्वानस्य सत्क्रियाः ॥

ततो भगवन्तं प्रणम्य दक्षिणतः, ओं श्रीं श्रियै नम इति श्रियमावाह्य प्रणम्य, वामतः ओं भूं भूम्यै नम इति भुवमावाह्य, तत्रैव ओं नीं नीलायै नम इति नीलामावाह्य, ओं किरीटाय मकुटाधिपतये नम इत्युपरि भगवतः पश्चिमपार्श्वे चतुर्बाहुं चतुर्वक्त्रं कृताञ्जलिपुटं मूर्ध्नि भगवत्किरीटं धारयन्तं किरीटाख्यदिव्यपुरुषं प्रणम्य, एवमेव ओं किरीटमाल्यायापीडकात्मने नम इत्यापीडकं तत्रैव (पुरस्तात्) प्रणम्य, ओं दक्षिणकुण्डलाय मकरात्मने नमः इति दक्षिणकुण्डलं दक्षिणतः प्रणम्य, ओं वामकुण्डलाय मकरात्मने नमः इति वामकुण्डलं वामतः प्रणम्य, ओं वैजयन्त्यै वनमालायै नम इति वनमालां पुरतः प्रणम्य, ओं श्रीतुलस्यै नम इति तुलसीं (देवीं) पुरतः प्रणम्य, ओं श्रीवत्साय श्रीनिवासाय नम इति श्रीवत्सं पुरतः प्रणम्य, ओं हाराय सर्वाभरणाधिपतये नम इति हारं पुरतः प्रणम्य, ओं श्रीकौस्तुभाय सर्वरत्नाधिपतये नम इति कौस्तुभं पुरतः प्रणम्य, ओं काञ्चीगुणोज्ज्वलाय पीताम्बराय नम इति पीताम्बरं पुरतः प्रणम्य, ॐ सर्वेभ्यो भगवद्भूषणेभ्यो नम इति सर्वभूषणानि सर्वतः प्रणम्य, ओं सुदर्शनाय हेतिराजाय नम इति सुदर्शनं रक्तवर्णं रक्तनेत्रं (द्वि) चतुर्भुजं कृताञ्जलिपुटं भगवन्तमालोकयन्तं तद्दर्शनानन्दबृंहितमुखं मूर्ध्नि भगवच्चक्रं धारयन्तं

दक्षिणतः प्रणम्य, ओं नन्दकाय खड्गाधिपतये नम इति नन्दकात्मानं शिरसि भगवत्खड्गं धारयन्तं तत्रैव प्रणम्य, ओं पद्माय नम इति पद्मं (पद्मं शिरसि धारयन्तं) प्रणम्य, ओं पाञ्चजन्याय शङ्खाधिपतये नम इति शङ्खात्मानं सितवर्णं (रक्तनेत्रं) द्विभुजं कृताञ्जलिपुटं शिरसि भगवच्छङ्खं धारयन्तं वामतः प्रणम्य, ओं कौमोदक्यै गदाधिपतये नम इति गदात्मानं तत्रैव प्रणम्य, तत्रैव ओं शार्ङ्गाय चापाधिपतये नम इति शार्ङ्गात्मानं प्रणम्य, ओं सर्वेभ्यो भगवद्दिव्यायुधेभ्यो नम इति सर्वायुधानि परितः प्रणम्य, ओं सर्वाभ्यो भगवत्पादारविन्दसंवाहिनीभ्यो नम इति दिव्यपादारविन्दसंवाहिनीस्समन्ततः प्रणम्य, ॐ अनन्ताय नागराजाय इति पृष्ठतोऽनन्तं (भगवन्तं) नागराजं चतुर्भुजं हलमुसलधरं कृताञ्जलिपुटं फणामणिसहस्रमण्डितोत्तमाङ्गं भगवन्तमालोकयन्तं भगवत्स्पर्शनानन्दबृंहितसर्वगात्रं ध्यात्वा प्रणम्य, ॐ सर्वेभ्यो भगवत्परिजनेभ्यो नम इत्यनुक्तानन्तपरिजनान् समन्ततः प्रणम्य, ओं भगवत्पादुकाभ्यां नम इति भगवत्पादुके पुरतः प्रणम्य, ओं सर्वेभ्यो भगवत्परिच्छदेभ्यो नम इति सर्वपरिच्छदान् समन्ततः प्रणम्य, ओं वैनतेयाय नम इत्यग्रतो (भगवतो भगवन्तं) वैनतेयमासीनं द्विभुजं कृताञ्जलिपुटं ध्यात्वा प्रणम्य, ओं नमो भगवते विष्वक्सेनायेति भगवतः प्रागुत्तरपार्श्वे दक्षिणाभिमुखं भगवन्तं विष्वक्सेनमासीनं चतुर्भुजं शङ्खचक्रधरं कृताञ्जलिपुटं नीलमेघनिभं ध्यात्वा प्रणम्य, ओं गं गजाननाय नमः, ओं जं जयत्सेनाय नमः, ओं हं हरिवक्त्राय नमः, ओं कं कालप्रकृतिसंज्ञाय नमः, ओं सर्वेभ्यो भगवद्विष्वक्सेनपरिजनेभ्यो नमः इति विष्वक्सेनपरिजनान् प्रणम्य, ओं चण्डाय द्वारपालाय नमः, ओं प्रचण्डाय द्वारपालाय नमः इति पूर्वद्वारपार्श्वयोः प्रणम्य, ओं भद्राय द्वारपालाय नमः, ओं सुभद्राय द्वारपालाय नमः इति दक्षिणद्वारपार्श्वयोः प्रणम्य, ओं जयाय द्वारपालाय नमः, ओं विजयाय द्वारपालाय नमः इति पश्चिमद्वारपार्श्वयोः प्रणम्य, ॐ धात्रे द्वारपालाय नमः, ॐ विधात्रे द्वारपालाय नमः इत्युत्तरद्वारपार्श्वयोः प्रणमेत् ॥

एते द्वारपालास्सर्वे शङ्खचक्रगदाधरा आज्ञामुद्रायुता ध्यातव्याः ॥

ॐ सर्वेभ्यो भगवद्द्वारपालेभ्यो नम इति सर्वद्वारेषु सर्वद्वारपालान् प्रणम्य, ॐ कुमुदाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इति पूर्वस्यां दिशि पार्षदेश्वरं कुमुदं प्रणम्य, ॐ कुमुदाक्षाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इत्याग्नेय्यां कुमुदाक्षं प्रणम्य, ॐ पुण्डरीकाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इति दक्षिणस्यां पुण्डरीकं प्रणम्य, ॐ वामनाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इति नैर्ऋत्यां वामनं प्रणम्य, ॐ शङ्कुकर्णाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इति पश्चिमस्यां शङ्कुकर्णं प्रणम्य, ॐ सर्पनेत्राय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इति वायव्यां सर्पनेत्रं प्रणम्य, ॐ सुमुखाय गणाधिपतये सवाहनपरिवारप्रहरणाय नम इत्युदीच्यां सुमुखं प्रणम्य, ॐ सुप्रतिष्ठिताय गणाधि-

पतये सवाहनपरिवारप्रहरणाय नम इत्यैशान्यां सुप्रतिष्ठितं प्रणम्य, ॐ सर्वेभ्यो भगवत्पारिषदेभ्यो नम इति सर्वस्माद्बहिः प्रणमेत् ॥

अन्यत्रावाह्य पूजायामावाहनस्थानानि परमव्योमक्षीरार्णवादित्यमण्डलहृदयानि मधुराद्वारकागोकुलायोध्यादीनि दिव्यावतारस्थानानि चान्यानि पौराणिकानि श्रीरङ्गादीनि च यथारुचि ॥

एवं भगवन्तं नारायणं देवीभूषणायुधपरिजनपरिच्छदद्वारपालपारिषदैस्सेव्यमानं स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं क्लेशकर्माद्यशेषदोषासंस्पृष्टं स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः-प्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवं ध्यात्वा, प्रणम्य, मूलमन्त्रेण स्वात्मानं देवाय निवेद्य, प्रणम्यानुज्ञाप्य, भगवत्पूजामारभेत ॥

पात्रेण पूर्वस्थापितार्घ्यपात्रादर्घ्यजलमादाय पाणिभ्यां मुखसममुद्धृत्य, भगवन्! इदं प्रतिगृह्णीष्वेति चिन्तयन् भगवन्मुखे दर्शयित्वा भगवद्दक्षिणहस्ते किंचित्प्रदायार्घ्यं प्रतिग्रहपात्रे प्रक्षिपेत् । हस्तौ प्रक्षाल्य पादयोः पुष्पाणि समर्प्य पाद्यपात्रात्पाद्यजलमादाय पादयोः किंचिद्दत्वा मनसा पादौ प्रक्षालयन् पाद्यं प्रतिग्रहपात्रे निक्षिपेत् । (हस्तौ प्रक्षाल्य) वस्त्रेण पादौ संमृज्य गन्धपुष्पाणि दत्वा, आचमनीयपात्रादाचमनीयमादाय भगवद्दक्षिणहस्ते किंचित्प्रदाय भगवद्वदने आचमनीयं समर्पितमिति मनसा भावयन् शेषमाचमनीयं प्रतिग्रहपात्रे निक्षिपेत् । ततो गन्धपुष्पधूपदीपाचमनमुखवासताम्बूलादिनिवेदनं कृत्वा, प्रणम्यात्मानमात्मीयं च सर्वं भगवन्! नित्यकिंकरत्वाय स्वीकुर्विति भगवते निवेदयेत् । ततः स्नानार्थमासनमानीय गन्धादिभिरभ्यर्च्य भगवन्तं प्रणम्यानुज्ञाप्य, पादुके प्रदाय, तत्रोपविष्टे माल्यभूषणवस्त्राण्यपनीय, विष्वक्सेनाय दत्वा, स्नानशाटिकां प्रदाय, पाद्याचनीयपादपीठप्रदानदन्तकाष्ठजिह्वानिर्लेहनगण्डूषमुखप्रक्षालनाचमनादर्शप्रदर्शनहस्तप्रक्षालन-मुखवासताम्बूलतैलाभ्यङ्गोद्वर्तामलकतोयकङ्कतप्लोतदेहशोधनशाटिकाप्रदानहरिद्रालेपनप्रक्षालनवस्त्रोत्तरीययज्ञोपवीत-प्रदानपाद्याचमनपवित्रप्रदानगन्धपुष्पधूपदीपाचमननृत्तगीतवाद्यादिसर्वमङ्गलसंयुक्ताभिषेकनीराजनाचमनदेहशोधन—प्लोतवस्त्रोत्तरीययज्ञोपवीताचमनकूर्चप्रसारणसहस्रधाराभिषेकनीराजनाचमनदेहशोधनप्लोतवस्त्रोत्तरीययज्ञोपवीता—चमनानि दद्यात् ॥

ततोऽलङ्कारासनमभ्यर्च्य प्रणम्यानुज्ञाप्य, पादुके प्रदाय, तत्रोपविष्टे पूर्ववत् स्नानीयवर्जमर्घ्यपाद्याचमनीयशुद्धोदकानि मन्त्रेण कल्पयित्वा भगवते गन्धपुष्पपादसंमर्दनवस्त्रोत्तरीयभूषणोपवीतार्घ्यपाद्याचमनीयानि दत्वा, सर्वपरिवाराणां स्नानवस्त्रादिभूषणान्तं दत्वा, गन्धादीन् देवानन्तरं सर्वपरिवाराणां प्रत्येकं प्रदाय, धूपदीपाचमनीयानि दद्यात् ॥ अथवा सर्वपरिवाराणां गन्धादीनेव दद्यात् ॥

गन्धपुष्पप्रदानालङ्काराञ्जनोर्ध्वपुण्ड्रादर्शधूपदीपाचमनध्वजच्छत्रचामरवाहनशङ्खचिह्नकाहलभेर्यादिसकल-नृत्तगीतवाद्यादिभिरभ्यर्च्य मूलमन्त्रेण पुष्पं प्रदाय, प्रत्यक्षरं पुष्पं प्रदाय द्वादशाक्षरेण विष्णुषडक्षरेण विष्णु-गायत्र्या पञ्चोपनिषदैः पुरुषसूक्तर्ग्भिरन्यैश्च भगवन्मन्त्रैश्शक्तश्चेत्पुष्पं प्रदाय, देव्यादिदिव्यपारिषदान्तं तत्तन्मन्त्रेण पुष्पं दत्वा प्रणम्य, प्रतिदिशं प्रदक्षिणप्रणामपूर्वकं भगवते पुष्पाञ्जलिं दत्वा पुरतः प्रणम्य, श्रुतिसुखैः स्तोत्रैः स्तुत्वा, आत्मानं नित्यकिंकरतया निवेद्य, तथैव ध्यात्वा, यथाशक्ति मूलमन्त्रं जपित्वा, सर्वभोगप्रपूर्णीं मात्रां दत्वा, मुखवासताम्बूले प्रदाय, अर्घ्यं दत्वा, भोज्यासनमभ्यर्च्य प्रणम्योनुज्ञाप्य पादुके प्रदाय, तत्रोपविष्टे पाद्याचमनीयार्हणानि दत्वा, गुडं माक्षिकं सर्पिर्दधि क्षीरं चेति पात्रे निक्षिप्य शोषणादिभिर्विशोध्य, अर्घ्यजलेन संप्रोक्ष्य, मधुपर्कमवनतशिरा हर्षोत्फुल्लनयनो हृष्टमना भूत्वा प्रदायाचमनीयं दद्यात् । यत्किंचिद्द्रव्यं भगवते दीयते तत्सर्वं शोषणादिभिर्विशोध्यार्घ्यजलेन संप्रोक्ष्य दद्यात् ॥

ततश्च गां स्वर्णरत्नादिकं च यथाशक्ति दद्यात् । ततस्सुसंस्कृतान्नमाज्याढ्यं दधिक्षीरमधूनि च फलमूलव्यञ्जनानि मोदकांश्चान्यानि च लोके प्रियतमान्यात्मनश्चेष्टानि शास्त्राविरुद्धानि संभृत्य शोषणादिभि-र्विशोध्यार्घ्यजलेन संप्रोक्ष्यास्त्रमन्त्रेण रक्षां कृत्वा, सुरभिमुद्रां प्रदर्श्य अर्हणपूर्वकं हविर्निवेदयेत् ॥ अतिप्रभूत-मतिसमग्रमतिप्रियतममत्यन्तभक्तिकृतमिदं स्वीकुर्विति प्रणामपूर्वकमत्यन्तसाध्वसविनयावनतो भूत्वा निवेदयेत् ॥

ततश्चानुपानतर्पणे प्रदाय हस्तप्रक्षालनाचमनहस्तसंमार्जनचन्दनमुखवासताम्बूलादीनि दत्वा प्रणम्य पुनर्मन्त्रासनं कूर्चेन मार्जयित्वा, अभ्यर्च्यानुज्ञाप्य, पादुके प्रदाय तत्रोपविष्टे माल्यादिकमपोह्य विष्वक्सेनाय दत्वा, पाद्याचमनीयगन्धपुष्पधूपदीपाचमनापूपफलादीनि दत्वा, आचमनमुखवासताम्बूलनृत्तगीतवाद्यादिभि-रभ्यर्च्य, प्रदक्षिणीकृत्य दण्डवत्प्रणम्य, पर्यङ्कासनमभ्यर्च्यानुज्ञाप्य पादुके प्रदाय, तत्रोपविष्टे पाद्याचमने दत्वा माल्यभूषणवस्त्राण्यपनीय विष्वक्सेनाय दत्वा सुखशयनोचितं सुखस्पर्शं च वासस्तदुचितानि भूषणान्युपवीतं च प्रदायाचमनीयं दत्वा गन्धपुष्पधूपदीपाचमनमुखवासताम्बूलादिभिरभ्यर्च्य श्रुतिसुखैः स्तोत्रैरभिष्टूय भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयकल्याणतमद्रव्य-मयानौपचारिकसांस्पर्शिकाभ्यवहारिकादिसमस्तभोगानतिप्रभूतानतिसमग्रानतिप्रियतमानत्यन्तभक्तिकृतानखिलपरि-जनपरिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादितवानित्यनुसंधाय, भगवन्तमनुज्ञाप्य, भगवन्निवेदित-हविश्शेषाद्विष्वक्सेनाय किंचिदुद्धृत्य निधायान्यत्सर्वं स्वाचार्यप्रमुखेभ्यो वैष्णवेभ्यो दत्वा, भगवद्यागावशिष्टै-र्जलादिभिर्द्रव्यैर्विष्वक्सेनमभ्यर्च्य, पूर्वोद्धृतं हविश्च दत्वा, तदर्चनं परिसमाप्य, भगवन्तमष्टाङ्गेन प्रणामेन प्रणम्य शरणमुपगच्छेत् ॥

मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥

प्रदक्षिणसमेतेन त्वेवंरूपेण सर्वदा ।
अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः ॥

इत्युक्तोऽष्टाङ्गप्रणामः । शरणागतिप्रकारश्च पूर्वोक्तः ॥

ततोऽर्घ्यजलं प्रदाय भगवन्तमनुज्ञाप्य पूजां समापयेत् ॥

इति श्रीभगवद्रामानुजविरचितो नित्यग्रन्थस्समाप्तः ॥



श्रीभगवद्रामानुजग्रन्थमाला समाप्ता ।

श्रीमते रामानुजाय नमः ।

# गीताभाष्योपात्तप्रमाणवाक्यानामकारादिक्रमेण सूची ॥

[ संख्या — पृष्ठसंख्या ]

# ॥ श्रीमद्भगवद्गीतापादानुक्रमणिका ॥

पा. पादादि. अ.– अध्यायसंख्या. श्लो. श्लोकसंख्या.

| | | |
|---|---|---|
| तत्स्वयं योग | ४ | ३८ |
| तथा तवामी | ११ | २८ |
| तथा तेनेदमावृतम् | ३ | ३८ |
| तथाऽऽत्मा नोप | १३ | ३२ |
| तथा देहान्तर | २ | १३ |
| तथाऽपि त्वं महा | २ | २६ |
| तथाऽऽप्नोति | १८ | ५० |
| तथा प्रलीनः | १४ | १५ |
| तथाऽन्तर्ज्योति | ५ | २४ |
| तथा मानावमानयोः | ६ | ७ |
| ,, | १२ | १८ |
| तथा शरीराणि | २ | २२ |
| तथा सर्वाणि | ९ | ६ |
| तथैव च पितामहाः | १ | ३४ |
| तथैव नाशाय | ११ | २९ |
| तदर्थं कर्म | ३ | ९ |
| तदस्य हरति | २ | ६७ |
| तदहं भक्त्युपहृतं | ९ | २६ |
| तदा गन्तासि | २ | ५२ |
| तदाऽऽत्मानं | ४ | ७ |
| तदा योगमवा | २ | ५३ |
| तदित्यनभि | १७ | २५ |
| तदेकं वद | ३ | २ |
| तदेव मे दर्शय | ११ | ४५ |
| तदेव मे रूप | ११ | ४९ |
| तदोत्तमविदां | १४ | १४ |
| तद्दानं सात्त्विकं | १७ | २० |
| तद्धाम परमं मम | ८ | २१ |
| ,, | १५ | ६ |
| तद्बुद्धयस्तदा | ५ | १७ |
| तद्भवत्यल्प | ७ | २३ |
| तद्योगैरपि गम्यते | ५ | ५ |
| तद्राजसमुदा | १७ | २१ |
| ,, | १८ | २४ |
| तद्वत्कामा यं | २ | ७० |
| तद्विद्धि प्रणिपा | ४ | ३४ |
| तद्विद्धि भरतर्षभ | १३ | २६ |
| तन्निबध्नाति | १४ | ७ |
| तन्निबध्नाति भारत | १४ | ८ |
| तन्निष्ठास्तत्परा | ५ | १७ |
| तन्मे क्षेमतरं भवेत् | १ | ४६ |
| तन्मे ब्रूहि | ५ | १ |
| तपश्चास्मि तपस्विषु | ७ | ९ |
| तपस्तत्त्रिविधं नरैः | १७ | १७ |
| तपस्तप्तं कृतं | १७ | २८ |
| तपस्विभ्योऽधिको | ६ | ४६ |
| तपाम्यहमहं वर्षं | ९ | १९ |
| तपो दम्भेन | १७ | १८ |
| तपो दानं | १० | ५ |
| तपो मानस | १७ | १६ |
| तप्यन्ते ये तपो | १७ | ५ |
| तमसः परमुच्यते | १३ | १७ |
| तमस्त्वज्ञानजं | १४ | ८ |
| तमस्येतानि | १४ | १३ |
| तमस्सत्त्वं | १४ | १० |
| तमाहुः पण्डितं | ४ | १९ |
| तमाहुः परमां | ८ | २१ |
| तमुवाच हृषीकेशः | २ | १० |
| तमेव चाद्यं पुरुषं | १५ | ४ |
| तमेव शरणं गच्छ | १८ | ६२ |
| तमोद्वारैस्त्रिभिर्नरः | १६ | २२ |
| तयाऽपहृत | २ | ४४ |
| तयोर्न वशमा | ३ | ३४ |
| तयोस्तु कर्म | ५ | २ |
| तव शिष्येण | १ | ३ |
| तव सौम्यं | ११ | ५१ |
| तवापि वक्त्राणि | ११ | २९ |
| तस्माच्छास्त्रं | १६ | २४ |
| तस्मात्त्वमिन्द्रि | ३ | ४१ |
| तस्मात्त्वमुत्तिष्ठ | ११ | ३३ |
| तस्मात्प्रणम्य | ११ | ४४ |
| तस्मात्सर्वगतं ब्रह्म | ३ | १५ |
| तस्मात्सर्वाणि | २ | ३० |
| तस्मात्सर्वेषु कालेषु | ८ | ७ |
| ,, | ८ | २७ |
| तस्मादज्ञानसंभूतं | ४ | ४२ |
| तस्मादपरिहार्येऽर्थे | २ | २७ |
| तस्मादसक्तः सततं | ३ | १९ |
| तस्मादुत्तिष्ठ | २ | ३७ |
| तस्मादेतत्त्रयं | १६ | २१ |
| तस्मादेवं | २ | २५ |
| तस्मादोमित्युदा | १७ | २४ |
| तस्माद्ब्रह्मणि ते | ५ | १९ |
| तस्माद्यस्य महा | २ | ६८ |
| तस्माद्युध्यस्व | २ | १८ |
| तस्माद्योगाय | २ | ५० |
| तस्माद्योगी | ६ | ४६ |
| तस्मान्नार्हा वयं | १ | ३७ |
| तस्मिन् गर्भं | १४ | ३ |
| तस्य कर्तारमपि | ४ | १३ |
| तस्य कार्यं न | ३ | १७ |
| तस्यतस्याचलां | ७ | २१ |
| तस्य प्रज्ञा प्रति | २ | ५७ |
| ,, | २ | ५८ |
| ,, | २ | ६१ |
| ,, | २ | ६८ |
| तस्य संजनयन् | १ | १२ |
| तस्यां जागर्ति | २ | ६९ |
| तस्याराधनमीहते | ७ | २२ |
| तस्याहं न प्रण० | ६ | ३० |
| तस्याहं निग्रहं | ६ | ३४ |
| तस्याहं सुलभः | ८ | १४ |
| तांस्तथैव भजा | ४ | ११ |
| तांस्तितिक्षस्व | २ | १४ |
| तानकृत्स्नविदो | ३ | २९ |
| तानहं द्विषतः | १६ | १९ |
| तानि सर्वाणि | २ | ६१ |
| तान्निबोध द्विजोत्तम | १ | ७ |
| तान्यहं वेद | ४ | ५ |
| तान्विद्ध्यासुर | १७ | ६ |
| तान्समीक्ष्य स | १ | २७ |
| तामसं परिचक्षते | १७ | १३ |
| तामसः परि | १८ | ७ |
| तामसी चेति तां | १७ | २ |
| तामेव विदधा | ७ | २१ |
| तावान्सर्वेषु वेदेषु | २ | ४६ |
| तासां ब्रह्म | १४ | ४ |
| तिष्ठन्तं परमेश्वरम् | १३ | २७ |
| तीक्ष्णरूक्षविदा | १७ | ९ |
| तुमुलो व्यनुनाद | १ | १९ |
| तुल्यनिन्दात्म | १४ | २४ |
| तुल्यनिन्दास्तुति | १२ | १९ |
| तुल्यप्रियाप्रियो | १४ | २४ |
| तुल्यो मित्रारि | १४ | २५ |
| तुष्यन्ति च रमन्ति | १० | ९ |
| तृष्णासङ्गसमु | १४ | ७ |
| तेजश्चास्मि | ७ | ९ |
| तेजस्तेजस्विनाम् | ७ | १० |
| ,, | १० | ३६ |
| तेजः क्षमा धृतिः | १६ | ३ |
| तेजोभिरापूर्य | ११ | ३० |
| तेजोमयं विश्व | ११ | ४७ |
| तेजोराशिं सर्वतो | ११ | १७ |
| ते तं भुक्त्वा | ९ | २१ |
| ते त्वघं भुञ्जते | ३ | १३ |
| ते देवा भावयन्तु | ३ | ११ |
| ते द्वन्द्वमोह | ७ | २८ |
| तेन मुह्यन्ति | ५ | १५ |
| तेनैव रूपेण | ११ | ४६ |